श्रीराजचूडामणिदीक्षितविरचितः

# काव्यदर्पणः

## (षडुल्लासात्मकः)

*सम्पादिका*

**श्रीमती डॉ० लता**

व्याख्यात्री, राष्ट्रियसंस्कृतविद्यापीठम्

तिरुपतिः

2001

न्यू भारतीय बुक कार्पोरेशन

दिल्ली भारत

# आमुखम्

न्यायमीमांसालंकारशास्त्रमर्मज्ञेन रत्नखेटश्रीनिवासदीक्षितपुत्रेण यज्ञनारायणापरनामकेन श्री राजचूडामणिदीक्षितेन ईसवीय षोडशशतकान्तिमभाग सप्तदशशतकापूर्वार्धभागयोः भुवमिमामलंकृतवता विरचितः काव्यदर्पणाख्यो ग्रन्थः शतसंवत्सरेभ्यः प्राक् आन्ध्रलिप्यां। मुद्रापितः इदानीं दुर्लभो जातः। मम्मटकृतकाव्यप्रकाशकारिकाव्याख्यानरूपोऽयं काव्यदर्पणः प्रतिविषयं पूर्वतनानां बहूनाम् आलंकारिकाणां मनानि विवेचयन् स्वयं च कंचन निष्कर्षं कुर्वन् ग्रन्थकर्तृः अनितरसाधारणं मेधाविलासं स्वतन्त्रचिन्तनशक्तिं च प्रकाशयति।

इमं काव्यदर्पणमुल्लासषट्कसहितं चतुर्भिः हस्तलिखिततालकोशादिभिः संतोल्य समुचितपाठभेदविषयानुक्रमणिकादिसहित सम्यक् संपाद्य श्रीमती लता अधुना प्रकाशयतीति महतः प्रमोदस्य स्थानम्। अत्र विस्तृते उपोध्दाते अलंकार शास्त्रस्योत्पत्तिः विकासः, अलंकारशास्त्रप्रणेतारः, अलंकार शास्त्रसंप्रदायाः, राजचूडामणिदीक्षितस्य चरितं ग्रन्थाश्च, काव्यदर्पणप्रतिपाद्यम् इत्येतान् विषयान् अधिकृत्य सुष्ठु श्रीमती लता विवेचितवती।

आधुनिकविमर्शमार्गमवलम्ब्य प्रकाश्यमानः काव्यदर्पणः आलंकारिकाणां महान्तमुपकारं प्रमोदं च आवक्ष्यतीति द्रढीयान् मम विश्वासः।

इमं बहुतरान् ग्रन्थान् सविमर्शं प्रकाश्य उत्तरोत्तरज्ञानसंपदनं प्राप्य श्रीमती लता आयुरारोग्यादिभिः उत्तरोत्तरमभिवर्धतामित्याशासे।

**एन्. एस्. रामानुजनुजताताचार्यः**

**१.३.२००१**

# श्री कृतज्ञतानिवेदनम्

ज्ञानानन्दमयं देवं निर्मलस्फटिकाकृतिम्।
आधारं सर्वविद्यानां हयग्रीवमुपास्महे॥
लक्ष्मीनाथसमारम्भां नाथयामुनमध्यमाम्।
अस्मदाचार्यपर्यन्तां वन्देगुरुपरम्पराम्॥

काव्यदर्पणः इत्याख्यः ग्रन्थ शतवर्षेभ्यः प्राक् तेलुगुलिप्यां मुद्रापितम्। साक्षात् संस्कृतवाङ्मय रूपोऽयं ग्रन्थः संस्कृतभाषायामपि अपेक्षितं वर्तते इत्यतः मया बहुतालकोशप्रतिभिः सह तोलनं कृत्वा समर्पितम्। अस्मिन् ग्रन्थे काव्यप्रकाशस्थ विभिन्न कारिकाभ्यः, अन्येभ्यः साहित्यग्रन्थेभ्यश्च उदाहरणपुरस्सरं प्रख्यातविदुषा श्रीराजचूडामणिदीक्षितेन विवरणरूपे प्रदर्शितम्।

आदौ अस्य ग्रन्थस्य लेखनाय आमुखादिवचनैः मां पोत्साहितवद्भ्यः मम पितृवर्येभ्यः श्रीमद्भ्यः नावलपाक्कशठकोपरामनुजताताचार्येभ्यः आदौ सानन्दं नमस्कारपूर्वकं हार्दिकान् धन्यवादान् समर्पयामि। अनन्तरं अस्मिन् कर्मणि बहुधा साहाय्यं दत्तवद्भ्यः गुरुवर्येभ्यः विद्यापीठस्य साहित्यविभागाध्यक्ष्येभ्यः कुलसचिवेभ्यः प्रो० लक्ष्मीनरसिंहभट्टमहाशेयेभ्यः नमस्कृतिपूर्विकां कृतज्ञतां निवेदयामि। एतेषां सूचनानुसारेण एव क्रमरूपे ग्रन्थः लिखितः।

अस्य ग्रन्थस्य मुद्रणार्थं मां सूचितवद्भ्यः ग्रन्थालयविभागाध्यक्षेभ्यः डॉ० जि० गोपालरेड्डि महोदयेभ्यः भूयोभूयः कार्तज्ञयं आवेदयामि। एतेषां सूचनानुसारेण एव ग्रन्थोऽसौ मुद्रणाय प्रेषितः। एवं मां समर्थितवद्भ्यः हार्दिकान् धन्यवादान् व्याहरामि। एवं अन्येभ्यः सुहृज्जनेभ्यः, सहकृतवद्भ्यः धन्यवादान् प्रकटीकरोमि।

विशिष्य अस्य ग्रन्थस्य पुस्तकरूपे आनेतुं परिश्रमितवद्भ्यः, प्रकाशनाय मुद्रणाय च अंगीकृतवद्भ्यः न्यू भारतीय बुक् कार्पोरेशन् अधिकारिभ्यः प्रणामपूर्वकं सानन्दं धन्यवादान् व्याहरामि।

इत्थं सविनयं
लता
व्याख्यात्री
राष्ट्रियसंस्कृताविद्यापीठम्
तिरुपतिः

# विषयसूचिका

# उपोद्घातः

## अलंकारशास्त्रस्योत्पत्तिः विकासश्च

काव्यस्वरूपगुणालंकारादीनां निष्कर्षाय प्रवृत्तस्य अलंकारशास्त्रस्य क्रियाकल्पः[१] काव्यालंकारः[२] काव्यमीमांसा[३] साहित्य विद्येति[४] संज्ञान्तराण्यासन्निति साहित्यलक्षणगन्थेभ्यः अवगम्यते। काव्यतत्त्वसाक्षात्कार एव अलंकारशास्त्रस्य प्रधानं लक्ष्यम्। तत्त्वस्यास्यान्वेषणमलंकारशास्त्रे नैकविधं प्रवृत्तमिति नाविदिंत विपश्चिताम्।

अलंकारशास्त्रापराभिधानं साहित्यं कदा शास्त्रत्वेन निर्गलितमिति वक्तुं न शक्यते।

सर्वाण्यप्यास्तिकानि शास्त्राणि वेदैकप्रभवानीव अलंकारशास्त्रमपि वेदमूलमिच्छन्ति सांप्रदायिकाः।

यद्यपि काव्यशास्त्रस्य वेदेन सह साक्षात्संबन्धो न दरीदृश्यते, तथापि कविर्मनीषीतथापि 'परिभूः स्वयंभूः' इति ऋग्वेदे समुपलब्धं कविशब्दं, 'देवस्य पश्य काव्यं न ममार न जीर्यति' इत्यथर्ववेदेपठितं काव्यशब्दं च परिशील्य, वेदे प्रारम्भिकीं साहित्यिकीं सुषमामवलोकयन्ति निर्मत्सरा विपश्चितः। ऋग्वेदे–

**उतत्त्वः पश्यन्न ददर्श वाचमुतत्त्वः श्रृण्वन्न श्रृणोत्येनाम्।**
**उतो त्वस्मै तन्वं विसस्रे जायेव पत्यु उशती सुवासाः॥**

[५] इति मन्त्रे वाचः महिमा प्रदर्शितः। उक्तेः वैचित्र्यमत्र अभिव्यक्तम्। काव्यस्य उक्तिवैचित्र्येण प्रथमं चित्ताकर्षणं भवतीति ऋग्वेदकवीनाम् अभिप्रायः अनेने सूचितो भवति।

उक्तिवैचित्र्यं व्यवस्थितक्रमेण प्रवृद्वं सत् शास्त्रस्वभावं प्राप्य अलंकारशास्त्रमिति संज्ञया व्यवहृतमिति केचन विमर्शकाः अभिप्रयन्ति।

प्राचीनतमे ऋग्वेदे उपमा इति पदस्य प्रयोगो दृश्यते।[२] तुल्यरूपार्थ एव उपमापदस्य। यास्केन (कि. पू. ६००) पाणिनिना च (कि. पू. ४००) कृतं उपमाया अर्थविवरणं ऋग्वेदे

---

१. वात्स्यायनकामसूत्रजयमङ्गलाव्याख्याने

२. काव्यालंकार इत्येष यथाबुद्धि विधास्यते-भामहः काव्यालंकारे

३. राजशेखरः

४. 'पञ्चमी साहित्यविद्या'–राजशेखरः–

५. .x. 71.4

६. .I.. 31.15;.V. 34.9.

प्रयुक्तस्य उपमाशब्दस्य तुल्यरूपार्थकमुपोद्बलयति। वेदेषु काव्यविमर्शतत्त्वानि यद्यपि नैव दृश्यन्ते, तथापि वैदिकसाहित्ये स्फूर्त्या विरचिताः काव्यांशाः विपुला वर्तन्ते। तत्र भूषणसहशानि उपमादि पदानि यद्यपि दृश्यन्ते तथापि तानि काव्यसृष्टेः प्रासङ्गिकान्येव इति विदुषामभिप्रायः।

'इव, यथा, न, चित्, नु इति् निपातैः उपमाविचारः निरुक्तग्रन्थे प्रस्तुतः। तत्र भूतोपमा, रूपोपमा, कर्मोपमा, सिद्धोपमा, लुप्तोपमा इति उपमाभपेदाश्च निर्दिष्टाः।

पाणिनिना [१] अष्टाध्याय्यां 'उपमा, उपमितं, सामान्यम्' इत्यादि पारिभाषिकपदानि निर्दिश्यन्ते। कात्यायनपतञ्जलिप्रभृतयः उपमायाः अर्थं पाणिनिवदेव वर्णयन्ति। 'मान' पदस्य 'परिमाण' रूपार्थं पतञ्जलिः प्रतिपादयति। व्याकरणदृष्ट्या उपमाशब्दस्य तुल्यतारूपः अर्थः काव्योपमायाः समीपसंबन्धं द्योतयति।

वैयाकरणैः चर्चितः उपमाविषयः अलंकारशास्त्रे उपमाविभजने बहूपकरोति।

व्याकरणशास्त्रात् उपकृतमिदम् अलंकारशास्त्रम् इत्यत्र नास्ति संदेहः। अलंकारशास्त्रमासीदित्यस्य क्रिस्तोः पूर्वतनेषु पुरातनग्रन्थेषु प्रमाणानि नैवोपलभ्यन्ते, छान्दोग्योपनिषदि विद्याशाखाः निर्दिश्यन्ते। तत्र अलंकारशास्त्रं नैव निर्दिष्टम्। याज्ञवल्क्येन प्रतिपादितेषु चतुर्दश शास्त्रेषु एतन्नान्तर्भूतम्। क्रिस्तोः प्रारम्भकालस्य ललितविस्तरे बौद्धग्रन्थे काव्यकरणग्रन्थानां नाट्यस्य च निर्देशः वर्तते। काव्यविमर्शनपरोऽयम् विषयः इति केचन विमर्शकाः अभिप्रयन्ति। शुक्रनीतिग्रन्थे अर्थशास्त्र, कामशास्त्र, शिल्पशास्त्र इति द्वात्रिंशत् संख्यकानां शास्त्राणां परिगणनावसरे अलंकारशास्त्रस्यापि निर्देशो वर्तते। इत्थं संस्कृतसाहित्यविमर्शः अलंकारशास्त्रनाम्ना क्रिस्तोः दशमे शतके प्रथित इति ज्ञायते। परं ततः पूर्वमपि शास्त्रस्यास्य विमर्शनं प्रारब्धम् इत्यस्य बहूनि प्रमाणानि उपलभ्यन्ते। अश्वघोषकाव्येषु उपमारूपकादीनाम् अलंकाराणां पारिभाषिकाः प्रयोगाः क्रिस्तोः प्रथमशतकस्य शिलाशासनेषु लब्धानि गद्यपद्यानि संस्कृतकाव्यविमर्शनं क्रिस्तोः प्रारम्भशतके एव शास्त्ररूपतया प्रारब्धमिति सूचयन्ति। ततः गुप्तकालिकेभ्यः ग्रन्थेभ्यः साहित्यशास्त्रस्य प्रगतिः विशेषतः परिलक्ष्यते। दण्डिभामहादिभिः स्वग्रन्थेषु प्राचीनालंकारकिाः निर्दिष्टाः। संस्कृत काव्यविमर्शनं दशमे शतके निर्दिष्टरूपशास्त्रतया प्रतिष्ठापितमासीत्।

नाटकलक्षणमाधृत्य कृतं शास्त्रमपि पुरातनम्। कृशाखः शिलालिः इति द्वावपि नटसूत्रकर्तृत्वेन पाणिनिना निर्दिष्टौ (iv. ३.११०-१११) परं नाटकलक्षणग्रन्थः अतिप्राचीनः अद्यापि नोपलब्धः। नाट्यलक्षणप्रतिपादकः उपलब्धग्रन्थः नाट्यशास्त्रे प्राचीनतमः इति वक्तुं शक्यते। ग्रन्थाभिधेयपरिशीलनेन अलंकाररसादयः काव्यतत्वरूपाः बहुचर्च्यन्ते।

अलंकारशब्दवत् रसशब्दोऽपि प्राचीनः। ऋग्वेदेऽपि रसशब्दः प्रयुक्तः। वेदकालात् प्रचलिताः अलंकाराणां रसानां च विचारा कदा पारिभाषिकतां प्राप्ताः इति निर्दिष्टतया वक्तुं नैव शक्यते । काव्यविमर्शनस्य अलंकाररशास्त्राभिधानं कथमागतमित्यस्यापि समाधानं वक्तुं नैव शक्यते, शास्त्रमिदं क्रिस्तोः परम् आदिभागे अंकुरितम्, पञ्चमे शतके पल्लवितं, दशमे शतके पुष्पितं, सप्तदशशतकेफलितमिति वक्तुं पार्यते।

---

१. अष्टाध्यायी II.1.55; III 1.10, 2, 79, 4.45 V 4.97, 137, VI 1, 204, 2.2, 72, 80, 127, 145, 169, II 1.56; 3.72

# अलंकारशास्त्रप्रणेतारः

अलंकारप्रबन्धकर्तारः प्राचीनाः अर्वाचीनाश्च आचार्याः बहवः सञ्जाताः। ते च यथायथं क्रमेण भरत-भामह-दण्डी-वामन-भट्टोद्भट-रुद्रट-भट्टनायक-राजशेखर-मुकुलभट्ट-प्रतीहारेन्दुराज-आनन्दवर्धन-महिमभट्ट-कुन्तक-अभिनवगुप्त-मम्मट-विद्यानाथ- विश्वनाथ अप्पय्यदीक्षित- जगन्नाथप्रभृतयः प्रधानाः। तत्र तेषां अतिसंक्षिप्तः परिचयः प्रदीयते।

[१] **भरतः**— रससंप्रदायस्य प्राचीनतमः आचार्योऽयम्। एतन्निर्मितं नाट्यशास्त्रंम् अलंकारग्रन्थेषु प्राचीनतमग्रन्थत्वेन प्रथितम्। नाट्यशास्त्रेऽस्मिन् रससिद्धान्तः प्रप्रथमतया प्रस्तुतो वर्तते। नाट्यशास्त्रस्यास्य अनेकानि व्याख्यानानि नामतः समुपलभ्यन्ते। नाट्यशास्त्रस्य व्याख्यातृषु भट्टलोल्लटः, श्री-शङ्कुकः-भट्टनायकः-अभिनवगुप्तः- कीर्तिधरः - मातृगुप्ताचार्यः प्रसिद्धाः। सांप्रतिकं नाट्यशास्त्रं **षट्त्रिंशदध्यायात्मकंम् उपलभ्यते**।

[२]**भामहः**

अयं **भामहः** काश्मीरदेशीयः। अयं **काव्यालंकारख्ये** स्वग्रन्थे **षट्परिच्छेदेषु अनेकान् काव्यालंकारसंवद्धान्** अंशान् परिशीलितवान्। प्रथमें परिच्छेदे काव्यलक्षणम्, काव्यविभागः, द्वितीयतृतीयपरिच्छेदयोः अलंकाराः चतुर्थपरिच्छेदे काव्यादोषाः पञ्चमपरिच्छेदे न्यायशास्त्रविषयकाः केचन दोषाः विश्लेषिताः। षष्ठे च परिच्छेदे शब्दानां साधुत्व असाधुत्वविचारः परिशीलितः।

प्रथमपरिच्छेदे काव्यस्य निर्वचनम्, संस्कृतप्राकृतादिभेदेन, **गद्य-पद्य-चम्पवादिभेदेन च काव्यं विभज्य द्वितीये परिच्छेदे गुणान्** गणयामास। तत्र तेन त्रयः गुणाः एव स्वीकृताः। अलंकारान् निर्वक्तुम् आभ्य **सर्वेऽप्यलंकाराः वक्रोक्तिं** उपजीव्यैव भवन्तीति निर्दिशति।

**दण्डी**

दण्डिनः **काव्यादर्शाख्यो** ग्रन्थः **अलंकारशास्त्रे** प्रसिद्धः। अत्र **त्रयः** परिच्छेदाः सन्ति। अस्मिन् ग्रन्थे आहत्य **षषृयुत्तरषषृिशतं** श्लोकाः वर्तनते। तत्र प्रथमे परिच्छेदे **काव्यभेदाः, महाकाव्यादीनां** लक्षणम् काव्यस्य कारणं च निर्दिशति। द्वितीये परिच्छेदे **अलंकाराः** निर्दिष्टाः। तृतीये परिच्छेदे ?**यमकादयः** निर्मिताः।

**वामनः**

अलंकारशास्त्रे वामनस्य प्रत्येकं स्थानं दृश्यते। अयं काश्मीरनरेशस्य सचिवः आसीत्। आचार्योऽयं **रीतिसंप्रदायस्य प्रवर्तकः। काव्यस्यात्मा रीतिः** इति विषये **रीतिरात्मा काव्यस्येति सूत्रं** निर्मितवान्। अस्य च प्रसिद्धा कृतिः **काव्यालंकारसूत्रवृत्तिः** इति। अत्र अलंकार शास्त्रस्य **सर्वेऽपि सिद्धान्ताः विवेचिताः** । ग्रन्थेऽस्मिन् **पञ्चअधिकरणानि** वर्तन्ते। प्रथमे अधिकरणे काव्यस्य प्रयोजनम्। रीतित्रैविध्यं च

वर्णितम्। द्वितीये पदवाक्य-वाक्यार्थदोषाणां प्रतिपादनं लिखितम्। तृतीये **शब्दार्थगतत्वेन दशगुणाः** विवेचिताः। चतुर्थे शब्दार्थालंकाराणां लक्षणोदाहरणानि प्रदर्शितानि। पञ्चमे अधिकरणे कतिपय प्रयोगयाणां शुद्धीकरणरीतीनां तथा तत्प्रयोगकरणप्रकाराणां निरूपणं विहितम्।

**भट्टोद्भटः**

अलंकारशास्त्रे उद्भटः भट्टाद्भट इति उद्भटभट्ट इति उद्भटाचार्य इति। चव्यपदिश्यते। **भरतनाट्यशास्त्रस्य व्याख्या** उद्भटेन विरचितेति ज्ञायते। अयम् उद्भटः भामहकृत काव्यालंकारस्य भामहविवरणनाम्नीम् एतां व्याख्यां विरचितवान्। तस्याः **भामह विवृतिः इति नामान्तरम्** । ग्रन्थोऽयं दौर्भाग्येन अद्यावधि नोपलभ्यते।

उद्भटकृतः **काव्यालंकारसारसङ्ग्रहसंज्ञकः** प्रबन्धः उपलभ्यते। अत्र **एकचत्वारिंशत् अलंकाराणाम् एकोनाशीतिकारिकया वर्णनं कृतवान्।** भामहवत् अलंकारसंप्रदायानुयायी भूत्वापि अयं भामहः कतिपयसिद्धान्तेषु पार्थक्यं स्वास्मिन् प्रदर्शयति।

**रुद्रटः**

काश्मीर एव वसतिः रुद्रटस्य। एवद्रचितग्रन्थः काव्यालंकारः। अत्र अलंकारशास्त्रस्य समस्ताः सिद्धान्ताः समीक्षिताः। अयं रुद्रटः अलंकारसंप्रदानुयायी। अलंकाराणां व्यवस्थाकरणमेव ग्रन्थस्य प्रधानम् उद्देश्यम्।

**भट्टनायकः**

हृदयदर्पण इति नामकः कश्चन ग्रन्थः भट्टनायकेन विरचितः इति ज्ञायते। ग्रन्थोऽयम् अद्यापि नोपलभ्यते। अयं हि भट्टनायकः अभिधावादी। रसविषये चायं भुक्तिवादी भवति। साधारणीकरणसिद्धान्तः अनेनैव प्रवर्तितः।

**राजशेखरः**

अलंकारशास्त्रे रराजशेखरस्य काव्यमीमांसायां काचित् प्रत्येकता वरीवर्ति। ग्रन्थेऽस्मिन् काव्यशास्त्रीयांशाः प्रतिपाद्यन्ते। कवीनां व्यवहारोपयोगिनः मार्गदर्शकाश्च सूचनाः प्रधानतया प्रतिपाद्यन्ते। ग्रन्थोऽयम् अष्टादशाध्यायेषु विभक्तः। प्रथमाध्यायात् अष्टादश अध्यायपर्यन्तानां पृथक् पृथक् नामानि दृश्यन्ते। शास्त्रसंग्रहः, शास्त्रनिर्देशः पुरुषोत्पत्तिः, पदवाक्यविवेक, काव्यपाठकल्पः, पदवाक्यविवेके सुबादीनां विचारः, पादप्रतिष्ठा काव्यार्थयोनिनिर्णयः, अर्थव्याप्तिकविचर्चा, प्राक्तनानां ग्रन्थानाम् अध्ययनप्रकारः, कवि समयः, कालविभागः इत्येते विषयाः विवेच्यन्ते।

**मुकुलभट्टः**

कश्मीरनिवासी मुकुलभट्टः अभिधावृत्तिमातृकाग्रन्थस्यकर्ता। ग्रन्थेऽस्मिन् अभिधालक्षणयोः समीक्षा वर्तते, काव्यप्रकाशे मुकुलभट्टस्य खण्डनम् यत्र तत्र कृतमस्ति।

**प्रतीहारेन्दुराजः**

आनन्दवर्धनात् प्राचीनः प्रतीहारेन्दुराजः काश्मीरनिवासी मुकुलभट्टस्य शिष्यः। उद्भटालंकारसारसंग्रहलघुवृत्तिकर्ता।

**आनन्दवर्धनः**

अयम् आनन्दवर्धनः कश्मीरदेशस्य राज्ञोऽवन्तिवर्मणः सभापतिरासीत्। अलंकारशास्त्रेतिहासे एतस्य नाम स्वर्णाक्षेरेणाङ्कितुं योग्यम्-सोऽयम् आनन्दवर्धनः प्राक् विद्यमानानाम् अलंकाररीत्यादिसंप्रदायान् पर्यालोच्य ध्वन्यात्मकं नूतनं संप्रदायमेकं व्यव थापितवान्। आनन्दवर्धनात् पूर्वं ध्वनिविषये केचिदभाववादं केचित् भाक्तवादं केचिच्च अनिर्वचनीयवादम् अङ्गीकुर्वन्तिस्म। आनन्दवर्धनेन तु काव्यस्यात्मानं ध्वनिमेवाभ्युपेत्य उपर्युक्तमतं सम्यक्तया खण्डयित्वा ध्वनिप्रकाराणां विवेचनं ध्वन्यालोके कृतम्। ध्वनिशब्दो हि व्याकरणादेव गृहीतो वर्तते। स्फोटात्मकस्य शब्दस्यैव नाम ध्वनिरिति वैयाकरणाः कथयन्ति। तन्मतानुसारिभिः आलंकाररिकैः अपि न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जनक्षमस्य शब्दार्थयुगलस्य ध्वनिरिति व्यवहारः कृतः। ध्वन्यालोकग्रन्थः चतुर्षु उद्योतेषु विभक्तः। प्रथमे उद्योते काव्यस्यात्मानं ध्वनिं प्रस्तूय ततः तस्य ध्वनेः विषये विद्यामानान् अभवादिवादान् प्रतिपाद्य तेषां खण्डनं विहितम्। 'यत्रार्थः शब्दो वा' इत्यादि कारिकया ध्वनिलक्षणं प्रतिपाद्य ध्वनेः अविवक्षितवाच्यविवक्षितान्यपरवाच्यत्वेन द्विधा विभाजनं कृतम्। द्वितीये उद्योते ध्वनिभेदाः प्रदर्शिताः। तृतीये च उद्योते असंलक्ष्यक्रमव्यङ्ग्यध्वनेः व्यञ्जकाश्रयभेदान् निरूप्य गुणसंघटनयोः संबन्धञ्च विवेचयति। व्यञ्जनाव्यापारः स्थापितश्च। ततः गुणीभूतव्यङ्ग्यस्य प्रभेदाः सोदाहरणं प्रदर्शिताः। चतुर्थे उद्योते व्यङ्ग्यव्यञ्जकभावे विविधे सत्यपि रसादिमय एव विशिष्य कविः अवधानं कुर्यादिति सिद्धान्तयित्वा रामायणे महाभारते च प्रधानरसं विवेचयति।

**महिमभट्टः**

कश्मीरनिवासी महिमभट्टः क्रिस्तोः एकादशशतकस्य आरम्भे आसीत्। अयं च महिमभट्टः ध्वनिसिद्धान्तं प्रबलैः प्रमाणैः व्यक्तिविवेकग्रन्थे निराकरोति। ग्रन्थेऽस्मिन् त्रयो विमर्शाः। ग्रन्थस्य मुख्योद्देश्यम् इदमेव यत् ध्वनेः अनुमाने एव अन्तर्भावः इति।

**कुन्तकः**

महिमभट्ट समकालिकः कुन्तकोऽपि ध्वनिविरोधी कश्मीर निवासी च आसीत्। वक्रोक्तिजीवितग्रन्थः अनेन विरचितः समग्रः नोपलभ्यते। उपलब्धे ग्रन्थे चत्वारः उन्मेषाः सन्ति यत्र वक्रोक्तेः साङ्गोपाङ्गविवेचनं दृश्येते। अयं च कुन्तकः वक्रोक्तिसंप्रदायस्य प्रवर्तकः । वक्रता च वैदग्ध्यभङ्गीभणितिरूपा। वक्रोक्तेः षट् प्रकाराःसन्ति।

१ वर्णविन्यासवक्रता २ पदपूर्वार्धवक्रता ३ पदपरार्ध वक्रता ४ वाक्यवक्रता ५ प्रकरणवक्रता ६ प्रबन्धवक्रता इति।

**अभिनवगुप्तः**

ध्वन्यालोकस्य लोचनाख्यव्याख्या भरतमुनिप्रणीतस्य नाट्यशास्त्रस्य अभिनवभारतीव्याख्या च अभिनवगुप्तेन विरचिता। शैवशास्त्रस्य प्रकाण्डपण्डितः अयम्। शैवदार्शनिको भूत्वापि साहित्येऽयं व्यञ्जनावादी तथा ध्वनिवादी च। भरतरससूत्रस्थ संयोगादित्यस्य व्यङ्ग्यव्यञ्जकभावरूपादिति निष्पत्तिः इत्यस्य अभिव्यक्तिः इत्यर्थः इत्येवंरूपेण वणयति। एतस्य रसविषयिका समीक्षा नितान्तं वैज्ञानिकी युक्ति युक्ता च वर्तते।

**मम्मटः**

अयमपि कश्मीरनिवासी जय्यटपुत्रः। मम्मटस्य प्रसिद्धः काव्यप्रकाशग्रन्थः दशसु उल्लासेशु निबद्धो वर्तते। ध्वनिविरोधिनां मतम् खण्डयित्वा अयम् आचार्यः सुचारुरूपेण ध्वनिनिरूपणं कृतवान्। मम्मटः बहुश्रुतोऽपि मुख्यतया वैय्याकरण एव। काव्यप्रकाशस्य त्रयः अंशाः कारिका, वृत्ति, उदाहरणं चेति। काव्यप्रकाशे उल्लासाभिधेयाः दशविभागाःसन्ति। प्रथमे उल्लासे काव्यस्य फलम्, कारणं, स्वरूपं च निरूपितम्। ततः द्वितीये उल्लासे शब्दार्थविभागः आर्थीव्यञ्जनावाचक शब्दः मतभेदेन सङ्केतितार्थः अभिधा लक्षणा व्यञ्जना च न्यरूपि, तृतीये उल्लासे अर्थस्य व्यञ्जकता, चतुर्थे उल्लासे ध्वनिकाव्य प्रभेदाः प्रदर्शिताः। पञ्चमे उल्लासे गुणीभूतव्यङ्ग्यकाव्यप्रभेदाः व्यञ्जनावृत्तिसंस्थापनयुक्तयश्च निरूपिताः। षष्ठे उल्लासे चित्रकाव्यप्रभेदयोः स्वरूपं निरूपितम्। सप्तमे उल्लासे सप्ततिसंख्याकाः काव्यदोषाः सोदाहरणं निरूपिताः, अषृमे उल्लासे गुणलक्षणम् अलंकारलक्षणं माधुर्यौजःप्रसादख्यास्त्रयो गुणाः वामनोक्त दशविधगुणानां सोक्तगुणेषु अन्तर्भावश्च इत्येतानि निरूपितानि। नवमे उल्लासे षट् शब्दालंकाराः निरूपिताः दशमे उल्लासे उपमादयः एकषष्टिसंख्याकाः अर्थालंकाराः निरुपिताः।

**विद्यानाथः**

तैलङ्गदेशीयः विद्यानाथः **प्रतापरुद्रयशोभूषणस्य** कर्ता। इयं च रचना दक्षिणभारते लोकप्रिया वर्तते, अत्र **उदाहरणपद्यानि सर्वाण्यपि राजानं प्रतापरुद्रं संस्तुवन्ति।**

**विश्वनाथः**

उत्कलदेशीयोऽयं साहित्यदर्पणग्रन्थस्म प्रणेता। काव्यप्रकाशदर्पणकारो विश्वनाथः अयमेव। विश्वनाथेन बहवो ग्रन्थाः लिखिताः। तेषु साहित्यदर्पणाख्यो ग्रन्थः विद्वद्वरैः विशेषेण संस्तूयते।

**अप्पय्दीक्षितः**

बहुमुखप्रज्ञाशाली अप्पय्दीक्षितः सर्वेष्वपि शास्त्रेषु ग्रन्थकर्तृत्वेन प्रथितो वर्तते। साहित्यशास्त्रे न्यूनानिन्यूनं त्रयो ग्रन्थाः अनेन लिखिताः। वृत्तिवार्तिकम्, कुवलयानन्द,

चित्रमीमांसा चेति। तेषु कुवलयानन्दग्रन्थः सरलः प्रौढश्च। चित्रमीमांसा ग्रन्थस्तु अर्थालंकारान् विवेचयति। अत्र प्राक्तनानाम् आलंकारिकाणां प्रायशः अलंकारलक्षणानि अनूद्य खण्डितानि।

**जगन्नाथः**

तैलङ्गजनपदीयः पण्डितराजजगन्नाथः पितुः पेरुभट्टात् ज्ञानेन्द्रभिक्ष्वादिभ्यश्च अधिगत विविधविद्याप्रपञ्चः। तेन अलंकारमूर्धन्यग्रन्थः रसगंङ्गाधर विरचितः। रसगङ्गोधरस्तु अपूर्णः ग्रन्थः **कुवलयानन्दचित्रमीमांसादि कर्तुः अप्पय्यदीक्षितस्य मतम् अनेन जगन्नाथेन प्रतिपदं खण्डितम्।** भट्टोजिदीक्षितस्य मनोरमा ग्रन्थोऽपि अनेन खण्डितः।

## अलंकारशास्त्रसंप्रदायाः

अलंकारशास्त्रग्रन्थानुशीलनेनायमवगतो भवति यत् तत्र अनेके संप्रदायाः आसन्निति काव्यस्यात्मनो विषये नानाविधाः संप्रदायाः उत्पन्नाः। भरतमुनितः आरभ्य विभिन्नशताब्दीषु नूतनानां संप्रदायानाम् उत्पत्तिः जाता। तत्र प्रसिद्धाः षट्संप्रदायाः भवन्ति।

१. रससंप्रदायः

२. अलंकारसंप्रदाय

३. रीतिसंप्रदायः

४. ध्वनिसंप्रदायः

५. वक्रोक्तिसंप्रदायः

६. औचित्यसंप्रदायः

**रससंप्रदायः**

वेदग्रन्थेषु रसशब्दस्य उल्लेखः यद्यपि दृश्यते तथापि रसस्वरूपनिरूपणे नाट्यशास्त्रकर्ता भरतमुनिरेव आदिमः। सर्वप्रथमं रसस्योपदेशः ब्रह्मणा नन्दिकेश्वराय प्रदत्त इति राजशेखरेण यद्यपि प्रतिपाद्यते तथापि तत्प्रतिपादितरससिद्धान्तः एतावत्पर्यन्तं नोपलभ्यते। बाल्कीकिरामायणे अष्टानां श्रृङ्गारादीनां रसानाम् उल्लेखो दृश्यते। रामायणकाव्ये करुणरसः प्राधान्येन व्यज्यते इवि सर्वे अंगीकुर्वन्ति। स्वयं भरतेनैव नाट्यशास्त्रस्य षष्ठे अध्याये रसपरंपरायाः प्राचीनतायाः विषये निर्देशः कृतः, ''एते ह्यष्टौ रसाः प्रोक्ताः द्रुहिणेन महात्मना'' इत्यादिना पूर्वाचार्याः भरतेन स्मृताः। रसस्य शास्त्रीयो विमर्शः नाट्यशास्त्रे एव प्रथमम् उपलभ्यते। **'विभावानुभावव्यभिचारिसंयोगात् रस निष्पत्तिः' इति भरतसूत्रम्** । अस्य च रससूत्रस्य व्याख्यातारः चत्वारः प्रसिद्धाः। भट्टलोल्लट-श्रीशङ्कुक-भट्टनायक-अभिनवगुप्त-पादाः इति एते चत्वारः भरतसूत्रस्य व्याख्यां कृतवन्तः।

**भट्टलोल्लटः**

रससूत्रस्योपरि सर्वप्रथमः व्याख्याताः अयमेव। अस्य मतोल्लखः अभिनवभारत्यां दृश्यते। रससूत्रे **संयोगात्** इति पदस्य **कार्यकारणभावरूपसंबन्ध इति निष्पत्ति** पदस्य **उत्पत्ति** इति च व्याख्यातम्। मीमांसकः भट्टलोल्लटः रसस्य स्थितिं रामाद्यनुकार्ये अंगीकरोति।

**श्रीशङ्कुकः**

अभिनवभारत्यां श्रीशङ्कुकस्यापि मतोल्लेखो वर्तते। अयं च नैयायिकः अत एव विभावादिसाधनेषु रसरूपसाध्येषु च **अनुमाप्यानु मापकाभावं कल्पयति** । रसः अनुमेयः इति श्रीशङ्कुकः मनुते। लोल्लटस्य रसोत्पत्तिवादं श्रीशङ्कुकः खण्डितवान्। नटः दुष्यन्तादीन् अनुकार्यरूपान् अनुकरोति। सामाजिकास्तु चित्रतुरगन्यायेन नटमेव अनुकार्यमवगत्य तदनुभावादिद्वारा नटे स्थायिभावस्य अनुमानं कुर्वन्ति इति श्रीशङ्कुकस्य मतम्।

**भट्टनायकः**

**भुक्तिवादसिद्धान्तस्य** प्रवर्तकः भट्टनायकः प्रथितः। रसनिष्पत्तौ व्यापारत्रयं सः अङ्गीकरोति। प्रथमो हि व्यापारः अभिधा। द्वितीयो भावकत्वव्यापारः। तृतीयः भोजकत्वव्यापारः। अभिधया सिद्धार्थयोः ज्ञानम् भवति। भावकत्वव्यापारेण विभावादयः रत्यादिस्थायिभावाश्च साधारणीकृतास्सन्तः अपभोगयोग्या भवन्ति। भेजकत्वव्यापारेण रजस्तमसी अभिभूयसत्वस्योद्रेकः भवति। रससूत्रे विद्यमानस्य संयोगात् इत्यस्य भोज्य भोजकभावसंबन्धात् इति। **निष्पत्ति** इत्यस्य **भुक्तिः** इत्यर्थ इति भट्टनायकेन कथ्यते।

**अभिनवगुप्तः**

अभिनवगुप्तः ध्वनिवादी आचार्यः आलंकारिकः। अभिधादिवृत्तित्रयागम्यः व्यङ्ग्यो रसः व्यञ्जनावृत्तिद्वारा अभिव्यज्यते। काव्य नाटकादिषु प्रयुक्ताः विभावादयः रसव्यञ्जकाः रसश्च अभिव्यङ्ग्यः। इत्थम् अभिनवगुप्तपादः **रसविभावादिषु** परस्परं **व्यङ्ग्यव्यञ्जकभावम्** अगीक्रिते। रससूत्रस्य संयोगात् इत्यस्य व्यङ्ग्यव्यञ्जकभावादिति, निष्पत्तिः इत्यस्य अभिव्यक्तिः इत्यर्थः इति च तेन कथ्यते, एतन्मतानुसारेण सामाजिकहृदयेषु वासनारूपेण स्थितो रत्यादिस्थायिभावो विभावादिद्वारा व्यङ्ग्यव्यञ्जकभावेन अभिव्यक्तो भवति। रसानुभूतिः अलौकिकः।

बाल्मीकिभरतादिभिः प्रारब्धोऽयं रसमार्गः अलंकारशास्त्रे परमोच्चस्थानं प्राप्तः। रसः काव्यस्य सारसर्वस्वः। स च ध्वनिमतेन साकं निकटसंबन्धं प्राप्य प्रसिद्धो जातः।

**अलंकारसंप्रदायः**

अलंकारसंप्रदायप्रवर्तकत्वेन **भामहः** परिगण्यते। भमहमतम् उद्भटः रुद्रटश्च

पोषितवन्तौ। एतत्संप्रदायानुसारेण अलंकार एव काव्यस्य जीवनाधायकः अलंकार संप्रदायिनो भामहादयः रसविवेचनं नैव कृतवन्तः। वक्रोक्तिनामकः अलंकारः संप्रदायस्यास्य प्रवर्तकत्वेन आचार्येण प्रधानतया स्वीकृतः। " न कान्तमपि निर्भूषं विभाति वनितामुखम्" इति अलंकाराणां प्राधान्यं भामहेन कथ्यते। "काव्यशोभाकरान् धर्मानलंकारान् प्रचक्षते" इति दण्डिमहोदयेन निर्दिश्यते। भरतमुनिना उपमा, रूपकम्, दीपकम् यमकञ्चेति चत्वारः अलंकाराः निरूपिताः। काव्यालंकारसारसंग्रहे उद्भटेन एकचत्वारिंशदलंकाराः वर्णिताः। व्याकरणांशस्य आधारेण उपमाभेदाः उद्भटेन विवेचिताः। रुद्रटः काव्यालंकारे शास्त्रीयक्रमेण अलंकारान् विभजति। भामहादयः प्राचीनालंकारिकाः अलंकारविमर्शं शास्त्रीयक्रमेण प्रतिपादितवन्तः। भामहग्रन्थे काव्यतत्वान्वेषणापेक्षया काव्यस्वरूपस्य भेदादीनां च विवेचनम् उपलभ्यते। शब्दार्थौ काव्यस्य शरीरं तस्य, भूषणप्रायाः अलंकाराः काव्यशरीरसौन्दर्यम् अलंकारद्वारैव भवतीति अलंकारसंप्रदायिनः अभिप्रयन्ति। भरतेन अलंकाराः चत्वारः निर्दिष्टाः ते एव अलंकाराः कुवलयानन्दादिग्रन्थेषु पञ्चविंशत्यधिकशतसंख्याकाः जाताः।

**रीतिसंप्रदायः**

रीतिसंप्रदायस्य प्रधानाचार्यो वामनः। एतन्मते ' रीतिरेव काव्य स्यात्मा' भवति। काव्यालंकारसूत्रवृत्तौ विशिष्टपदरचनारीतिः इति रीतिलक्षणं प्रतिपादितम्। रीतिः गुणम् अवलम्ब्य तिष्ठति रीतिसंप्रदायोऽयं गुण्संप्रदायनाम्नापि व्यवह्रियते। वैदर्भी, गौडीया, पाञ्चाली इति तिस्त्रः रीतयः। प्रारम्भकाले रीतीनां संबन्धः देशविशेषेण साकमासीत्। समग्रगुणावैदर्भी, ओजः कान्तिमती गौडीया, माधुर्यसौकुमार्योपपन्ना पाञ्चाली इति काव्यालंकारसूत्रे वामनेन वैदर्भ्यादीनां लक्षणं कथ्यते। वामनमते वैदर्भ्यादिरीतयः गुणमाश्रित्य तिष्ठन्ति। मम्मटाचार्यस्तु वृत्तिं रीति चैकमेव मनुते।

**ध्वनिसंप्रदायः**

काव्यतत्वान्वेषणे प्रवृत्तानाम् आलंकारिकाणां मूर्धन्यः भवति आनन्दवर्धनः। काव्ये व्यङ्ग्यस्यैव 'ध्वनेः एव' प्राधान्यं भवतीति ध्वन्यालोके हृदयंगमयारीत्या आनन्दवर्धनेन प्रदर्श्यते। रसमतस्यैव ध्वनिमतं विस्तृतीकरणं भवति। रसः न कदापि वाच्यः किन्तु व्यङ्ग्य एव ध्वनिव्यवहारस्य समूलतां प्रदर्शयन् मम्मटभट्टः 'बुधैवैयाकरणैः प्रधानभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः। ततस्तन्मतानुसारिभिरन्यैरपि न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जन क्षमस्य शब्दार्थयुगलस्य" इति कथयति। अङ्गनासु प्रसिद्धा वयवतिरिक्तं लावण्यमिव महाकवीनां वाणीषु वाच्यार्थपेक्षया अधिक चमत्कारीप्रतीयमानार्थः भवति। अयमेव ध्वनिः। ध्वनेः लक्षणं ध्वन्यालोके

**यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।**

**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥**

ध्वनेः मुख्यः भेदस्तु वस्त्वलंकाररसात्मकः। ध्वनिरयम् अविवक्षितवाच्यविवक्षितान्य-परवाच्यध्वनिभेदेन द्विविधः। तत्र अविवक्षितवाच्यः अर्थान्तरसंक्रमितवाच्य-अत्यन्ततिरस्कृतवाच्यत्वेन द्विविधः द्वितीयः असंलक्ष्यक्रमः विवक्षितान्यपरवाच्यस्तु असंलक्ष्यक्रमसंलक्ष्यक्रमत्वेन द्विविधः असंलक्ष्यक्रमः **रसादिध्वनिरिति** व्यपदिश्यते। संलक्ष्यक्रमस्तु शब्दशक्तिमूल-अर्थशक्तिमूलत्वेन द्विविधः। शब्दशक्तिमूलः वस्तु अलंकारभेदेन द्विविधो भवति। अर्थशक्तिमूलः स्वतः सम्भवि, कविप्रौढोक्तिसिद्ध, कविनिबद्धवक्तृ- प्रौढोक्तिसिद्धभेदेन त्रिविधः। इत्थं ध्वनेः स्थूलः भेदः।

अलंकारस्येतिहासे ध्वनिकल्पना हयतिसूक्ष्मबुद्धि परिचायिता अस्ति। ध्वनिसमर्थकेषु अभिनवगुप्तपादाचार्याः मम्मटः विश्वनाथः, राजचूडामणिदीक्षितप्रभृतयः प्रधानाः।

**वक्रोक्तिसंप्रदायः**

वक्रोक्तिसंप्रदायस्य प्रधानः आचार्यः कुन्तकः। काव्यालंकारे भामहः—

**सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते।**

**यत्नोऽस्यां कविना कार्यः कोऽलंकारोऽनया विना।**

इति वक्रोक्तिपदं प्रयुक्तवान्। तमेव बीजमादाय आचार्यकुन्तकेन वक्रोक्तिपदं प्रयुक्तवान्। तमेव बीजमादया अचार्यकुनतकेन वक्रोक्तिः अङ्कुरिता पल्लविता च। भामहेन अतिशयोक्तिरेव वक्रोक्तिनाम्ना व्यवह्रियते। वक्रोक्तिरेव सर्वालंकाराणां जीवनाधायिका इति तस्य मतम्। भामहादर्वाचीनाः सर्वेऽप्यालंकारिकाः वक्रोक्तिम् आद्रियन्ते। सर्वसाधारणजनकथनभिन्नालौकिकचमत्कारयुक्ता उक्तिः वक्रोक्तिरिति शब्दस्य अर्थः। वैदग्ध्यभङ्गीभणितिः वक्रोक्तिरिति कुन्तकेन कथ्यते। वक्रोक्तिः प्रसिद्धाभिधानव्यतिरेकिणो विचित्रैवाभिधा, वैदग्ध्यं कौशलं, तस्य भङ्गी विच्छित्तिः इति वक्रोक्तिजीवितग्रन्थे कुन्तकः वक्रोक्तिशब्दस्यार्थं वृत्तिग्रन्थे विशदयति, गुणरीत्यलंकाराः सर्वेऽपि वक्रोक्तौ अन्तर्भवन्तीति कुन्तकाचार्येण प्रतिपाद्यते।

**वक्रोक्ति :**

**१. वर्णविन्यासवक्रता**

**२. पदपूर्वार्धवक्रता**

**३. पदपरार्धवक्रता**

**४. वाक्यवक्रता**

**५. प्रकरणवक्रता**

**६. प्रबन्धवक्रता**

इति षड्विधा भवति। वाक्यवक्रतायां सर्वेऽप्यलंकाराः अन्तर्भवन्ति। ध्वनिभेदान् उपचारवक्रतायाम् अन्तर्भावयामास कुन्तकः।

**औचित्यसंप्रदायः**

ध्वन्यादिसमस्तकाव्यतत्वानां मूलभावना औचित्यस्य भावना भ्पवति। प्राचीनाः आलंकारिकास्सर्वे स्वस्वग्रन्थे औचित्यं निर्दिष्टवन्तः। प्राचीनग्रन्थान् सर्वानवलोक्य औचित्यतत्त्वस्य व्यापकरूपतामाधातुं क्षेमेन्द्रेण औचित्यविचारचर्चा संज्ञको ग्रन्थः विरचितः। किमिदमौचित्यमिति जिज्ञासायां– यो यत्सदृशः, येन परस्परं सम्मिलनं भवेत् तदेवोचितम् अथ चोचितस्य भावः औचित्यम्"। तथा चोक्तं कुन्तकेन–

**उचितं प्राहुराचार्याः सदृशं किल यस्य यत्।**
**उचितस्य च यो भावस्तदौचित्यं प्रचक्षते।।**

इति। औचित्यस्य मूलतत्त्वं ध्वन्यालोके आनन्दवर्धनेन प्रदर्शितमासीत्।

# राजचूडामणिदीक्षितस्य चरितं ग्रन्थाश्च

षोडशसप्तदशशताब्द्योः दक्षिणभारते अधिक संख्याकाः प्रसिद्धाश्च कवयो दार्शनिकाश्च व्यराजन्त। स समयः संस्कृतप्रचारस्य स्वर्णयुगमभूत। बहवः दाक्षिणात्याः ग्रन्थकर्तारः १५००-१७०० मध्ये व्यलसन् तेषु अप्पय्यदीक्षितः, नीलकण्ठदीक्षितः, गोविन्ददीक्षितः यज्ञनारायणदीक्षितः, वेङ्कटेशदीक्षितः, समरपुङ्गवदीक्षितः, श्रीनिवासदीक्षितः, राजचूडामणिदीक्षितः इत्यादयः विशिष्य निर्देशार्हाः। एतेषां महिमानं ग्रन्थांश्च अधिकृत्य लेखनीयं चेत् बहूनि पृष्ठानि भविष्यन्ति। अथापि संग्रहेण प्रकृतोपयोगाय लिख्यते।

तुण्डीरमण्डले तञ्जापुरमण्डले च नायकसंज्ञकाः राजानः राज्यपरिपालनमकुर्वन। इमे मण्डले विनाशोन्मुखस्य विजयनगरसाम्राज्यस्य नियन्त्रणे आस्ताम्। अथापि व्यवहारे इमे नायकाः स्वतन्त्राः आसन्विजयनगरसाम्राज्यस्य पतनानन्तरम् एते नायकाः दक्षिणापथे राज्यपरिपालनं चक्रुः। वेलूर अधिराजः चिन्नवोम्मः अप्पय्यदीक्षितस्य पोषकः। तञ्जापुरनायकः चेव्वप्पः तद्वंश्याश्च गोविन्ददीक्षितस्य पोषकाः। गिञ्जीनायकः शूरप्पः रत्नखेट श्रीनिवासदीक्षितस्य पोषकः। नीलकण्ठदीक्षितः मधुरानायकस्य तिरुमलस्य पोषकत्वे विरेजे। एतेषां राज्यपालनकालः १५००-१६५०।

रत्नखेटश्रीनिवासदीक्षितः शूरप्पस्य आस्थान पण्डितः। स्वकीये भावनापुरुषोत्तमें नाटके स्वपोषकत्वेन शुरप्पं निर्दिशति।

**सर्वधारिसमे मीनमासे राकातिथाविदम्।**
**उत्तरर्क्षे रविदिने समाप्तं नाटकं परम्।।**

इत्यनेन भावनापुरुषोत्तमनाठकामातृकान्ते दृश्यमानेन श्लोकेनः तस्याः मातृकायाः कालः A.D. १५८८ इति ज्ञायते। स श्लोकः यद्यपि प्रतिलिपिकर्तुः भवेत् अथापि नाटककर्ता ततः प्राक् न्यवात्सीत् न तु ततः पश्चादिति निश्चप्रचम्। तेन रत्नखेटदीक्षितस्य कालः पश्चदशशताब्द्याः अन्तिमभागः षोडशशताब्द्याः पूर्वार्धभागश्चेति निर्णीयते। तञ्आपुरराजस्य चेव्वप्पस्य मुख्यमन्त्री गोविन्दरीक्षितः इति ऐतिहासिकाः। वेव्वप्पस्य वंशावली तावत्। एवम्–

तिम्मनायकः = वैयमाम्बा
चिन्नचेव्व = मूर्त्यम्बिका AD १५४९–१५७२
अच्युतभूप = मूर्त्यम्बिका AD १५७२–१६१४
रघुनाथनायकः AD १६१४ ?

राजचूडामणिदीक्षितेन आनन्दराघवं रघुनाथनायकस्य आस्थाने लिखितमिति तदीयप्रस्तावनातोऽवगम्यते। गोविन्ददीक्षितः चेव्वप्पादीनां त्रयाणामपि राज्ञां मन्त्री बभूव। किं च राजचूडामणिदीक्षितः रघुानाथनायकस्य समग्रं चरितं रघुनाथभूपविजयाख्ये काव्ये वर्णयांबभूव। तन्त्रशिखामणिनाम्नि मीमांसाग्रन्थें राजचूडामणिः लिखति–

**धीमान् मान्ये शकस्याब्दे हायने चेश्वराभिधे।**
**चूडामणिः कलयते यज्वा तन्त्रशिखामणिम्॥**

इति। तेन १५५९ शकाब्दे A.D. १६३६ संवत्सरे तन्त्रशिखामणिः व्यलेखीति बुध्यते। अतः राजचूडामणिदीक्षितस्य कालः षोडशशताब्द्याः अन्तिमभागः सप्तदशशताब्धाः पूर्वार्धभागश्च इति निर्णीयते। अत्र साधकतमं प्रमाणमप्युपलभ्यते। राजचूडामणिदीक्षितकृतस्य रुक्मिणीकल्याणकाव्यस्य व्याख्याने तद्वंश्येन बालयज्ञदेवेश्वरेण विरचिते आदिमैः अनेकैः श्लोकैः राजचूडामणि दीक्षितस्य पूर्वोत्तरवंशपरम्परा उट्टङ्किता। तदनुसारेणायं वंशवृक्षः।

भवस्वामी
श्रीकृष्णः
कुमारभवस्वामी
श्रीकृष्णार्यः
भवस्वामी
रत्नखेटश्रीनिवासदीक्षितः

| केशवदीक्षितः | अर्धनारीश्वरः | यज्ञनारायणः |
|---|---|---|
| । | | अथवा |
| पतञ्जलिः | | राजचूडामणिः |

केशवदीक्षितः
।
रामचन्द्रः
।
केशवदीक्षितः
।
यज्ञवेदेश्वरः
।
केशवः
।
यज्ञवेदेश्वरः
।
बालचन्द्रः
।
बालयज्ञवेदेश्वरः

एतेषु अन्तिमः बालयज्ञदेवेश्वरः रूक्मिणीकल्याणस्य व्याख्याता। स लिखति, कल्यब्दे ४९३४ अर्थात A.D. १८३३ वर्षे स्वेन व्याख्या व्यलेखि इति–

**हृते कलियुगे वर्षे वेदाग्निग्रहसागरैः।**
**यज्ञदेवेश्वरेणैषा कृता मौक्तिकमालिका।।**
इति।

निदर्शितायां वंशावल्याम् एकैकमधिकृत्य किंचित् प्रस्तूयते।

**भवस्वामी—**

वेदभाष्यकारः भट्टभास्करः भवस्वामी भाष्यकारत्वेन कीर्त्यते—

वाकयार्थैकपराण्यधीत्य च भवस्वाम्यादिभाष्याण्यथो भाष्यं सर्वपथीनमेतदधुना सर्वीयमारभ्यते।

इति (P.२. Mysore Edition of the Taittiriyasambita) बोधायनकल्पसूत्रविवरणकारत्वेनापि कश्चित् भवस्वामी अडयार पुस्तकालये काट्लाग्मध्ये कथ्यते। अनयोः ऐक्यं वा भेदो वेति न निश्चितम्।

**कुमारभवस्वामी**

प्रथमस्य भवस्वामिनः पौत्रः श्रीकृष्णस्य पुत्रोऽयम्। अयम् अद्वैतचिन्तामणिनामकग्रन्थकर्ता।

**भवस्वामी—२**

अयं कुमारभ्वस्वामिनः पुत्रस्य श्रीकृष्णार्यस्य पुत्रः। वैकुण्ठघण्टामणिः एतेन विरचितो ग्रन्थः।

**श्रीनिवासदीक्षितः**

अयं द्वितीयभवस्वामिनः पुत्रः। केश्वयोगिना मकगुरोः सविधे सर्वाणि शास्त्राण्यधीत्य निरुपमं पाण्डित्यं समपादयत्। षट्सु भाषासु प्रवीणः। शास्त्रेषु बहून् ग्रन्थान् निर्ममे। रत्नखेटः षड्भाषासार्वभौमः इत्यादीनि बिरूदानि सभासु अस्मै वितीर्णानि। शताधिग्रन्थकर्तृत्वेनायं बालयज्ञवेदेश्वरेण निर्दिश्यते। ते यथा—

१. अद्वैतकौस्तुभः
२. वादतारावलिः
३. मध्वविध्वंसनम्
४. बौद्धतन्त्रमथनम्
५. वेदान्तवादावलिः
६. मणिदर्पणः
७. समयसर्वस्वम्
८. विधिनिर्णयः
९. तत्त्वपरिशुद्धिः
१०. स्मृतिरत्नप्रदीपः
११. भावनापुरुषोत्तमम्

१२. शितिकण्ठजयम्
१३. साहित्यसञ्जीवनी
१४. भावोद्भेदम्
१५. रसार्णवम्
१६. अन्ये च अलंकार-ज्योतिष-मन्त्र-तन्त्रादिग्रन्थाः।

रत्नखेटश्रीनिवासदीक्षितस्य विषये कश्चन श्लोकः कर्णपरंपरया **श्रूयते**—

> विपश्चितामपश्चिमे विवादकेलिनिश्चले
> सपत्नजित्ययत्नतस्तु रत्नखेटदीक्षिते।
> बृहस्पतिः क्व जल्पति प्रसर्णति क्व सर्पराट्
> असंमुखस्तु षण्मुखः सुदुर्मुखश्चतुर्मुख॥

इति।

**अर्धनारीश्वरः**

रत्नखेट श्रीनिवासदीक्षितस्य त्रयः पुत्राः केशवः अर्धनारीश्वरः राजचूडामणिश्च। आद्यौ प्रथमपत्न्याः पुत्रौ तृतीयः द्विजीयपत्न्याः पुत्रः। एतेषु त्रिषु केशवमधिकृत्य नाधिकं ज्ञायते। अर्धनारीश्वरः कनिष्ठस्य राजचूडामणेः विद्यागुरु। यज्ञनारायणामरनामा राजचूडामणिः बाल्य एव पितृभ्यां वियुक्तः। अत एव ज्यायान् अर्धनारीश्वरः बालस्य राजचूडामणेः विद्याभिवृद्धौ बद्धश्रद्धः पाठयामास। सप्तमे वयसि तीक्ष्णबुद्धी राजचूडामणिः कमलिनीकलहंसनाम्नीं नाटिकां निरमासीदिति तदीयप्रस्तावनातः—

पारिपार्श्वकः। तेन हि गर्भ सप्तम एव हायने विरचय्य सबहुमानमस्माकं हस्ते दत्ता किल कमलिनीकलहंसनामधेया श्रृङ्गाररसमणिपेटिका नाटिका—इति।

**राजचूडामणिदीक्षितस्य कृतयः**

अधस्तना ग्रन्थाः राजचूडामणिदीक्षितस्य कृतय इति ज्ञायन्ते—

१. उपनिषदां व्याख्या
२. यजुर्वेद व्याख्या
३. प्रायश्चित्तप्रदीपिका
४. तन्त्रशिखामणिः
५. संकर्षमुक्तावली अथवा न्यायमुक्तावली
६. शास्त्रदीपिकाव्याख्या
७. मणिदर्पणः
८. न्यायचुडामणिः (रूचिदत्तवृत्तिः)
९. राघवकृष्णपाण्डवीयम्
१०. रत्नखेटविजयम्

११. रामायणचम्पवाः अन्तिमभागः
१२. भारतचम्पूः
१३. वृत्ततारावली
१४. शंकराचार्यतारावली
१५. शंकराभ्युदयम्
१६. कंसध्वंसनम्
१७. कान्तिमतीपरिणयः
१८. कमलिनीमलहंसः
१९. चित्रमञ्जरी
२०. श्रृङ्गारसर्वस्वम्
२१. आनन्दराधवम्
२२. रघुनाथभूपविजयम्
२३. साहित्यसाम्राज्यम्
२४. काव्यदर्पणः
२५. इलंकारचूडामणिः
२६. रूक्मिणीपरिणयम्
२७. रामकथा

राजचूडामणिः स्वयमेव काव्यदर्पणे प्रायः इमान् ग्रन्थान् निरदिशत्। यथा–

अधीत्य सकलं शास्त्रमग्रजादीश्वरेष्टिनः।
विदुषां प्रीतये येन व्याकृता शास्त्रदीपिका॥
यत्नं विनैव विहितो येन तन्त्रशिखामणिः।
नव्या संकर्षकाण्डस्य न्यायमुक्तावली तथा॥
व्याकृता याजुषी शाखा तथोपनिषदोऽखिलाः।
प्रणीता चाग्निहोत्रादेः प्रायश्चित्तप्रदीपिका॥
न्यायचूडामणिर्नाम न्यायजालोपबृंहिता।
रुचिदत्तस्य च व्याख्या रूचिरा येन निर्मिता॥
मण्दिर्पणनामानं महितं वाङ्मुखं मणेः।
खण्डत्रयस्य दुर्वादिखण्डनाय व्यधत्त यः॥
येन श्रृङ्गारसर्वस्वनामा भाणोऽप्यभण्यत।
यश्चैकाह्न। भोजचम्पोर्युद्धकाण्डमपूरयत्॥
येन भारतचम्पूश्च वृत्तातारावली तथा।
विहिते शंकराचार्यतारावल्याः सहोदरे॥
सर्वतन्त्रस्वतन्त्रस्य श्रीनिवासमखीशितुः।

कर्तुर्विश्वजितो येन तातस्य यमिता कथा॥
रघुवीरस्य कृष्णस्य पाण्डवानां च याः कथाः।
प्रत्यक्षर श्लेषमयैः पद्यैर्हृद्यैरवर्णयत्॥
यमिता मञ्जुभाषिण्या येन सीतापतेः कथा।
शंकराभ्युदयाभिख्यं काव्यं येनैव निर्मितम्।
काव्यं कंसवधं रूक्मिण्युद्वाहमपि यो व्यधात्।
येनोदिता कमलिनीकलहंसाख्यनाटिका॥
आनन्दराघवं नाम नाटकं च प्रपञ्चितम्।
येन व्यतान्यलंकारचूडामण्यभिधा कृतिः॥
अथ वृत्तिविवेकेन विचित्रा चित्रमञ्जरी।
तेन व्यतानि श्रीराजचूडामणिमखीन्दुना॥
काव्यदर्पणनामासौ प्रबन्धो विदुषां मुदे॥
एतेषु सप्तदश ग्रन्थेषु केचिदेवेदानीमुपलभ्यन्ते।
ते यथा—
तन्त्रशिखामणिः

गोविन्ददीक्षितपुत्रेण वेंकटेशदीक्षितेन कृतस्य टुप्टीकाव्याख्यानस्य वार्तिकाभरणस्य व्याख्यानरूपोऽयं मीमांसाग्रन्थः वेंकटेशदीक्षिताज्ञया राजचूडामणिदीक्षितेन व्यलेखि। तदुक्तम्—

अस्ति गोविन्दयज्वेन्द्रनागमाम्बातपः फलम्।
श्रीवेंटेश्वरमखी सर्वतन्त्रस्वतन्त्रधीः॥
येनेष्टं साग्निचित्याप्तवाजपेयादिभिर्मखैः।
कृतं साहित्यसाम्राज्यनामकाव्यमनुत्तमम्॥
व्यतानि शुल्बमीमांसा तथा कर्मान्तवार्तिकम्।
टुप्टीकायाः कृता टीका वार्तिकाभरणाभिधा॥
प्रतिष्ठापित चोलक्ष्माजानेस्तस्य नियोगतः।
चूडामणिर्वितनुते यज्वा तन्त्रशिखामणिम्॥
गोविन्ददीक्षितचिरंतनभाग्यराशेः
श्रीवेंकटेश्वरमखीशितुराज्ञया मे।
तन्त्रार्णवं तरितुमाहितसाहसस्य
सांयात्रिकी भवतु तत्करुणाकटाक्षः॥

अयं च ग्रन्थः सप्तमाध्यायात् नवमाध्यायान्तः काशीस्थितैः महामहोपाध्यायपट्टाभिरामशास्त्रिभिः मुद्राप्य प्रकाशितः। A.D. १६३६ वर्षे लिखितोऽयमिति पूर्वमेवोक्तम्।

**शास्त्रदीपिकाव्याख्या**

पार्थसारथिमिश्रकृतशास्त्रदीपिकायाः मीमांसाग्रन्थस्य व्याख्यानरूपः कर्पूरवर्तिकानामायं ग्रन्थः तालकोशरूपेणोपलभ्यते नाद्यावधि प्रकाशितः।

**मणिदर्पणः**

गङ्गेशोपाध्यायकृततत्त्वचिन्तामणेः सारार्थसंग्रहरूपोऽयं ग्रन्थः। अस्य शब्दखण्डः तिरुवनन्तपुरे मुद्रापितः।

**युद्धकाण्डचम्पूः**

भोजराजेन रामायणचम्पूः सुन्दरकाण्डपर्यन्त एव कृतः। युद्धकाण्डं तु बहुभिः विलिख्य पूरितम्। राजचूडामणिदीक्षितोऽपि युद्धकाण्डचम्पूं विलिख्य भोजचम्पूमपूरयत्।

**तदुक्तम्—**

**भोजेन रामचरितं ग्रथितं निशयैकया।**
**एकेन पूरयत्यह्ना श्रीचूडामणिदीक्षितः॥**

अडयार्पुस्तकालये अस्य मातृकाः सन्ति।

**शंकराभ्युदयम्**

आदिशंकराचार्यचरितवर्णनात्मायं ग्रन्थः सहृदयापत्रिकायां क्रमशः प्राकाश्यं नीतः।

**कान्तिमतीपरिणयः**

काव्यमिदं कान्तिमतीकल्याणापराभिधानमसमग्रतया अडयार् कोशागारे लभ्यते।

**कमलिनीकलहंसः**

नाटिकेयं सप्तमे वयसि लिखिता श्रीवाणीविलासमुद्रणालयेन मुद्रिता प्रकाशिता च।

**आनन्दराघवम्**

सप्ताङ्कं नाटकमिदं रघुनाथनायकस्य पोषकत्वे लिखितम् अडयार्पुस्तकालये रक्ष्यमाणम्।

**रूक्मिणीपरिणयम्**

सर्गद्वयात्मकं काव्यमेतत् अडयारपुस्तकालयेन A.D. १९२९ संवत्सरे मुद्राप्य प्रकाशितम्। इतोऽन्ये राजचूडामणिदीक्षितकृता ग्रन्थाः नोपलभ्यन्ते, अन्वेषणीयाः सन्ति। राजचूडामणिदीक्षितस्य स्वसा अप्पय्यदीक्षितस्य पत्नी इत्याहुः। तथा च राजचूडामणिदीक्षितः अप्पय्यदीक्षितस्य स्यालः।

गोविन्ददीक्षितस्य त्रिवंशनायकभूपालानां प्रधानमन्त्रिणः विपश्चिमस्य पुत्रः वेंकटेशदीक्षितः। स राजचूडामणिदीक्षितस्य गुरुश्च। स्वकृतस्य वार्तिकाभरणस्य व्याख्यान करणे राजचूडामणिदीक्षितमचोदयत्। तच्चोदनेन च तन्त्रशिखामणिः विरचित इति पूर्वमेवोक्तम्। राजचूडामणिः स्वस्य पोषकं रघुनाथनायकमधिकृत्य

आनन्दराघवप्रस्तावनायाम्–

**"प्रतिदिनप्रबन्धपरमेश्वरेण रघुनाथनायक-**

**महीनायकेन संदृब्धः पारिजातहरणनलाभ्युदयप्रमुखाः" इति वर्णयति।**

**काव्यदर्पण** : मम्मटस्य काव्यप्रकाशकारिकाणां विवरणरूपोऽयं बहुविषयविवेचनात्मा प्रौढगम्भीरशैलीगुम्फितः अलंकारग्रन्थः शतवत्सरेऽभ्यःप्राक् षडुच्छवासात्मा तेलुगुलिप्यां मुद्रापितः अशुद्धिबहुलः।

# ग्रन्थप्रतिपाद्यम्

काव्यपर्दणाख्ये स्वचिकीर्षितग्रन्थे प्रेक्षावतां प्रवृत्तिः विषयप्रयोजनसंबन्धाधिकारिरूपानुबन्धचतुष्टयपरिज्ञानमन्तरा न भवतीति अनुबन्धचतुष्टयं प्रथमोल्लासे प्रतिपाद्यते। तत्र—

**नियत्यनियतां ह्लादमयीं नवरसोज्ज्वलाम् ।**
**कृतिं स्वतन्त्रां कुर्वाणा कवेर्जयति भारती ।।**

इति श्लोकेन अभिधेयो विषयः काव्याख्यः प्रादर्शि। अयं श्लोकः—

**नियतिकृतनियमरहितां**
**ह्लादैकमयीमनन्यपरतन्त्राम्**
**नवरसरुचिरां निर्मिति-**
**मादधती भारती कवेर्जयति ।।**

इति काव्यप्रकाशस्थप्रथमश्लोकमक्षरशोऽनुकरोति। अस्य काव्यप्रकाशानुकारिश्लोकस्य या राजचुडामणिदीक्षितकृता विस्तृता व्याख्या सा वस्तुतः काव्यप्रकाशश्लोकस्यापि व्याख्यानरूपा भवति। एवमनेन प्रथमश्लोकेनास्य काव्यपर्दणस्य अभिधेयं काव्यमिति कविभारत्याः स्तुत्या व्यज्यते।

एवमभिधेयप्रतिपादनेऽपि प्रयोजनाभावे प्रेक्षावतां प्रवृत्तिर्न स्यात्, प्रवृत्तिं प्रति इष्टसाधनताज्ञानस्य हेतुतया काव्ये प्रवृत्तिं प्रति काव्यं प्रयोजनसाधनमित्याकारकज्ञानस्यावश्यकत्वात् इत्यालोच्य प्रयोजनमभिहितं—

**काव्यं हि यशसेऽर्थाय शिवेतरनिवृत्तये ।**
**कान्तावदुपेशाय परनिर्वृतये क्षणात् ।।**

इति द्वितीयश्लोके। अयं श्लोकोऽपि

**काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।**
**सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे ।।**

इति काव्यप्रकाशस्थद्वितीयश्लोकानुकारी।

तथा च काव्यस्य दृष्टादृष्टानेकप्रयोजनवत्त्वात् तद्विचारात्मकेऽस्मिन् काव्यदर्पणाख्ये शास्त्रे प्रवृत्तिर्भवितुमर्हतीति सिद्धम्। अथ काव्यप्रकाशस्थः–

**शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।**
**काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे ॥**

इति तृतीय श्लोकः तथैवात्रापि पठितः। अस्य श्लोकस्य 'एवमस्य प्रयोजनमुक्त्वा कारणमाह' इत्यवतारिका काव्यप्रकाशकारैः दत्ता। काव्यदर्पणकारास्तु–

**'एवमिष्टसाधनताज्ञानेऽपि शक्योपायताज्ञानाभावे**
**चन्द्रमण्डलहरणादाविव न काव्ये प्रवृत्तिः स्यात्**
**इति शक्योपायतां तस्य दर्शयति'**

इत्यवतरणं कृतमिति विशेषः। काव्यस्योत्पत्तिरेव न संभवति उत्पादकाभावात् इत्याशङ्क्य उत्पादकानि कारणानि आह इति प्रथमावतारिकायाः अर्थः। काव्यं प्रयोजनसाधनमिति ज्ञानेसत्यपि कृतिसाध्यं काव्यमिति ज्ञानाभावे काव्ये प्रवृत्तिर्न स्यात् इत्याशङ्क्य काव्यरूपः उपायः शक्यः-कृतिसाध्यः इति द्वितीयावतारिकायाः भावः। वस्तुतस्तु सूत्ररूपस्य काव्यप्रकाशवाक्यस्य व्याख्यानरूपमिदम्। अतो नात्र मतभेदः। तथा हि – काव्यस्य कृतिसाध्यत्वं तदैव स्यात्, यदि काव्योत्पादकं कारणं स्यात्। कुलालादयो हि घटादिकारणैः मृदादिभि घटादिकं कृत्या साध्यन्ति। एवं च प्रवृत्तिं प्रति इष्टसाधनताज्ञानं कृतिसाध्यताज्ञानं च कारणम्। चन्द्रमण्डलाहरणादेरिष्ट साधनत्वेऽपि तत्र प्रवृत्त्यभावेन कृतिसाध्यत्वस्यापि प्रवर्तकत्वात् काव्यस्य कृतिसाध्यत्वं काव्योत्पत्तिकारणं विना न संभवतीत्याशयेन 'एवमस्य प्रयोजनमुक्त्वा कारणमाह' इति काव्यप्रकाशकारैरुक्तमिति।

**शक्तिर्निपुणतेत्यादि श्लोकस्यातिविपुलं व्याख्यान् काव्यदर्पणे वर्तते।**

एवं काव्योत्पत्तिकारणमुक्त्वा काव्यस्वरूपरिज्ञाने तत्र प्रवृत्तिर्न संभवतीत्यालोच्य काव्यलक्षणमुक्तम्–

**काव्यं ह्यदुष्टौ सगुणौ शब्दार्थौ सदलंकृती**

इति। इदमपि काव्यप्रकाशानुसारि। एतद्व्याख्यानव्याजेन काव्यदर्पणे बहुविचारितम्। तथा हि-कवेः कर्म काव्यमिति योगव्युत्पत्त्या शब्दार्थविषयककविव्यापार एव काव्यम्, न तु शब्दार्थौ इत्याशङ्क्य कविकर्मविषयभूतयोः शब्दार्थयोरेव लोके कव्यमिति पदस्य प्रयोगात् शब्दार्थौ काव्यम्। यद्यपि लोके शब्द एव काव्यपदप्रयोगात् गुणालंकारादि युक्तः शब्दः काव्यमित्येव वक्तुमुचितम् तथापि शब्दवत् अर्थस्यापि व्यञ्जकत्वात् अर्थस्यापि ग्रहणम्। काव्यव्यवहारेऽअश्यर्हितत्वं तु शब्दस्यैवेति द्योतनायैव शब्दस्य पूर्वनिपातः कृत इति समाधानमुक्तम्।

तदनन्तरं दोषाभावस्य लक्षणघटकत्वे 'निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरः'

इत्यस्य काव्यत्वं न स्यात्। उद्देश्यं पूर्वमनुक्त्वा विधेयस्य प्रथमं निर्देशेन अविमृष्टविधेयांश-रूपस्य दोषस्य सद्भावात्। एवं गुणवत्त्वविशेषणमनुचितम्। गुणस्य रसधर्मत्वेन शब्दार्थयोः गुणवत्त्वाभावात् इत्याक्षेपमुद्भाव्य,

**नीरसो हि निबन्धो यः सोऽपशब्दो महान् कवेः**

इति ध्वनिकारोक्त्या रसाभिव्यञ्जकमेव काव्यमिह लक्ष्यम्। दोषे सति तु रसो नाभिव्यज्यत इति निर्दोषत्वं काव्यलक्षणघटकम्। 'निःशेषच्युतचन्दनम्' इत्यादेः दुष्टत्वेऽपि दोषाज्ञाने सति रसाभिव्यक्त्या तस्योत्तमकाव्यत्वम्। एवं गुणस्य रसधर्मत्वेऽपि स्वाश्रयाभिव्यञ्जकत्व-रूपपरंपरासंबन्धेन तस्य शब्दार्थनिष्ठतया गुणवत्त्वस्य लक्षणघटकत्वे नानुपपत्तिः इति समाहितम्। ईदृशः विचारः काव्यप्रकाशे न दृश्यते।

ततः रसाभिव्यक्तिप्रतिबन्धकस्य दोषस्याभावे सति अभिव्यञ्जके गुणे च सति रसाभिव्यक्तेः जायमानतया काव्यलक्षणे सालंकारत्वविशेषणं व्यर्थमित्याशङ्क्य 'अनलंकृती पुनः क्वापि' इति काव्यप्रकाशविवरणरूपेणोक्तम्—

**दोषहानं गुणादानं कर्तव्यं नियमात् कृतौ ।**<br>**कामचारः पुनः प्रोक्तोऽलंकारेषु मनीषिभिः ।**

इति। शब्दलंकाराणामर्थालंकाराणां च रसाभिव्यञ्जकशब्दार्थोपस्कारकत्वेन अलंकारत्त्वात् उपस्कारकाभावे च न रसाभिव्यक्तिपौष्कल्यमिति सालंकारत्वविशेषणमप्यावश्यकम्। अनलंकृती इति तु स्फुटतरालंकारानास्थातात्पर्यकम् इति समाधानमुक्त्वा 'यः कौमारहरः' इत्यादिषु निरलंकारेषु काव्यलक्षणस्याव्याप्तिरित्याशङ्क्य तत्राप्यस्फुटस्यालंकारस्य सद्भावान्नाव्याप्तिरिति निरूपितम्। अनन्तरं काव्यप्रकाशोक्त रीतिमवलम्ब्य उत्तममध्य-माधमभेदेन काव्यस्य त्रेधा विभागः सोदाहरणं न्यरूपि। एतावता अभिधेयस्य काव्यस्य लक्षणं विभागं च प्रदर्श्य प्रयोजनं च प्रदर्शितम्। विषयप्रयोजनयोः कथनेनैव प्रतिपाद्य-प्रतिपादकभावरूपसंबन्धस्य कव्यतत्त्वजिज्ञासुरूपस्याधिकारिणश्च सुज्ञानतया तौ न विशिष्य निर्दिष्टौ इति प्रथमोल्लासप्रतिपाद्यसंग्रहः।

## द्वितीयोल्लासः

प्रथमे उल्लासे गुणादिविशिष्टं शब्दार्थयुगलंकाव्यम् इत्युक्तम्। तत्र शब्दार्थयो प्राधान्यात् तयोः स्वरूपं वक्तव्यम्। तयोः अर्थपेक्षया शब्दस्य प्राधान्यात् शब्दस्य स्वरूपं विभागसहितं द्वितीये उल्लासे प्रतिपाद्यते।

शक्तः लक्षकः व्यञ्जकश्चेति शब्दः त्रिविधः। लक्षणायाः शक्तिमूलकत्वात् आदौ शक्तस्य व्यञ्जनायाः शक्तिलक्षणोभयमूलकत्वात् व्यञ्जकस्योभयानन्तरं निर्देशः। एवमर्थोऽपि शक्यलक्ष्यव्यङ्ग्यभेदात् त्रिविधः। शक्यलक्ष्यव्यङ्ग्यातिरिक्तस्य वाक्यार्थस्य सद्भावात् चतुर्विधोऽर्थ इति विभजनीये त्रिधा विभागः न्यूनतामापादयतीति शङ्का जायते। तत्र समाधानमेवमुक्तम्-अनेकेषां पदार्थानां संसर्गो हि वाक्यार्थः। स चापदार्थोऽपि

आकाङ्क्षासत्तिमतां पदानां समुच्चारणे सति तात्पर्यविषयतया बुध्यत इति तार्किकाः। संसर्गरूपो वाक्यार्थोऽपि पदशक्य एवेति अन्विताभिधानवादिनः प्राभाकराः। वाक्यार्थो लक्ष्य इति भाट्टाः। वाक्यार्थो न शक्यः नापि लक्ष्यः अपि तु तात्पर्यवृत्तिगम्य इति आलंकारिकमतम्। शक्यपदेन वृत्तिं विना शक्तिप्रयुक्तोपस्थितिविषयत्वस्य विवक्षितत्वान्न विभागन्यूनता – इति।

ततः वाच्यः लक्ष्यः व्यङ्ग्यः इति त्रयाणामप्यर्थानां व्यञ्जकत्वमस्ति। यथा—

**जयस्यधिवसन् गङ्गां देवस्तापैरनीक्षितः**

इत्यत्र जयतिपदवाच्यः उत्कर्षेण वर्तत इत्यर्थः वक्तृकर्तृकं नमस्कारं व्यनक्ति। गङ्गापद-लक्ष्यं तीरं शैत्यपावनत्वादिव्यञ्जकम्। व्यङ्ग्यं शैत्यं तापानीक्षणसामर्थ्यस्य व्यञ्जकम् इति निरूपितम्। ततस्तेषां प्रत्येकं व्यञ्जकत्वमपि प्रत्येकोदाहरणप्रदर्शनपूर्वकं निरूपितम्।

एवम् अर्थस्य स्वरूपं व्यञ्जकत्वं च निरूप्य अवसर-संगत्या वाचकादीनां क्रमेण लक्षणमुक्तम्। तथाहि - साक्षात् संकेतितमर्थं यः प्रतिपादयति स वाचकः। संकेतश्च अस्मात् शब्दादयमर्थो बोद्धव्य इत्याकारिका आप्तस्येच्छा, न तु ईश्वरेच्छामात्रम्। डित्थडवित्थादियदृच्छाशब्दस्यापि वाचकत्वेन संग्राह्यतया तत्रेश्वरेच्छाविरहेण अव्याप्तेः। एवं च लक्ष्यस्याप्यर्थस्य आप्तेच्छाविषयत्वेन संकेतितत्वात् तत्प्रतिपादके लाक्षणिक-पदेऽतिव्याप्तिवारणाय साक्षादिति। अर्थान्तरप्रतीतिमद्वारीकृत्येति तदर्थः। लाक्षणिकं पदं तु शक्यार्थ प्रतीतिं द्वारीकृत्य लक्ष्यार्थप्रतिपादकमिति न तत्रातिव्याप्तिः। तावन्मात्रं च संबन्धितया आकाशस्मारके घटादिशब्देऽतिव्याप्तम्, अतः संकेतितमिति। घटपदस्य आकाशसंबन्धित्वेऽपि आकाशे संकेतितत्वाभावान्नातिव्यप्तिः। तथा च अर्थान्तर-प्रतीतिमद्वारीकृत्य संकेतितमर्थं यः प्रतिपादयति स वाचक इति वाचकस्य लक्षणमुक्तं भवति। अथवा संकेतपदं संबन्धपरम्। तथा च साक्षात्संबन्ध विषयार्थप्रतिपादकत्वं वाचकत्वम्। पूर्वस्मिन् पक्षे साक्षादिति शब्दविशेषणम्। अस्मिन् पक्षे तत् संबन्ध-विशेषणमिति भेदः।

**ततः संकेतिता के इत्याकाङ्क्षायां-**
**जातिर्गुणः क्रिया द्रव्यमिति संकेतिता मताः**

इत्युक्तम्। यद्यपि 'घटमानय' 'घटं स्थापय' इत्यादि वाक्येषु व्यक्तावेव घटादिपदस्य शक्तिग्रहः इति शङ्का भवति, तथापि शक्तिग्रहसमये सर्वव्यक्तीनामुपस्थित्यसंभवात् न व्यक्तिषु शक्तिग्रहः। अपि तु जात्यादावेव। नापि जात्यादिविशिष्टव्यक्तिषु। गौरवात्। तदपेक्षया लाघवात् जात्यादेरेव शब्दशक्यता। व्यक्तिलाभस्तु आक्षेपात् लक्षणया वा भविष्यति इति सुविशदं न्यरूपि।

ततः जात्यादीनां चतुर्णां प्रत्येकं काव्यप्रकाशोक्तरीत्यैव लक्षणमभ्यधायि। ततः अभिधायाः लक्षणमुक्तम्—

**व्यापारः शक्यधीहेतुः मुख्यः शब्दगतोऽभिधा**

इति। शक्यस्य साक्षात्संकेतविषयस्यार्थस्य या धीः तस्याः हेतुः मुख्यो यः शब्दनिष्ठो व्यापारः सोऽभिधा। अत्र शब्दगतव्यापारत्वमात्रोक्तौ लक्षणायामतिव्याप्तिः। तद्वारणाय शक्यधीहेतुरिति। न च छत्रिणो यान्तीत्यत्र अजहल्लक्षणायाः एकसार्थगन्तृत्वेन साधारणरूपेण शक्यलक्ष्यछत्र्यच्छत्र्युभयप्रतिपादकत्वात् तत्रातिव्याप्तिरिति वाच्यम्। शक्यतावच्छेदक-प्रकारेण शक्यविषयकधीहेतुत्वस्य विवक्षितत्वात्। तावन्मात्रं च अभिधामूलकव्यञ्जनाया-मतिव्याप्तमिति मुख्यपदम्। मुख्यत्वं च तदर्थप्रतीतौ तद्गतव्यापारान्तरानपेक्षत्वम्। अभिधामूलकव्यञ्जनायां व्यङ्ग्यार्थप्रतीतौ व्यङ्गविषयकशक्त्यपेक्षास्तीति नातिव्याप्तिः।

**अथ अभिधायाः त्रैविध्यम्-**

**रूढिर्योगो योगरूढिरिति सा त्रिविधा मता**

इति प्रतिपाद्य प्रत्येकं लक्षणं सविस्तरमुपपादितम्।

**अथ लक्षणानिरूपणम्। काव्यप्रकाशे-**

**मुख्यार्थबाधे तद्योगे रूढ़ितोऽथ प्रयोजनात् ।**
**अन्योऽर्थो लक्ष्यते या सा लक्षणारोपिता क्रिया ॥**

इति लक्षणायाः लक्षणमुक्तम्। मुख्यार्थस्य वाच्यार्थस्य बाधे पदार्थान्तरेण अन्वया नुपपत्तौ तात्पर्यानुप- पत्तौ वा सत्यां, वक्तृतात्पर्याविषयत्वे सतीति यावत्। तद्योगे-तस्य मुख्यार्थस्य योगे संबन्धे सति लक्ष्यार्थेन सामीप्यादिरूपसंबन्धे सतीति यावत्। रूढितः-प्रसिद्धेः अथ-अथवा, प्रयोजनात्-शैत्यपावनत्वादिप्रतीतिरूपफलात्। शब्देनेति शेषः। यत्-यया वृत्त्या, अन्योऽर्थो- ऽर्थान्तरं लक्ष्यते-प्रतिपाद्यते सा लक्षणा। सा च शब्दे आरोपिता क्रिया-व्यापाररूपेति काव्य प्रकाशकारिकायाः अर्थः। एतद्विवरणरूपैव प्रकृतकाव्यदर्पणस्था लक्षणालक्षणप्रतिपादिका कारिका–

**तात्पर्यविषयीभूतार्थान्वयानुपपत्तितः ।**
**शक्यभिन्नार्थधीहेतुः व्यापारो लक्षणोच्यते ॥**

इति। अभिधायामतिव्याप्तिवारणाय शक्यभिन्नेति। अभिधायाः यद्यपि अर्थधीहेतुत्वमस्ति, अथापि शक्यभिन्नार्थधीहेतुत्वं नास्तीति नातिव्याप्तिः। छत्रिणो गच्छन्ति इत्यत्र लक्षणायामन्वयानुपपत्त्यभावात् तत्राव्याप्तिः। तद्वारणाय तात्पर्यविषयीभूतेति अर्थविशेषणम्। छत्रि अच्छत्रिसमुदाय कर्तृकमेव गमनमेव तात्पर्यविषयीभूतम्। तेन साकं छत्रिमात्रस्य नान्वययोग्यतेति नाव्याप्तिः। व्यञ्जनायां च तात्पर्यानुपपत्तिरस्ति, तात्पर्यनिर्वाहायैव सर्वत्र वृत्तिकल्पनात्। अतः तात्पर्यविषयार्थान्वयानुपपत्तिपर्यन्तमुक्तम्।

इयं लक्षणा द्विविधेति 'रूढितोऽथ प्रयोजनात्' इत्यनेन सूचितं विभागं–

**द्विविधा सा रूढ़िपूर्वा फलपूर्वेति भेदतः**

इति स्पष्टं प्रादर्शयत्। आद्याया उदाहरणं कुशल इति। द्वितीयायाः गङ्गायां घोष इति। रूढ़िपूर्वा लक्षणा गौणी शुद्धेति द्विविधा। शक्यसादृश्यसंबन्धरूपा गौणी। शक्यसादृश्य-भिन्नसंबन्धरूपा शुद्धा। फलपुर्वा लक्षणा पञ्चविधा जहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणा सारोपलक्षणा साध्यवसानलक्षणेति। एतेषां सर्वेषामपि प्रभेदानां लक्षणान्युदाहरणानि च सविस्तरं विवेचितानि। काव्यप्रकाशेऽपि एतावान् विचारो नोपलक्ष्यते।

अनन्तरं रूढिलक्षणा व्यङ्ग्यरहिता फलक्षणा तु व्यङ्ग्यसहिता। प्रयोजनस्य व्यञ्जनैकगम्यतया सव्यङ्ग्यैव फललक्षणा इत्युक्त्वा तत् व्यङ्ग्यं क्वचित् गूढं क्वचित् अगूढमिति निरूप्यते।

अथ अभिधालक्षणाभ्यामन्या व्यञ्जनाख्या तृतीया वृत्तिरवश्यमङ्गीकरणीयेति काव्यप्रकाशोक्तदिशा स्वयं च काश्चन युक्तीः संयोज्य निरूप्यते।

## तृतीयोल्लासः

पूर्वत्र द्वितीये उल्लासे वाचकलक्षकव्यञ्जकभेदेन त्रिविधानामपि शब्दानां व्यञ्जकत्वमस्तीत्यपि प्रतिपादितम्। तथा तेषां त्रयाणां शब्दानां वाच्यलक्ष्यव्यङ्ग्यभेदेन त्रिविधा अर्थाश्च सन्तीति प्रसङ्गात् निरूपितम्। अस्मिन् तृतीये उल्लासे त्रिविधानामपि तेषां अर्थानां व्यञ्जकत्वं प्रतिपाद्यते। अत्रापि काव्यप्रकाशोक्ताः कारिकाः तथैव लिखिताः। परं तु तासां कारिकाणां विस्तृतं व्याख्यानमत्र कृतमिति विशेषः।

वाक्यार्थज्ञानानन्तरं वक्त्रादिवैशिष्ट्यज्ञानवतां सहृदयानां यार्थान्तरधीः तदनुकूलोऽर्थस्य व्यापारो व्यञ्जना। एवं च यद्यर्थानां व्यञ्जकता न स्यात्, तदा वाक्यार्थप्रतीत्यनन्तरमर्थान्तरधीर्न स्यात्। न चैवं सर्वेषां सर्वत्र व्यङ्ग्यप्रतीतिः स्यादिति वाच्यम्। वक्त्रादिवैशिष्ट्यज्ञानं नवनवोन्मेषशालिज्ञानात्मक प्रतिभोत्थापकतया अर्थानां व्यञ्जकत्वे सहकारीत्यभ्युपगमात् इति सोदाहरणं प्रपञ्चितम्।

ततः प्रत्येकं वक्तृवैशिष्ट्यज्ञानस्य बोधयितव्यवैशिष्ट्यज्ञानस्य काकुवैशिष्ट्य-ज्ञानस्य वाक्यवैशिष्ट्यज्ञानस्य वाच्यवैशिष्ट्यज्ञानस्य अन्यसंनिधिवैशिष्ट्यज्ञानस्य प्रस्ताववैशिष्ट्यज्ञानस्य देशकालचेष्टावैशिष्ट्यज्ञानानां च व्यञ्जनां प्रति सहकारिकारणत्व-मुदाहरणपद्यप्रदर्शनपूर्वकमुपपादितम्। ततः उक्तवैशिष्ट्यानां मध्ये क्वचित् द्वयोः त्रयाणां वा संहत्यपि व्यञ्जकत्वमस्तीति प्रतिपादितम्।

## अथ चतुर्थ उल्लासः

एतावता निर्दोषसगुणालंकारशब्दार्थयुगलं काव्यम् इति काव्यलक्षणमुक्त्वा तत्र विशेष्यभूतयोः शब्दार्थयोः सप्रभेदं निरूपणं कृतम्। अथ विशेषणभूतयोः गुणालंकारयोः निर्दोषत्वप्रतियोगिभूतानां दोषाणां च निरूपणमुचितम्। तथापि तत्तदवान्तरभेदविशिष्टतया धर्मिणि काव्ये साकल्येन निरूपिते सत्येव तद्धर्मभूतानां गुणादीनां निरूपणमुचितमिति पूर्वमनिरूपितः उत्तमकाव्याख्यः काव्यप्रभेदः अत्रोल्लासे निरूप्यते। तत्रापि रसहानिकरत्वरूपस्य दोषत्वस्य साक्षाद्रसधर्मत्वरूपस्य गुणत्वस्य अङ्गद्वारेण

रसोपकारकत्वरूपस्य अलंकारत्वस्य च रसनिरूपणाधीननिरूपणतया प्रथमं रसस्यैव स्वरूपं निरूपणीयमित्यभिप्रेत्य आदौ ध्वनिकाव्यं विभजते—ध्वनिकाव्यं लक्षणामूलं अभिधामूलं चेति सामान्यतो द्विविधम्। तत्र लक्षणामूलध्वनौ वाच्यमविवक्षितं भवति। तं चाविवक्षितवाच्यमित्याचक्षते। अभिधामूलध्वनौ तु वाच्यं विवक्षितं व्यङ्ग्यनिष्ठं भवति। अतस्तं विवक्षितवाच्यमित्याहुः। लक्षणामूलध्वनिः अर्थान्तरसंक्रमितवाच्यः अत्यन्ततिरस्कृतवाच्यश्चेति सामान्यतो द्विविधः। अभिधामूलो ध्वनिः असंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति द्विविधः। एतेषां प्रभेदानां प्रत्येकं लक्षणान्युदाहरणानि च काव्यप्रकाशोक्तरीत्यैवात्रापि प्रदर्शितानि। काव्यप्रकाशे अतिसंक्षेपेण निरूपणम्। अत्र तु विस्तरेण निरूपणमिति वैशिष्ट्यम्। अत इदं काव्यप्रकाशव्याख्यानमिति वक्तुं शक्यते।

यदा रसादयो व्यज्यन्ते तदा असंलक्ष्यक्रमव्यङ्ग्यो ध्वनिरित्युक्तम्। तत्प्रसङ्गात् रसादीनां लक्षणं विवक्षुः आदौ रसस्वरूपमाह। काव्यप्रकाशिकाकारिके रसलक्षणपरे तथैव पठित्वा तयोरत्र विस्तरेण, व्याख्यानं क्रियते। 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति भरतसूत्रम् अस्य सूत्रस्य तात्पर्यपरिग्रहे मतभेदो वर्तते। तत्र चत्वारि मतानि व्याचख्युः राजचुडामाणिदीक्षिताः। तदुक्ति-क्रमानुसारेण प्रथमं भट्टलोल्लटप्रभृतीनां सिद्धान्तम् आख्यास्यामः।

### १. भट्टलोल्लटमतम् (उत्पत्तिवादः)

आलम्बनविभावः उद्दीपनविभावश्चेति द्विविधो विभावः। ललनादयः आलम्बनविभावा; उद्यानादयः उद्दीपनविभावाः। ताभ्याम् उभाभ्यां रत्यादिको भावो जायते। रत्यादेः स्थायिभावस्य ललना, ललनोद्यानादिविभावेन कार्यकारणभावः संबन्धः, कटाक्षभुजाक्षेपादिना अनुभावेन ज्ञाप्यज्ञापकभावसंबन्ध उत्कण्ठादिना व्यभिचारिणा पोष्यपोषकभावः संबन्धः, रसस्य निष्पत्तिः उत्पत्तिः अभिव्यक्तिः पुष्टिश्च भवति।

ततश्च विभावैः जनितः, अनुभावैः प्रतीतः, व्यभिचारिभिः पुष्टो रत्यादिस्थायीभावो मुख्यो रसः। स च वस्तुतः रामादौ अनुकार्ये नाट्येन अभिनयक्षमे वर्तमानः नटे सामाजिकैः आरोप्यमाणः तेषां चमत्कारहेतुर्भवति।

### २. शङ्कुकमतम् (अनुमितिवादः)

स्थायिनो रत्यादेः विभावादिभिः अनुमाप्यानुमापकभावः संबन्धः तेन रसनिष्पत्तिः अनुमितिः इति शङ्कुकस्य मतम्। लोके हि सम्यङ्मिथ्यासंशयसादृश्यभेदात् चतुर्विधा प्रतीतिः भवति। अत्र राम एवायं, अयमेव रामः, इति सम्यग्बुद्धिः। न रामोऽयम्, इति मिथ्याबुद्धिः, अयं रामो न वा इति संशयबुद्धिः। रामसदृशोऽयम् इति सादृश्यबुद्धिः। उक्तप्रतीतिभ्यः विलक्षणया बुद्ध्या चित्रे तुरगोऽयम् इतिवत् रामोऽयम् इति प्रथमं नटः गोचरी क्रियते। ततः तत्र अविद्यमानमपि विभावादित्रयं लिङ्गं कृत्रिमं नटस्य शिक्षाभ्यासबलात् प्रकाश्यते सहृदयैः सामाजिकैः। तेन लिङ्गेन कृत्रिमेण रत्यादिरनुमीयते। सा च अनुमितिः चमत्कारसनाथाप्रतीतिचर्वणा भवति। तया चर्वणया गोचरीक्रियमाणः स्थायी रसः उच्यते।

स च सामाजिकेषु इति व्यवहारः।

**३. भट्टनायकमतम् (भुक्तिवादः)**

विभावादिभिः संयोगात् भोज्यभोजकभावसंबन्धात् रसस्य निष्पत्तिः भुक्तिरिति।

स्वसंबन्धराहित्येन ताटस्थ्येन रसप्रतीतिः नास्वाद्यते। नटगतत्वेन नानुमीयते। नाट्यकरणकाले रामाद्यभावेन तद्रत्यादेरप्यभावः असतः सत्त्वेन अनुमानं न संभवति। वस्तुतस्तु रामादिगता रतिः नटगतत्वेन अनुमितापि कथं सामाजिके असति चमत्कारं जनयेत्। कथं तर्हि भोगपक्षे सामाजिकेऽपि रसस्य सिद्धत्वात् भोगः संभवति इति चेत् उच्यते–अयं भोगः.अलौकिकः।कथम् शब्दात्मनः काव्यस्य त्रयो व्यापाराः अभिधा, भावना, भोगीकृतिः इति। तत्र अभिधा मुख्यार्थविषया लक्ष्यार्थविषया चेति द्विविधा। भावना, भावकत्वं साधारणीकरणम्।एतदेव सीतादि विशेषाणां कामिनीत्वादिसामान्येन उपस्थापनम्, अनेनैव भावकत्वव्यापरेण विभावादयः स्थायी च साधारणीक्रियन्ते। एवं काव्ये नाट्ये च भावकत्वव्यापारेण साधरणीकृतैः विभावादिभिः तृतीयव्यापारभूतभोजकत्वसाहित्येन रत्यादिः स्थायी भुज्यते। काव्ये नाट्ये च अभिधालक्षणाद्वयभिन्नेन भावकत्वाख्यव्यापारेण साधरणीकृतो भोगाख्येन व्यापारान्तरेण सहृदयैः भुज्यमानो रत्यादिकः स्थायी रस इति। ततश्च सूत्रे संयोगपदं साधरणीकरणपदं, निष्पत्तिपदं भोगपरम् इत्याहुः।

**४. अभिनवगुप्तपादमतम्**

भट्टनायकमते यो भावनाख्यः व्यापारः स्वीकृतः नेष्यतेऽस्मिन्मते। तत्र उक्ता भुक्तिरेव व्यक्तिः।विभावाद्यैः व्यक्तिविषयीकृतः रत्यादिः स्थायीभावो रसः भग्नावरणाचिदेव व्यक्तिः।यथा शरावादिपिधानेन पिहितः दीपः पदार्थान् न प्रकाशयति, स्वयं च प्रकाशमानः न दृश्यते, पिधाने अपावृते स्वयं प्रकाशो दृश्यते, पदार्थानामपि प्रकाशयति। तथा व्यञ्जकानां विभावादीनां सामाजिककृता चर्वणा आवरणं भञ्जयति एवं चर्वणा महिम्ना सहृदयस्य निजसहृदयतायाः उन्मेषेण रत्यादिः स्थायी रसपदवाच्यः आनन्दस्वरूपो भवति। स च आनन्दः अलौकिकः।

रत्यादि स्वायिभावः सहृदयात्मनि नित्यो वर्तमानः अनभिव्यक्तः सन् विभावादेः चर्वणया पानकरसन्यायेन व्यञ्जितः रसतां प्राप्नोति। ततः–

**शृंगारहास्यकरुणारौद्रवीरभयानकाः ।**
**बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्यरसाः स्मृताः ॥**

इति अष्टौ रसाः निर्दिष्टाः। नाट्ये रसाः इत्युक्त्या नवमः शान्तरसः नाट्ये नास्ति। अपि तु काव्य एवेति सूचितम् केचित्तु नाट्येऽपि शान्तो रसोऽस्तीत्याहुः। ततः शृङ्गारादीनां रसानां क्रमशः लक्षणानि सोदाहरणं प्रदर्शितानि। ततः रत्यादीनां स्थायिभावानां लक्षणोदाहरणानि प्रतिपादितानि।

ततः शान्ताख्यो नवमो रसः काव्यमात्रासाधारणो निरूप्यते स्म।

**निर्वेदस्थायिकः काव्ये शान्तोऽपि नवमो रसः ।**
**संसारे किमसारेऽस्मिन् भक्तिं कुरु भवे मनः ।।**

तत्त्वज्ञानादिजनितनिष्फलत्वधीरूपो निर्वेदः स्थायी स शान्ताख्यो नवमो रसः। अन्ये तु सर्वचित्तवृत्तिप्रविलयरूपः शम एव तत्र स्थायी। अत एव 'जुगुप्साविस्मयशमाः स्थायिभावाः प्रकीर्तिताः' इति उद्भटेनोक्तमित्याहुः। अभावरूपस्य शमस्य चित्तवृत्तिरूपत्वाभावेन न स्थायिभावत्वमित्यपरे।

**न यत्र दुःखं न सुखं न चिन्ता**
**न द्वेषरागौ न च काचिदिच्छा।**
**रसस्तु शान्तः कथितो रसज्ञैः**
**सर्वेषु भावेषु समप्रमाणः।।**

इत्युक्तस्य समस्तव्यापारप्रविलयरूपस्य शान्तस्याभिनेतुमशक्यतया तस्य नाट्यरसत्वायोगात् काव्ये शान्तः रसः इत्युक्तम्। शान्त्यभिव्यञ्जकस्य वनप्रवेशविविक्तदेशसेवित्वादेः अभिनययोग्यतया नाट्यरसत्वमपि शान्तस्यास्तीत्यन्ये वदन्ति। येषां रागद्वेषवासनाः न सन्ति तेषामयं चर्वणीय इति कथमस्य रसत्वमिति न शङ्कनीयम् तर्हि वीतरागादिभिः शृंगारादीनामपि अचर्वणीयतया तेषामपि रसत्वं न स्यात्। न चैवमपि शान्तस्य भरतमुनिना विभावाद्यनुपदेशात् कथं रसत्वमिति वाच्यम्। तस्य विभावाद्यकथनं परमपुरुषार्थतया लोकव्यवहारातीत्वात् न तु अरसत्वात्। शक्यं च तत्र विचक्षणैः विभावादिकम्। तथा हि अध्यात्मशास्त्राभ्यास सत्पुरुषसेवादयो विभावाः। यमनियमादयः अनुभावाः। मतिस्मृतिधृतिचिन्तावितर्कादयः व्यभिचारिणः इति शान्तस्य रसत्वं सप्रमाणं न्यरूपि। ततः भावनिरूपणम्। ततः रसाभासानां निरूपणम्। ततः भावाभासनिरूपणम्। ततः भावोदयः भावशान्तिः। भावसन्धिः भावशबलता। एवमसंलक्ष्यक्रमव्यङ्ग्यं प्रसक्तानुप्रसक्तनिरूपणपूर्वकं निरूप्य अथासंलक्ष्यक्रमव्यङ्ग्यो निरूप्यते। तत्प्रभेदाश्च प्रत्येकोदाहरणपूर्वकं निरूपिताः। अत्र भूयान् विस्तरः इतरग्रन्थेष्वविद्यमानो वर्तते। तेनास्य व्यञ्जनमर्मज्ञत्वं स्पष्टो भवति।

अन्ते च सप्रपञ्चं निरूपिताः ध्वनिभेदाः संकलय्य प्रदर्शिताः। ते यथा—ध्वनेः एकपञ्चाशत् भेदाः शुद्धाः मताः। तथा हि लक्षणामूलाविवक्षितवाच्यध्वनेः अर्थान्तरसंक्रमितवाच्यात्यन्ततिरस्कृतवाच्यरूपयोः भेदयोः प्रत्येकं पदवाक्यप्रकाश्यत्वे चत्वारो भेदाः। अभिधामूलविवक्षितान्यपरवाच्यध्वनावसंलक्ष्यक्रमव्यङ्ग्याख्यारन्यरसध्वनेः प्रबन्धवाक्य-पद-पदैकदेश-वर्णरचनागतत्वेन षड्भेदाः। संलक्ष्यक्रमव्यङ्ग्याख्यभेदे तु शब्दशक्तिमूले वस्त्वलंकाररूपयोः व्यङ्ग्ययोः प्रत्येकं पदवाक्यप्रबन्धगतत्वेन प्रकाश्यत्वेन चत्वारो भेदाः। अर्थशक्तिमूले तु स्वतः संभविन्यर्थे वस्तुना वस्तुध्वनिः। वस्तुना अलंकारध्वनिः अलंकारेण वस्तुध्वनिः, अलंकारेण अलंकारध्वनिरिति चतुर्णां भेदानां प्रत्येकं पदवाक्यप्रबन्धगतत्वेन त्रैविध्यात् द्वादश भेदाः। एवमर्थस्य कविप्रौढोक्तिसिद्धत्वेऽपि

द्वादश भेदाः। तथा अर्थस्य कविनिबद्धवक्तृप्रौढौक्तिसिद्धत्वेऽपि द्वादश भेदाः। एवमाहत्य अर्थशक्तिमूलध्वनौ षट्त्रिंशत् भेदाः। शब्दार्थोभयशक्त्युद्भवस्तु वाक्य एवेत्येकविध एव। एवं शुद्धा ध्वनिभेदाः एकपञ्चाशत्। मिश्रभेदाः १०४०४ मिश्राणां शुद्धानां च आहत्य गणनायां पञ्चपञ्चाशदधिकचतुश्शतापधिकदशसहस्री भेदाः भवन्ति। (१०४५५)

## अथ पञ्चम उल्लासः

एतावता चतुर्भिरुल्लासैः उत्तमं काव्यं निरूपितम्। अथ पञ्चमे उल्लासे मध्यमं काव्यं निरूप्यते।

**काव्यं तु मध्यमं व्यङ्ग्ये वाच्यादनतिशायिनि ।**
**तदेव च गुणीभूतव्यङ्ग्यमित्युच्यते बुधैः ॥**

इति मध्यमकाव्यस्य लक्षणमुक्तम्। ततः गुणीभूतव्यङ्ग्यापरनामकस्य मध्यम काव्यस्य

**अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् ।**
**संदिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम् ॥**
**व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः।**

इत्यष्टौ प्रभेदाः निर्दिष्टाः। ततस्तेषां प्रभेदानां प्रत्येकं सोदाहरणं लक्षणानि प्रदर्शितानि। तेषामवान्तरभेदा अपि प्रत्येकं प्रादर्शिषत। ततः यत्र वस्तुमात्रेणालंकारो व्यज्यते तत्र न गुणीभूतव्यङ्ग्यता। तथा हि— द्वयमिह चमत्कारप्रयोजकं चित्रत्वं व्यङ्ग्यत्वं चेति। ततश्चालंकारेण वस्तुध्वनौ व्यङ्ग्यत्वविवक्षया ध्वनित्वेऽपि चित्रत्वविवक्षया द्वयोस्तुल्यप्राधान्यात् गुणीभूतव्यङ्ग्यतापि संभवति। तथा वस्तुना वस्तुध्वनौ व्यङ्ग्यत्वविवक्षया ध्वनित्वेऽपि उभयोश्चित्रत्वविवक्षया तुल्यप्राधान्यात् गुणीभूतव्यङ्ग्यतापि संभवति। तथा अलंकारेणालंकारध्वनौ व्यङ्ग्यत्वविवक्षया ध्वनित्वेऽपि उभयोश्चित्रत्वविवक्षया तुल्यप्राधान्यात् गुणीभूतव्यङ्ग्यतापि संभवति। वस्तुना अलंकारध्वनौ तु व्यञ्जकस्य वस्तुनोऽचित्रत्वात् अव्यङ्ग्यत्वाच्च तुल्यप्राधान्यविवक्षा न संभवतीति न गुणीभूतव्यङ्ग्यत्वसंभवः। किं तु ध्वनित्वमेव इति निरूपितम्। ततः—

**अलंकारैर्गुणीभूतव्यङ्ग्यैश्चालंक्रियान्वितैः ।**
**संसृष्टिसंकरैर्योगे न गण्यन्ते ध्वनेर्भिदाः ॥**

इति न्यरूपि। एवमनन्तप्रभेदोऽपि ध्वनिः वस्तुध्वनिः, अलंकारध्वनिः, वाच्येतरध्वनिः इति त्रिराशिः इति प्रत्यपादि।

ततः 'नन्वेवमपि विभावादिवाचकपदैः लक्षणयैव रसप्रतीतिरस्तु, कृतमतिरिक्त-व्यञ्जनाख्यव्यापारकल्पनया इत्याशङ्क्य, मुख्यार्थबाधाभावात् प्रयोजनाभावाच्च लक्षणायाः तत्राप्रवृत्तेः गौरवस्य प्रामाणिकत्वात् व्यञ्जनाकल्पनायां न दोषः। अपि च न केवलं रसादिप्रतीत्यनुसारेणैव व्यञ्जनायाः कल्पनम्, किंतु वस्त्वलंकारप्रतीत्यर्थमपि तत्कल्पनमिति

सयुक्तिकं प्रतिपादितम्, तत्प्रसङ्गात् अन्विताभिधानवादश्च सम्यक् विवृतः।

तथा व्यञ्जनायाः अभिधातः बहुभिर्हेतुभिः भेदो निरूपितः। तथा हि वाच्योऽर्थः सर्वान् प्रतिपत्तॄन् प्रति एकरूप एव व्यङ्ग्चः। अर्थस्तु प्रकरणवक्तृप्रतिपत्त्रादिभेदेन भिन्नभिन्नरूप एवेति विरुद्धधर्माध्यासापातात् तयोः भेदेन तत्प्रतीत्युपयोगिनोः व्यापारयोरपि भेद आश्रयणीय इति अभिधातो भिन्ना व्यञ्जना। यथा अस्तं गतः सवितेत्यत्र सूर्यास्तमयरूपो वाच्यार्थः सर्वान् प्रति एकरूप एव। व्यङ्ग्यार्थस्तु चौर्यप्रकरणे संप्रति अवस्कन्दनावसर इति, अभिसारिकाविषये तु अभिसरणमुपक्रम्यतामिति, सायंकृतसंकेतनायिकाविषये प्राप्तस्ते प्रेयानिति, कर्मकरो वक्ता चेत् कर्मकरणात् निवर्तामह इति, माणवकानां प्रतिपत्तृत्वे सन्ध्याविधिः उपक्रम्यतामिति, दूरगमनोन्मुखविषये दूरं मा गा इति, गोपालविषये गावो गृहं प्रवेश्यन्तामिति, तापार्थविषये सन्तापोऽधुना न भवतीति, वाणिक् विषये विक्रेयवस्तूनि संह्रियन्तामिति नानाविध एव प्रतीयते। अत एव वाच्यव्यङ्ग्ययोः संख्याभेदादपि भेदः, वाच्यार्थ एकः व्यङ्ग्यार्थोऽनेक इति। 'गच्छ गच्छसि चेत् कान्त' इत्यादौ निषेधो वाच्यः, व्यङ्ग्यस्तु विधिरिति स्वरूपभेदादपि वाच्यव्यङ्ग्यौ भिन्नौ। क्वचित् वाच्यप्रतीतिः संशयात्मिका, व्यङ्ग्यप्रतीतिस्तु निर्णयात्मिकेति प्रतीतिवैचित्र्यात् तयोर्भेदः। वाच्यप्रतीतिव्यङ्ग्यप्रतीत्योः कालभेदात् क्वचित् भेदः। एवं बहुभिर्हेतुभिः वाच्यव्यङ्ग्ययोः भेदः सोदाहरणं प्रपञ्चितः। ततो लक्ष्यार्थापेक्षया व्यङ्ग्यार्थस्य भेदः बहुभिः कारणैः सोदाहरणं निरूपितः।

ततः अनन्यलभ्य एवार्थे वृत्त्यन्तरकल्पनं युक्तम्। प्रकृते चानुमानादेव व्यङ्ग्यार्थो-पस्थितिसंभवात् न व्यञ्जनाख्यवृत्त्यन्तरकल्पनं युक्तम् इति व्यक्तिविवेककारमतं सविस्तरमनूद्य बहुभिर्हेत्वाभासैः अनुमानात् व्यङ्ग्यार्थप्रतीतेरसंभवमुपपाद्य व्यञ्जनाख्य-वृत्त्यन्तरं समर्थ्य पञ्चम उल्लासः उपसंहृतः।

## षष्ठः उल्लासः

अस्मिन् उल्लासे अधमकाव्यनिरूपणम्। शब्दचित्रम् अर्थचित्रमिति अधमं काव्यं द्विविधम्। शब्दार्थयोर्मध्ये शब्दालंकारस्य प्राधान्ये शब्दचित्रम्। अर्थालंकारस्य प्राधान्ये अर्थचित्रम्। तत्र अर्थवत एव शब्दस्य काव्यत्वम्, न तु शब्दमात्रस्य, मर्दलशब्दादेरपि काव्यत्वप्रसङ्गात्। अतः अर्थमुखानवेक्षिणः शब्दस्य न काव्यत्वम् किं तु अर्थस्यैव। ततश्च काव्यशोभाकरा अलंकाराः अर्थगता एवेति रूपकादय एवालंकारा नानुप्रासादय इति केचित्। अपरे तु शब्दानुपस्थापितस्यार्थस्य चमत्कारित्वाभावेन आवश्यकत्वात् शब्द एव काव्यमिति शब्दाश्रिता अनुप्रासादय एवालंकाराः न त्वर्थगता रूपकादय इत्याहुः, इति मतद्वयमुपन्यस्य वस्तुतस्तु शब्दावच्छिन्नोऽर्थोऽर्थावच्छिन्नः शब्दश्च काव्यम्, न तु एकैकमात्रम्, विनिगमनाविरहात्। किं च व्यङ्ग्यप्रतीत्यनुकूलमेव काव्यम् व्यङ्ग्य-प्रतीत्यनुकूलता च शब्दार्थयोस्तुल्येति शब्दार्थाविव काव्यम्। ततश्च शब्दाश्रिता अनुप्रासादयः अर्थाश्रिता रूपकादयश्च अलंकारा इति स्वमतं निष्कृष्टम्।

ॐ

श्रीराजचूडामणिदीक्षितविरचितः

# काव्यदर्पणः

## प्रथमोल्लासः

**[१]भव्यारम्भाय वो भूयादव्याजकरुणानिधिः ।**
**स (न ?) व्यार्थालोकने कम्रा[२] दिव्या या कापि देवता ॥१॥**

काव्यदर्पणाख्यं ग्रन्थमारभमाणो ग्रन्थकारो विघ्न विघाताय स्वेष्टदेवतां स्तुवन् वस्तुनिर्देशमप्यर्थादभिधत्ते नियत्यनियतामिति॥

**नियत्यनियतां ह्लादमयीं नवरसोज्ज्वलाम् ।**
**कृतिं स्वतन्त्रां कुर्वाणा कवेर्जयति भारती ॥२॥**

नियतिर्नाम कालतत्त्वात्परं सप्तविंशतितमं तत्त्वम्। सा च पद्मादावेव सौरभादिकं नियमयतीति शैवशाक्तादितन्त्रेषु प्रसिद्धम्। यद्वा नियतिरदृष्टं तथा ब्रह्मकृतिर्नियमिता। भारतीकृतिस्तु न नियतिकृतनियमनानियमिता पद्मादिव्यतिरिक्तकामिनीमुखादावपि सौरभादिवर्णनात्। ह्लादमयीमानन्दघनाम्। ब्रह्मकृतिर्हि सुखदुःखमोहात्मिका। यथैकैव कामिनी कामिनं सुखाकरोति, तं प्रति तस्याः सुखात्मकसत्त्वसंबन्धित्वात्। सैव सपत्नीं दुःखाकरोति, तां प्रति दुःखात्मकरजः संबन्धित्वात्। सैव तामलभमानमन्यं मोहयति। तं प्रति तस्या मोहात्मकतमः[३] संबन्धित्वात्। एवं विश्वमात्रस्य सुखदुःखमोहवत्त्वं[४]मूह्यम्। भारतीकृतिस्तु आनन्दमात्रघना। न च शत्रुकाव्याद्दुःखजननमिहाप्यविशिष्टमिति वाच्यम्। शत्रुकाव्यश्रवणानन्तरं सुखस्यैव जननात् तदीयत्वप्रतिसंधानेनैव पश्चाद्दुःखोत्पत्तेः। न

---

१. M. adds अभीप्सितार्थीसिद्ध्यर्थं पूजितो यः सुरैरपि ।
   सर्वविघ्नच्छिदे तस्मै विष्वक्सेनाय ते नमः ॥

२. Pr. नम्रा for कम्रा

३. Pr. मोहस्वरूप for मोहात्मकतमः

४. Pr. मोहत्वं for मोहवत्त्वं

चैवमपि क्वचिदर्थानवगमेन मोहजनकत्वमवर्जनीयमिति वाच्यम्। व्युत्पन्नबुद्ध्यविषयार्थ-प्रतिपादकस्याकाव्यत्वात्। अव्युत्पन्नबुद्ध्यविषयार्थकत्वे च अन्धानिरीक्षितकामिनी-सौन्दर्यवत् काव्यस्यानपराधादिति दिक्। नवरसोज्ज्वलां नवभिः शृङ्गारादिभी रसैरुज्ज्वलां हृद्यां यद्वा नवरसा यस्यां सा नवरसा सा चासावुज्जवला चेति कर्मधारयः। ब्रह्मकृतौ तु मधुराम्लादयः षडेव रसाः। न च तैः सा हृद्यैव आम्लादीनामहृद्यत्वात्। न चात्रापि करुणादिरसानां न[१] हृद्यतेति वाच्यम्। तेषामपि काव्ये निबद्धानां नाटकेऽभिनीयमानानां चास्वाद्यमान[२]दशायां हृद्यत्वेनैवानुभवसाक्षिकत्वात्, अन्यथा तत्र प्रेक्षावत्प्रवृत्त्ययोगात्। स्वतन्त्रां परमाण्वादिसमवायिकारणतत्क्रियागुणाद्यसमवायिकारण[३]निरपेक्षाम्। यद्वा स्वपदेन प्रस्तुता भारत्युच्यते। तन्मात्रायत्ताम्। ब्रह्मकृतिस्तु नैवंविधा, तादृशीं कवेः कृतिम्। क्रियत इति कृतिः काव्यम्। करणं कृतिरिति काव्यरचनानुकूलव्यापारो वा तां कुर्वती। न च कविकृतेः कविरेव कर्ता न भारतीति वाच्यम्।

न्यायमते कुलालादिकर्तृकस्य[४] घटादेरीश्वरकर्तृकत्ववत् कविक[५]र्तृककृतेरपि भारतीकर्तृकत्वस्याप्यविरोधात्। यद्वा कृतिपदं रसाभिव्यक्तिपरम्। कविपदं च भारतीपदेनान्वेति। ततश्चोक्तरूपां रसाभिव्यक्तिं कुर्वती कवेर्भारती का[६]व्यं जयतिसर्वोत्कर्षेण[७] वर्तते।

ननु एवं कविभारत्याः शब्दात्मिकाया देवतात्वाभावेन तत्स्तुतेः विघ्नविघात-सामर्थ्याभावात् प्रकृतासाङ्गत्यम्। न चात्र भारतीपदं लक्षणया तदधि[८]ष्ठातृदेवतां प्रतिपादयति तथा[९] च नोक्तदोष इति वाच्यम्। तथा सति कविपदवैयर्थ्यं[१०] स्यात्। न च कविसंबन्धिशब्दा-धिष्ठातृदेवतालाभार्थं तदिति वाच्यम्। शब्दाधिष्ठातृदेवतान्तराभावेन तादृशदेवताप्रतीतेरपि भारतीपदेनैव सिद्धेः। न च शिवादिदेवतान्तराणामपि तत्तन्म[११]न्त्रात्मकशब्दाधिष्ठातृदेवतात्वे[१२]न तद्वैलक्षण्येन कवि संबन्धिशब्दाधिष्ठातृदेवताप्रतीतेः कविपदं विना न लाभ इति वाच्यम्। तथापि शब्दतदधिष्ठातृदेवताशक्तस्य भारतीपदस्य कविपदसमभिव्याहारेण शब्दरूपार्थ

---

१. M. अहृद्यत for न हृद्यत
२. Pr. adds तयातद् before दशायां
३. M. कारणादिनिरपेक्षां for कारणनिं
४. Pr. adds अपि before घटादेः
५. M. कृतकृते for कर्तृककृतें
६. M. om काव्यं
७. Pr. उत्कर्षेण for सर्वोत्कषेण
८. Pr. ष्ठान for ष्ठातृ
९. Pr. इति for तथा च
१०. Pr. om स्यात्
११. Pr. मात्रा for मन्त्रा
१२. Pr. om देवता before तद्वैं

एव शक्तेः नियन्त्रितत्वेन लक्षणयापि तदधिष्ठातृदेवताप्रतीत्यसंभवादिति चेन्न। मुख्यया वृत्त्यात्र[१] शब्दात्मककविभारतीस्तुतिरेव क्रियते। व्यञ्जनया तु तदधिष्ठातृदेवतास्तुतिः। व्यङ्ग्यार्थस्य विघ्नविघातसामर्थ्याच्च न प्रकृतासाङ्गत्यम्। अत्र च भाववस्त्वलंकाराः त्रयोऽपि व्यज्यन्ते। तथा हि भारतीस्तुत्यादिभिरनुभावैर्भारतीविषया रतिः व्यज्यते। ततश्च देवतादि विषयरतेर्भावत्वेन वक्ष्यमाणत्वाद्भाव व्यक्तिः। तथा मुखतः कविभारतीस्तुतिरिति पक्षे देवतास्तुतिरूपं वस्तु व्यज्यते। मुखत एव देवतास्तुतिरिति पक्षेऽपि तां प्रति प्रणतोऽयमिति नमस्काररूपं वस्तु व्यज्यते।

ननु जयतीत्यत्रोत्कर्षप्रतियोगिनो विशिष्यानुपादानात् संकोचे मानाभावेन भारत्याः सर्वोत्कृषृत्वप्रतीतेः अयं ततोऽपकर्षज्ञानवान् भारतीगतसर्वोत्कृषृत्वज्ञानत्वादित्यनुमानादेव नमस्कारप्रतीतिः, न व्यञ्जनया। न च तद्गतोत्कर्षज्ञानवत्त्वस्य तदपेक्षया स्वगतापकर्षज्ञानेन कथं व्याप्तिरिति वाच्यम्। उत्कर्षापकर्षयोः समानव्यक्ति[२]वेद्यत्वादिति चेन्न।

न हि अपकर्षज्ञानमात्रं नमस्कारस्तथा सति 'राजा जयति' इति क्षत्रियादिस्तुतावपि नमस्कारानुमित्यापत्तेः। किं तु भक्तिश्रद्धापूर्वकम[३]पकर्षज्ञानम्। तच्च व्यञ्जनयैव स्यात्। अस्तु वात्रानुमितिसंभवः। तथापि तस्या व्याप्तिस्मर[४]णादिसापेक्षत्वेन विलम्[५]बात् व्यञ्जनाया एव झटिति प्रवृत्तेः। तथा भारतीकृतेर्ब्रह्मकृत्यपेक्षया भारत्याश्च ब्रह्मापेक्षया प्रतीयमानो व्यतिरेकः प्रतियोगिनोर्ब्रह्मकृतिब्रह्मणोरनुपादानाद् व्यङ्ग्य इत्यलंकारध्वनिः।

एवं च भारतीविषयकरतिभावस्य व्यञ्जनेनालक्ष्यक्रमव्ङ्ग्यस्य, वस्त्वलंकारयोः व्यञ्जनेन लक्ष्यक्रमव्यङ्ग्यस्य च प्राधान्येनात्र प्रबन्धेऽभिधेयत्वमिति ध्वनितम्। कविभारतीस्तुत्या च सामान्यतः काव्यमत्र प्रबन्धेऽभिधेयमिति ध्वनितमिति दिक्।

ननु एवमभिधेयप्रतिपादनेऽपि प्रयोजनाभावेन[६] प्रेक्षावतां न प्रवृत्तिरित्यतः प्रयोजनमभिधत्ते—

**काव्यं हि यशसेऽर्थाय शिवेतरनिवृत्तये ।**
**कान्तावदुपदेशाय परनिर्वृतये क्षणात् ॥३॥**

काव्यं हि[७] लोकोत्तरवर्णनानिपुणकविकर्म। यशसे अत्र सर्वत्र तादर्थ्ये चतुर्थी। हिः प्रसिद्धौ। ततश्च कालिदासादीनां प्राधान्येन यशसः, श्रीहर्षादिभ्यो धावकादीनामर्थस्य, मयूरादेरादित्यादिभ्यः कुष्ठाद्यनर्थनिवृत्तेश्च प्रसिद्धत्वान्नात्र कारणताग्राहकमानाभाव इति

---

१. M. om अत्र
२. Pr. वित्ति for व्यक्ति
३. M. कापकर्ष for कमपकर्ष
४. Pr. स्मृत्यादि for स्मरणादि
५. M. विलम्बेन for विलम्बात्
६. M. om. न
७. M. om. हि

भावः। एवं तथा[१] कान्ताकटाक्षभुजलता[२]विक्षेपादिरसाङ्गभूतव्यापारद्वारा सरसतापादनेन नायकमभिमुखीकृत्य हितमुपदिशति तथा काव्यमपि रसाङ्गभूतव्ञ्जनाख्यव्यापारद्वारा सरसतापादनेन सहृदय[३]हृदयमभिमुखीकृत्य रामादिवदिष्टसाधने प्र[४]वर्तितव्यं न रावणादिवदनिष्टसाधन इत्युपदिशति। एवं च[५] यथा प्रभुः[६] प्रयोजनशून्येऽपि भृत्यान् प्रवर्तयति तथा निष्फले नित्यकर्मादौ प्रवर्तकतया प्रभुसंमितात् वर्ण पदादिवैपरीत्ये[७] अनिष्टसाधनतया च शब्दप्रधानात् वेदात् वस्तुतः तद्व्याख्यानमात्र परतया सुहृत्संमितात् वाच्यार्थमात्रपरतया अर्थप्रधानाच्च पुराणादेश्च, रसप्रधानतया तदङ्गभूतशब्दार्थविशिष्टस्य काव्यस्यातिशयो दर्शित इति ध्येयम्। तथा निरुपाधिकेच्छाविषयतया सर्वप्रयोजनमौलिभूतं रसानुकूलविभावाद्यनुसंधानेनाभिव्यक्तं स्वयंप्रकाशानुभवात्मकं विषयान्तरसंस्पर्शरहितमानन्दं च श[८]ब्दश्रवणसम[९]नन्तरमेव आविर्भावयति। अत्र च कवेरिव सहृदयस्याप्यध्यापनेन यशोऽर्थश्च भवति। देवताविषयकाव्यपाठादनर्थनिवृत्तिश्च सहृदयस्यैव[१०]। कान्तावदुपदेशः सहृदयस्यैव। कवेरपि सहृदयतादशायामानन्दो भवतीति ध्येयम्। एवं राजादिविषयक[११]ौचितोपचारादिपरिज्ञानं च प्रयोजनमूह्यम्। एवं च काव्यस्य दृष्टादृनेकप्रयोजनवत्त्वात् तद्विचारात्मकेऽस्मिन् शास्त्रे प्रवृत्तिरुचितेति भावः।

एवं इष्टसाधनता[१२]ज्ञानेऽपि शक्योपायता[१३]ज्ञानाभावे चन्द्रमण्डलहरणादाविव न काव्ये प्रवृत्तिः स्यादिति शक्योपायतां तस्य दर्शयति—

**शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।**
**काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे ।।४।।**

अक्लिष्टपदपदार्थस्मरणहेतुः कवित्वबीजभूतो बुद्धिविशेषः शक्तिः। यदाहुः—

**मनसि सदा सु[१४]समाधिनि विस्फु[१५]रणमनेकधाभिधेयस्य ।**
**अक्लिष्टानि पदानि च विभान्ति यस्यामसौ शक्तिरिति ।।**

---

१. M. adds हि after यथा
२. Pr. om लता before विक्षेपादिं
३. *Pr. om.* सहृदय
४. P. om. प्र
५. P. om. च
६. M. प्रभुर्यथा for यथा प्रभुः
७. M. adds पुराणादेश्च before अनिष्टं
८. Pr. om. शब्द
९. Pr. मननन्तर for समनन्तर
१०. Pr. om. सहृदयस्यैव
११. M. विषयो for विषयको
१२. M. साधनत्व for साधनता
१३. M. पायत्व for पायता
१५. M. नु for सु
१६. Pr. विस्तरण for विस्फुरण

प्रतिभैव शक्तिरित्यपरे। यदाहुः—

**स्मृतिर्व्यतीतविषया मतिरागामिगोचरा ।**
**बुद्धिस्तात्कालिकी प्रोक्ता प्रज्ञा त्रैकालिकी मता ।।**
**'प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः' ।**
**द्वे वर्त्मनी गिरां देव्याः शास्त्रं च कविकर्म च ।**
**प्रज्ञोपज्ञं तयोराद्यं प्रतिभोद्भवमन्तिमम् । इति।**

न चास्याः[१] कवित्वहेतुत्वे किं मानमिति वाच्यम्। तदभावे रचनाया एवानुदयात्। कथञ्चिदुदिताया अपि अपहास्यता दर्शनात्। तस्याः कविताहेतुत्वं निश्चीयते। न च तां विनापि रचनोदये व्यभिचारान्न तस्याः हेतुत्वमिति वाच्यम्। न हि रचनामात्रं कवित्वम्। किंतु रसोपस्थित्यनुकूला रचना। सा च तां विना नोदेत्येवेति न व्यभिचारः। न च तादृश, शक्तेरदृष्टैकसाध्यतया कथं काव्यस्य शक्योपायतेति वाच्यम्। देवताराधनादिद्वारा तादृशादृष्टसंपादनसंभवादिति ध्येयम्। लोकपदं लोकवृत्तान्तपरम्। तज्ज्ञानस्यैव रचनाहेतुत्वात्। उक्तात्युक्तादिछन्दोभेदज्ञानोपयोगिनां, छन्दोविचित्यादिच्छन्दः शास्त्राणां सुशब्दापशब्दज्ञानोपयोगिपाणिनीयादिव्याकरणशास्त्राणां पर्यायानेकपदलिङ्गभेदादिज्ञानोपयोगिनाममरसिंहादिकृताभिधानकोशानां नृत्तगीतादिकलाप्रतिपादकभरतादिकृतशास्त्राणां धर्मार्थकामकोक्षरूपचतुर्वर्गप्रतिपादकमन्वादिस्मृतिनीतिशास्त्रवात्स्यायनशास्त्रवेदान्तशास्त्राणां शालिहोत्रादिकृतगजतुरगखड्गादिलक्षणग्रन्थानां इतिहासपुराणानां च शास्त्रपदं वाचकम्। काव्यपदं महाकविप्रणीतकुमारसंभवादि परम्। तेन स्वकाव्यस्यापि काव्यपदेनोपादानादन्योन्याश्रय इत्यपास्तम्। आदिपदात् तत्तन्नृत्तोचिताभिनयवेषालंकरणादिकं गृह्यते। ततश्च लोकवृत्तान्तादीनामालोचनात् उपार्जितो व्युत्पत्तिपदाभिधेयः तत्तदवधारणजनितदृढतरसंस्कारविशेषो निपुणता। लोकवृत्तादीनां च काव्याङ्गत्वमुक्तं साहित्यमीमांसायाम्—

**न स शब्दो न तद्वाच्यं न सा विद्या न सा कला ।**
**जायते यन्न काव्याङ्गमहो भारो गुरुः कवेरिति ।।**

काव्यं कर्तुं[२] विचारयितुं ये जानन्ति तदुपदेशेन अभ्यासः। करणे विचारणे च पुनः पुनः प्रवृत्तिः अभ्यासः[३] ।

ननु अभ्यासस्य हेतुत्वेऽन्योन्याश्रयः, करणे सत्यभ्यासः अभ्यासे सति करणमिति चेन्न।

पूर्वपूर्वजन्माभ्यासस्योत्तरोत्तरजन्मकार्यहेतुत्वमित्येके। अत्र च केवलं[४]

---

१. M. om. कवित्वहेतुत्वे to तस्याःo
२. Pr. वक्तुं for कर्तुं
३. Pr. om. अभ्यासः
४. M. om. अत्र च केवलं

काव्यार्थोन्नयनाभ्यासोऽभ्यासत्वेनाभिमतः। तस्य च[१] काव्यहेतुत्वमेव इत्यपरे। रचनामात्रे पुनः पुनः प्रवृत्तिरभ्यासः। स च रसानुगुणरचनायां हेतुरित्येके। अत्र च केवलं कर्तुरुपदेशादभ्यासकर्तैव भवति, न तु सहृदयः। सहृदयत्वाभावे च रचनायां रसानुगुणत्वाननुगुणत्वनिर्णयाशक्ततया रसाननुगुणतयापि[२] कदाचित् रचयेत्। तथा केवलं विचारयितुरुपदेशादभ्यासे न कर्ता भवेत्। अतः कर्तुर्विचारयितुरुपदेशादेवाभ्यासः काव्याङ्गमिति ध्येयम्। एवं च शक्तिर्निपुणताभ्यास इत्येते त्रयः समुदिताः काव्यस्य निर्माणे तस्य रसादिव्यञ्जकतया चमत्कारे च सामग्री। न परं स्वरूपयोग्याः। व्यस्तास्तु न सामग्री। किं तु स्वरूपयोग्या इत्यर्थः। केचित्तु अदुष्टसगुणसालंकार[३]शब्दार्थयुगलं काव्यमिति वक्ष्यते। तथा च अनेकविशेषणविशिष्टस्य तस्य नीलघटवदेकसामग्रीप्रयोज्यत्वासंभवान्न काव्यत्वं कार्यता[४]वच्छेदकम्। अत एव न शक्तित्वादिकमपि काव्यत्वावच्छिन्नं प्रति कारणतावच्छेदकम्। किं तु शक्तिर्दोषतिरस्कारेणोद्भवे हेतुः। अभ्यासो गुणालंकारस्वीकारे, व्युत्पत्तिस्तु रसाभिव्यञ्जने हेतुः। त्रयाणामार्थसमाजे सति तद्विशेषणोपेतं[५] काव्यमपि नीलघटवत् संपद्यते। तदुक्तम्—

**कवित्वं जायते शक्त्या वर्धतेऽभ्यासयोगतः ।**
**अस्य चारुत्वनिष्पत्तौ व्युत्पत्तिस्तु गरीयसी ।।**

इत्याहुः

स्वावच्छिन्नकार्यताप्रतियोगिकैककारणासंभवरूपबाधकेन नीलघटत्वस्य कार्यतानवच्छेदकत्वेऽपि काव्यत्वस्य तादृशबाधकाभावेन कार्यतावच्छेदकत्वमविरुद्धम्। अत एव अनित्यप्रमात्वं कार्यतावच्छेदकमिति तार्किका इत्यप्यन्ये।

एवं काव्यस्य शक्योपायत्वेऽपि तत्स्वरूपापरिज्ञाने तत्र न प्रवृत्तिसंभवः इति तल्लक्षणमाह—

**काव्यं ह्यदुष्टौ सगुणौ शब्दार्थौ सदलंकृती ।।५।।**

दोषवर्जितौ सगुणौ सती अलंकृतिर्ययोस्तौ सदलंकृती तादृशौ शब्दार्थौकाव्यम्।

ननु 'कवेः कर्म काव्यमिति' योगात् शब्दार्थविषयक-कविव्यापार एव काव्यत्वे वक्तुमुचितः, न तु शब्दार्थावेव। अन्यथा शब्दार्थयोः साधारण्येन रघुवंशादि कालिदासकृत[६]मित्यादि[७] व्यवहारायोगः एवं च सूत्रपुष्पयोः साधारण्येऽपि यथा ग्रथनमेव

---

१. M. om. च
२. Pr. om. 'त'
३. M. गुणांकार for गुणसालंकार
४. M. काव्यतां for कार्यतां
५. M. तत्तद्विशेषणोपहितं for तद्विशेषणोपेतं
६. M. कालिदासादिकृं
७. M. om. आदि

मालाकारव्यापारः तथात्रापि शब्दार्थयोः साधारण्येऽपि योजनमेव [१]कविव्यापार इति तदेव [२]काव्यतया वक्तुमुचितम् इति चेत् सत्यम्। तथापि कविकर्मविषयभूतयोः शब्दार्थयोरेव लोके काव्यपदप्रयोगात् शब्दार्थौ काव्यमित्युक्तम्। न चैवं लोकव्यवहारानुरोधे तादृशशब्द एव लोके काव्यव्यवहारात् तन्मात्रमेवोपादेयमिति वाच्यम्। सत्यम्। तथापि व्यञ्जकत्वाविशेषादर्थस्यापि ग्रहणम्। काव्यव्यवहारेऽ[३]भ्यर्हितत्वं तु शब्दस्यैवेति द्योतनायैव शब्दस्य पूर्वनिपातः कृत इति ध्येयम्। अत्र सदोषनिर्गुणनिरलंकारेष्वतिव्याप्तिवारणाय विशेषणत्रयम्।

ननु न दोषाभावस्य लक्षणान्तर्गतियुक्ता। तथा सति 'निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोधर' इत्यस्यापि काव्यत्वं न स्यात्। [४]तत्रापि—'अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्' इत्युक्तया स्तनतटमित्यस्यैव प्रथमं निर्देष्टुमुचितत्वात्। तथा निर्देशाभावेन अविमृष्ट-विधेयांशस्य जागरूकत्वात्। न चेष्टापत्तिः। तस्योत्तमकाव्यत्वेन सर्वैरुदाहरणात्। किं च एवं काव्यव्यवहारः प्रविरलविषयः स्यात्।

तथा गुणवत्त्वविशेषणमप्ययुक्तम्। गुणस्य [५]रसधर्मत्वेन वक्ष्यमाणतया शब्दार्थधर्मत्वासिद्धेः। न च रसवत्त्व[६]ख्यापनार्थमेव उपचारात् तथोक्तमिति वाच्यम्। तथा सति रसवन्तावित्येव वक्तुमुचितम्। न हि 'शूरवन्तो देशा' इति वाच्ये 'शौर्यवन्तो देशा' इति वक्तारो भवन्तीति चेन्न।

'नीरसो हि निबन्धो यः सोऽपशब्दो महान्कवेः' इति ध्वनिकृदुक्त्या रसाभिव्यञ्जकमेव काव्यमिह लक्ष्यम्। न च [७]दोषसत्त्वे रसाभिव्यक्तिः संभवति। रसाभिव्यक्तिप्रतिबन्धकस्यैव दोषत्वात्। अन्यथा तस्य हेयतैव न स्यात्। 'निःशेषच्युतचन्दनम्' इत्यादिकं दुष्टमेव। सदोषादपि तस्मात्दोषाज्ञाने रसाभिव्यक्तेः उत्त्मकाव्यत्वव्यहारः। वस्तुतस्तु अदुष्टमेवोत्तमकाव्यम्। अन्यथा काव्यतदाभासविवेको न स्यात्। प्रविरलविषयता च काव्यव्यवहारस्येष्टैव। यथाहुः ध्वनिकृतः— 'अतएव द्वित्रा एव कवयो, द्वित्राण्येव काव्यानी'ति।

ननु एवमपि दोषाणामनुगमात्तदभावघटितलक्षणस्याप्यननुगम एव। न च रसाभिव्यक्तिप्रतिबन्धकत्वेन दोषाणा मननुगम इति वाच्यम्। [८]तथापि [९]रौद्ररसाभिव्यञ्जक-श्रुतिकटुवर्णयुक्तश्लोकाव्याप्तेः। श्रुतिकटुत्वस्य शृंङ्गाररसाद्यभिव्यक्तिप्रतिबन्धकत्वेन

---

१. Pr. om. कवि°

२. Pr. om. काव्य°

३. M. अव्यवहितत्वं तु for अभ्यर्हितत्व°

४. M. अत्रापि for तत्रापि

५. M. रसाधर्मत्वेन for रसधर्मत्वेन

६. Pr. °ज्ञापनार्थमेव for °ख्यापनार्थमेव

७. M. दोषवत्त्वे for दोषसत्त्वे

८. M. तथा सति for तथापि

क्वचिद्दोषत्वात्। तत्तत्पद्याभिव्यङ्ग्यरसप्रतिबन्धकदोषाभावविवक्षायाम[1]ननुगमतादवस्थ्यमिति चेन्न। अतीतानागतवर्तमानतत्तत्काव्याभासव्यक्तिवृत्तितत्तद्दोषव्यक्तिविषयकसमूहालम्बनात्मकयोगिज्ञानविषयत्वेनानुगमे तत्[2] तदभावघटितलक्षणस्याप्यनुगमादित्येके। लक्ष्यस्याप्यन[3]नुगतत्वाल्लक्षणाननुगमो न दोषायेत्यन्ये। यदपि गुणवत्त्वमसिद्धमित्युक्तं, तदपि न। गुणस्य रसधर्मत्वे अपि गुणवृत्त्या शब्दार्थयोरपि वृत्तेः। तदप्यु[4]क्तम्—'गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता' इति। यद्वा शरीरावच्छिन्नात्मनिष्ठस्यापि सुखस्य शरीरे सुखमिति प्रतीतेः परंपरासंबन्धेन यथा शरीरवृत्तित्वमङ्गीक्रियते तथा शब्दार्थाभिव्यङ्ग्यरसनिष्ठस्यापि गुणस्य 'शब्दार्थाविमौ मधुरा'वित्यादि प्रतीतेः परंपरया [5]शब्दार्थनिष्ठत्वाङ्गीकाराविरोधात्।

ननु प्रतिबन्धकदोषाभावे अभिव्यञ्जकगुणसत्त्वे च रसाभिव्यक्तेः पुष्कलत्वात् सालंकारत्व[6]विशेषणं व्यर्थम्। तदुक्तं गोपालस्वामिना—

**दोषहानं गुणादानं कर्तव्यं नियमात्कृतौ ।**
**कामचारः पुनः प्रोक्तौऽलंकारेषु मनीषिभिः ॥**

इति। तथा

**"मुख्या महाकविगिरामलंकृतिभृतामपि ।**
**प्रतीयमानच्छायैषा भूषा लज्जेव योषिताम् ॥"**

इति ध्वनिकारिकायाम[7]पिशब्देनालंकाराणामनास्था व्यज्यते। तस्मात् सालंकारत्वविशेषणमयुक्तमिति चेन्न। शब्दालंकाराणां अर्थालंकाराणां च यथायथं रसाभिव्यञ्जकशब्दार्थोपस्कारकत्वेन अलंकारत्वादुपस्कारकाभावे च न रसाभिव्यक्तिपौष्कल्यमिति सालंकारत्वविशेषणम[8]प्यावश्यकम्। उक्तवचनद्वयं च स्फुटतरालंकारानास्थापरम्। नन्वेवमपि—

**यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपाः**
**ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।**
**सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ**
**रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥**

---

१. M. °यां याननु° for °याममनु°

२. Pr. om. तत्°

३. M. om. °न°

४. Pr. तदिदमुक्तम् for तदप्युक्तम्

५. M. adds संबन्धेन before शब्दार्थ°

६. Pr. सालंकारविशेषणं for सालंकारत्ववि°

७. Pr. om. °अपि°

८. Pr. om. °विशेषणमपि°

इत्यत्र निरलंकारे सालंकारत्वघटितं[१] लक्षणमव्याप्तम्। इदं हि उम्बकेन कन्यकावस्थायां[२] चौर्येणानुभूतायाः पुनस्तेनैव पाणौ गृहीतायाः कुटुम्बिनीपदमधिरूढाया[३] उम्बायाः सखीं प्रति वाक्यमित्यैतिह्यम्। यः कौमारहरः कुमारीभावं हृतवान् मुग्धतया लज्जाकुलामपि मां संभोगेच्छामुत्पाद्योपभुक्तवानिति यावत्। तेन वरस्य निरतिशयसौन्दर्यवत्त्वं व्यज्यते। स एव वरः। ता एव याश्चन्द्रातपार्थकतयोद्दीपिकाः[४][५] ता एव वासन्तिकरजन्यः। ते च, चकार एवकारार्थः। ये प्रागुद्दीपिकास्त एव। उन्मीलितेति। यद्यपि मालतीकदम्बयोः वार्षिकतया न वासन्तिकत्वं, तथापि उन्मीलितमालतीव सुरभय इत्यर्थः। कदम्बपदेनापि वासन्तिको धूलि कदम्ब एव विवक्षित इत्यविरोधः। प्रौढ़पदेन च उद्दीपने अन्यनिरपेक्षत्वमुच्यते। न तु झञ्झारूपत्वमुद्दीपकत्वविरोधात्। अस्मीत्यहमर्थकमव्ययम्। अन्यथा सा चेति तत्त्वविरोधा-[६] दुद्देश्यालाभात्। चकारो भिन्नक्रमः। तथा च अहं च सैव या कौमार एव तस्मिन् तथानुरक्ता। अत्र 'यद्यपि' इत्यध्याहार्यम्। स एव हि इति हिशब्द एव [७]यद्यप्यर्थक इत्यन्ये।[८]

तथापि तत्रात्यन्तोद्दीपके रेवानदीतीरे[९] तत्रापि विविक्ततया स्वच्छन्दोपभोगयोग्ये वानीरतरुतले तत्र चौर्यकृते सुरतव्यापारलीलाविधौ चेतःसमुत्कण्ठते इत्यत्र न कश्चिदप्यलंकारः प्रतीयते। न चात्र रसवदलंकारः शङ्कनीयः। यत्र हि रसस्य गुणीभावः तत्रैव रसवदलंकारस्य[१०] वक्ष्यमाणत्वात्। प्रकृते चोत्कण्ठा व्यङ्ग्यो विप्रलम्भशृङ्गाररसः प्रधानभूत एवेति न रसवदलंकारः। तस्मान्निरलंकारेऽस्मिन्नाव्याप्तिः। न चेदमलक्ष्यमेवेति वाच्यम्। रसाभिव्यञ्जकवाक्यत्वेनास्यापि लक्ष्यत्वावश्यंभावादिति चेन्न।

यद्यप्यत्र न स्फुटोऽलंकारः तथापि अस्फुटोऽस्त्येव। तथा हि अत्र ह्यतिसुन्दरवरादि-प्रदर्शनेन उत्कण्ठाकारणप्रतिषेधो[११] गम्यते। तथापि उत्कण्ठाप्रतिपादनेन कारणं विना कार्योत्पत्तिरूपो विभावनालंकारोऽस्त्येव। अयं च न स्फुटः। यतोऽत्रोत्कण्ठाकारणस्य अतिसुन्दरवराद्यभावस्याभावोऽतिसुन्दरवराद्यभःवाभावत्वेन न प्रतिपाद्यते।

ननु एवकारस्यायोगव्यवच्छेदकस्य तदभावाभावशक्ततया स एवेत्येवकारेणायोग-व्यवच्छेदकेन[१२] सुन्दरवराभावाभावत्वेनैव प्रतीतेः न विभावनाया अस्फुटत्वमिति चेन्न।

---

१. M. adds °विशेषण° before °घटितं
२. M. कन्यावस्थायां for कन्यकावस्थायां
३. M. कुडुम्बिनीं for कुटुम्बिनीं
४. "om. याः
५. " °तपर्चिततयां for °तपार्थकतया°
६. " तत्त्वविधा उद्दें for तत्त्वविरोधादुं
७. Pr. adds वा before यद्यप्यर्थक
८. M. इत्यप्यन्ये for इत्यन्ये
९. M. om. °नदी°
१०. "om. स्य adds इति
११. M. °करण° for °कारण°
१२. M. om. आयोगव्यवच्छेदकेन after एवेत्येवकारेण

अभेद एवात्र एवकारार्थोऽभेदश्च भावरूपोऽन्य एवेति न विभावनायाः स्फुटत्वमित्येके। एव[१] इत्येवकारेणायोगव्यवच्छेदकेन सुन्दरत्वाभावाभाव एव प्रतीयते, न तु उत्कण्ठाकारणस्य सुन्दरत्वविशिष्टवराभावस्याभावः, सत्वर्थादेव प्रतीयत इति विभावनाया अस्फुटत्वमित्यपरे।

रसानुपकारकत्वमलंकाराणामस्फुटत्वम्। न च रसानुपकारकत्वे अलंकारतैव न स्यात्। रसाभिव्यञ्जकशब्दार्थान्यतरोपस्कारकस्यैवालंकारत्वादिति। वाच्यम्। रसाभिव्यक्त्यविरोधितया अलंकारत्वोपपत्तेरित्यन्ये।

केचित्तु व्यङ्ग्यापेक्षया चमत्काराजनकत्वमस्फुटत्वमलंकाराणां[२]मतएव उत्तमकाव्यस्य व्यङ्ग्यप्रधानत्वादस्फुटालंकारत्वम्, अधमकाव्यस्य तु वाच्यप्राधान्येन स्फुटालंकारत्वमित्याहुः।

एवमनुत्कण्ठाकारणे अनुरक्तवरादिरूपे कण्ठत एव प्रदर्शितेऽपि उत्कण्ठाविधिनानुत्कण्ठाविरहो गम्यत इत्यनुत्कण्ठाकारणे सत्यपि अनुत्कण्ठारूपकार्यानुत्पादरूपविशेषोक्तिः। इयमप्यस्फुटा। अनुत्कण्ठारूपकार्योत्पा[३]दस्य तत्त्वेनाप्रतिपादनात्। एवं विभावनाविशेषोक्त्योरेकवाक्यप्रवेशात्सङ्करः। ततश्च-अस्फुटालंकारद्व[४]यसंकररूपत्वात् सोऽप्यस्फुट एव, ततश्च स्फुटालंकाराभावेऽपि अलंकारवत्त्वमत्राप्यस्तीति नाव्याप्तिः। अन्ये तु अदुष्टत्वे सति गुणालंकारान्यतरवत्वमेव लक्षणम्। न तु विशिष्टमेकं लक्षणम् तथा हि[५]—

**मुनिर्जयति योगीन्द्रो महात्मा कुम्भसंभवः ।**
**येनैकचुलुके दृष्टौ तौ दिव्यौ मत्स्यकच्छपौ[६] ॥**

अत्र निरलंकारे अव्याप्तिप्रसङ्गात्। न च तदलक्ष्यमेवेति वाच्यम्। तत्राप्यद्भुतरसाभिव्यक्तेः काव्यत्वावश्यंभावात्। न चात्रापि[७] माहात्म्यं जयं च प्रति, हेतुत्वमेकचुलुके[८] मत्स्यकच्छपदर्शनस्य हेतुत्वप्रतिपादकविभक्त्यभावेऽपि प्रतीयत इति वाक्यार्थहेतुकं काव्यलिङ्गं, कुम्भसंभव इत्यत्रानुप्रासश्च स्फुट इति वाच्यम्—

**सप्तापि वारिनिधयो येनाशु चुलुकीकृताः ।**
**लोपामुद्रासहचरः सोऽयमास्ते पुरो मम ॥**

इत्यत्र तथाप्यव्याप्तेरित्याहुः। अपरे तु रसाभिव्यञ्जकशब्दार्थयुगलत्वमेव लक्षणम्। न च

---

१. Pr. adds स before एव
२. M. adds °अस्फुटत्वं° before °अत एव°
३. M. °कार्यानुत्पा° for °कार्योत्पाद्य°
४. Pr. om. °द्वयसंकररूपत्वात् to °अलंकार°
५. M. सति for हि
६. M. adds इति after मत्स्यकच्छपौ
७. Pr. om अपि
८. Pr. °चुलुकमत्स्यकच्छप for °चुलके मत्स्यक°

वस्त्वलंकारव्यञ्जकाव्याप्तिरिति वाच्यम्। व्यङ्ग्यवच्छब्दार्थयुगलत्वमेव तथापि लक्षणमास्तामित्याहुः। व्यङ्ग्यवच्छब्दार्थयुगलत्वस्य लक्ष्यतावच्छेदकत्वात् न लक्षणत्वमित्यप्याहुः। एवं सामान्यलक्षणमभिधाय[१] विशेषलक्षणं वक्तुं विभजते—

**उत्तमं मध्यमं तद्वदधमं चेति तत्त्रिधा ॥५॥**

तत्काव्यम् उत्तमं मध्यमं, अधमं चेति त्रिविधमित्यर्थः। तत्रोत्तमं लक्षयति—

**वाच्यातिशायि व्यङ्ग्यं यदुत्तमं तद्ध्वनिश्च सः[२] ।**
**वीक्ष्य रामं घनश्यामं सीता जाता नमन्मुखी ॥६॥**

यत्र काव्ये व्यङ्ग्यं वाच्यात् आलंकारिकमते पदार्थवद्वाक्यार्थस्यापि वाच्यतया पदार्थात् वाक्यार्थात् वा अतिशायि प्रकृष्टं तदुत्तमं काव्यम्। तच्च ध्वन्यतेऽनेनेति व्युत्पत्त्या ध्वनिरित्यप्युच्यते। न केवलमालंकारिका एव व्यञ्जके ध्वनिपदं प्रयुञ्जते। किं तु वैयाकरणा अपि। तथा हि—'गामानय दण्डेन' इत्यादौ गोकर्मक-दण्डकरणक-आनयनक्रियाकवाक्यार्थ-प्रतीतिरुत्पद्यते। तत्र पदज्ञानं पदार्थस्मृतिर्वाक्यार्थज्ञानमिति क्रमः। इदं चानुपपन्नम्। एकैकवर्णज्ञानस्य पदार्थस्मृत्यजनकत्वात् वर्णान्तरोच्चारणवैयर्थ्यापातात्। तावद्वर्णानामाशु-विनाशिनां मेलना[३]भावेन तावद्वर्णघटितपदज्ञानासंभवात्। प्रत्येकवर्णानुभवजनितसंस्कारैः पदगोचरस्मृतावानुपूर्वी भेदेऽपि अर्थस्मृतिप्रसङ्गादिति अर्थस्मृत्यनुकूले पदे वाक्यार्थानुभवानुकूले वाक्ये च स्फोटा[४]ख्यः कश्चिदभ्युपेयः[५]। तं च शब्दो व्यञ्जनयैव प्रतिपादयति- न शक्त्या न वा लक्षणया सङ्केताद्यभावात्। तद्व्यञ्जकशब्दो ध्वनिरिति वैयाकरणा व्यवहरन्ति। ततश्च व्यञ्जकशब्दो व्यञ्जकत्वसामान्यादालंकारिकैरपि ध्वनिरिति व्यपदिश्यत इति नायं व्यवहारः स्वकपोलकल्पितः। एवं च पर्याय[६]त्वकथनेनैव न तत्रातिव्याप्तिः न वा तस्यालक्षितत्वेन न्यूनतेति ध्येयम्। अत्र व्यङ्ग्यस्य वाच्यादतिशायित्वं चमत्कारत्वेन तज्जनकत्वेन वा बोध्यम्। एतेन वाच्यातिशायिव्यङ्ग्यकत्वं नाम न तावद्वाच्यजन्यचमत्कारनिरूपितप्रकर्षाश्रयचमत्कारजनकव्यङ्ग्यकत्वं; वाच्यस्याचमत्कारकत्वस्थले वाच्यजन्यचमत्कारासि[७]द्धेरयाप्तेः नापि व्यङ्ग्यजन्यचमत्कारनिरूपितप्रकर्षाश्रयचमत्कारा-जनकवाच्यकत्वं; तुल्यप्रधानात्मके मध्यमे काव्येऽतिव्याप्तेः। नापि व्यङ्ग्यजन्य चमत्कारान्यूनचमत्काराजनकवाच्यकत्वं रसव्यङ्ग्यत्वे तस्यैव चमत्काररूपत्वेन

---

१. M. °अभिहिते for °अभिधाय
२. Pr. नः for सः
३. Pr. मेलका° for मेलना°
४. Pr. स्फुटन्त्यनेनेति स्फोटः for स्फोटाख्यः
५. "कश्चिदङ्गीकार्यः for कश्चिदभ्युपेयः
६. Pr. पर्यायत्वकथनेन तत्र अव्याप्तिः
७. M. चमत्काराप्रसिद्धेः for चमत्कारासिद्धेः

तज्जन्यचमत्काराप्रसिद्धेख्यातेरिति अपास्तम्[१]। वाच्यापेक्षया चमत्कारत्वेन तज्जनकत्वेन वा वाच्यातिशायित्वस्य विवक्षितत्वादित्याहुः—यथा 'वीक्ष्य रामम्' इत्युत्तरार्धे नमन्मुखीति वाच्यापेक्षया व्यङ्ग्यस्य शृङ्गाररसस्यातिशायित्वादुत्तमत्वम्।'घनश्यामम्' इत्युपमालंकारस्य अनुप्रासस्य माधुर्यादिगुणस्य दोषाभावस्य चात्र पुष्कलत्वात् काव्यसामान्यलक्षणमप्यना-कुलमिति ध्येयम्। यथा वा—

**निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो**
**नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।**
**मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे**
**वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ।।**

अत्र वापीं स्नातुं गतासि[२], न तु तत्सकाशमिति वाक्यार्थे स्थिते तत्सकाशमेव रन्तुं गतासीत्यधमपदेन प्राधान्येन व्यज्यते[३]। तथा हि-अधमत्वं जात्या कर्मणा वा भवति। तत्र उत्तमनायिका नायकस्य जात्याधमत्वं न वदतीति कर्मणैवात्र अधमत्वं वाच्यम्। तच्च कर्म न पूर्वकृतापराधरूपम्। तत् सोढ्वैव दूतीप्रेषणेन तस्येदानीमुद्घाटनानर्हत्वात्। किं तु दूतीप्रेषणानन्तरं, कृतदूतीसंभोगरूपम्। तच्च संभोगचिह्नैः ज्ञातुमुद्घाटयितुं च योग्यमिति तत्पर्यवसायिनाधमपदेन तत्सकाशमेव रन्तुं गतासीति व्यज्यते।

निःशेषेत्यादिवाक्यानि तु संभोगचिह्नोद्घाटनेन तत्र साहायकमाचरन्ति। तत्र उत्तरीयाकर्षणेन चन्दनच्युतेरन्यथासिद्धिपरिहाराय निःशेषेति। स्नानसाधारण्यव्यावर्तनाय च्युतपदं तटपदं च। स्नाने हि चन्दनस्य सर्वत्र क्षालनमेव स्यात्। न तु स्तनयोः तटे उपरिभाग एव च्युतिः। अतः इयमाश्लेषकृतैवेति। तथा ताम्बूल[४]चर्वणविलम्बात् प्राचीनरागस्य मृषृता इत्यन्यथासिद्धिपरिहाराय निर्मृष्टेति। पुनः स्नानव्यावर्तनायाधरग्रहणम्। स्नाने हि उत्तरोष्ठस्यापि निर्मृष्टरागता स्यादत इयं चुंबनकृतैवेति। तथा प्रातर्दत्तमञ्जनं कालेन किंचित् लुप्तमित्यन्यथासिद्धिपरिहाराय[५] दूरमिति। दूरमप्यर्थमित्यापाततोऽर्थः। तेन कालान्यथासिद्धिनिरासः।पुनः स्नानसाधारण्यनिवर्तनाय[६] दूरे प्रान्तभाग इति हृदयस्थितोऽर्थः। कालतः स्नानतो वा सर्वत्र निरञ्जनता स्यात्।'तवतु नेत्रयोः प्रान्त' इति चुम्बनकृतैवेयमिति।

तथा तन्वीति सहजतानवोत्कीर्तनमापततः पुलकितापि तन्वीति हृदिस्थितोऽर्थः। तेन स्नानेन पुलकिता तनुः किंचिदुच्छ्वसिता भवति इयं तु न तथेति संभोगकृतावेव तानवपुलकाविति गम्यते। एवमेभिः वाक्यैरुपस्कृतेनाधमपदेन प्राधान्येन तस्यान्तिकमेव

---

१. Pr. परास्तम् for अपास्तम्
२. Pr. om. °सि°
३. M. ध्वन्यते for व्यज्यते
४. Pr. तामालंब° for ताम्बूल°
५. M. °वारणाय for °परिहाराय
६. M. °व्यावर्तनाय° for °निवर्तनाय

रन्तुं गतासीति व्यज्यत इति न्यग्भावितवाच्यतयात्र व्यङ्ग्यं वाच्यातिशायि।अत्राधमपदं[१] विना उक्तविशेषणमात्राद्रन्तुं गतासीत्यर्थस्याप्रतीतेः अधमपदस्यैव व्यञ्जकत्वे प्राधान्यम्। केचित्तु—

**उपकृतं बहु नाम किमुच्यते सुजनता प्रथिता भवता परम् ।**
**विदधदीदृशमेव सदा सखे सुखितमास्स्व ततः शरदां शतम् ।।**

इत्यादौ उपकृतादिशब्दैः विपरीतलक्षणया अनुपकृतत्वादिकं तथा गम्यते तथा न पुनः तस्याधमस्यान्तिकमित्यत्रापि 'नञ्' पदे विपरीतलक्षणया तदन्तिकं गतासीत्ययमंशो लभ्यते। 'रन्तुम्' इत्यंश एव व्यञ्जनाविषय इत्याहुः। तदयुक्तम्। 'तदन्तिकम्[२] न गतासि' इत्यत्र विपरीतलक्षणायां स्नातुमितो गतासीत्यस्यानन्वयापत्तेः। न च तत्रापि गमनाभावो लक्ष्यत इति वाच्यम्, अप्रसक्तप्रतिषेधापत्तेः इत्याहुः।

ननु पदस्य व्यञ्जकत्वमभिधामूलं लक्षणामूलं वा? तत्र अभिधामूलं नानार्थस्थले, लक्षणामूलं तु लाक्षणिकस्थले। न च अत्र अधमपदं नानर्थं[३] कथं तस्य व्यञ्जकत्वमिति चेत्? अधमपदप्रतिपाद्यस्यार्थस्यैव च्युतादिपदतात्पर्यविषयीभूतार्थसाहचर्याद्व्यञ्जकत्वम्।अधमपद-व्यञ्जकत्वव्यवहारस्तु प्रयोजकत्वमात्रेणेत्येके।'अस्तंगतः सविता' इत्यत्रैव नानार्थत्वाभावेऽपि अभिधामूलव्यञ्जनास्वीकारे न विरोध इत्यन्ये।

अधमपदमपकृष्टधर्मत्वलक्षकम्। न चान्वयानुपपत्त्यभावात् न तत्र[४] लक्षणेति वाच्यम् तात्पर्यानुपपत्त्यापि तत्संभवात्। अतो लाक्षणिकत्वात् न तस्य व्यञ्जकत्वानुप-पत्तिरित्यन्ये। अथ मध्यमं काव्यं लक्षयति—

**काव्यं तु मध्यमं व्यङ्ग्ये वाच्यादनतिशायिनि ।**
**तदेव च गुणीभूतव्यङ्ग्यमित्युच्यते बुधैः ।।७।।**
**क्षणादथ मुहूर्ताद्वा यामाद्वा त्वमिहैष्यसि ।**
**इत्युक्त्वा हरते यात्रां पत्युर्दूरं यियासतः ।।८।।**

यत्र वाच्यानतिशायि व्यङ्ग्यं तन्मध्यमं काव्यम्। तदेव गुणीभूतव्यङ्ग्यमिति च कथ्यते। ननु अधमकाव्ये अतिव्याप्तिः। न च तत्र व्यङ्ग्यमेव नेति वाच्यम्। अव्यङ्ग्यस्य काव्यत्वासंभवेन तत्रापि अस्फुटस्य व्यङ्ग्यस्य अभ्युपगन्तव्यत्वात्।न च तर्हि वाच्यानतिशायि स्फुट व्यङ्ग्यवत्त्वं लक्षणमस्त्विति वाच्यम्।'अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम्' इति वक्ष्यमाणास्फुटव्यङ्ग्याख्यमध्यमकाव्ये अव्याप्तेरिति चेन्न उपधेयशंकरेऽपि उपाधेरशंका-दित्येके वाच्यादनतिशायित्वं वक्ष्यमाणागूढत्वाद्यन्यतमत्वमेव विवक्षितमित्यप्यन्ये। यथा

---

१. Pr. तत्राधम° for अत्राधम°

२. "om. तदन्तिकम्

३. Pr. adds न वा लाक्षाणिकमतः before कथं°

४. M. om. तत्र

'क्षणादथे'त्यत्र 'यामः परमावधिः ततः परं प्राणान् धारयितुं न शक्नोमी'ति व्यङ्ग्यम्, प्रिययात्रानिवारणरूपवाच्यसिद्धिं[१] करोतीति वाच्याङ्गत्वात् वाच्यानतिशायि। यथा वा–

**ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम् ।**
**पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ।।**

ग्रामस्य तरुणमित्यनेन ग्रामे अयमेक एव तरुणः ततश्च बहुवल्लभत्वेन दुर्लभत्वं व्यज्यते। तरुणमिति[२] कामकलाकौशलम्। तरुण्या इति रतावुत्कण्ठा। 'नववञ्जुल' इत्यादिना उद्दीपनविभावः। मञ्जर्याः करग्रहणयोग्यताप्रदर्शनेन वञ्जुललताया भूतलस्पर्शितया वञ्जुललतामूलस्य स्वैरोपभोगयोग्यता। 'पश्यन्त्या' इति वर्तमानकृदुपदेशाद्[३]दर्शनसमसमयमेव मुखमालिन्यप्रतीतेः अतिशयोक्तिः। 'मुहुः' इति औत्सुक्यम्। जनताभयेन दर्शनस्य विच्छिद्यविच्छिद्य करणं च, नितरामिति स्वापराधप्रकर्षो मलिनेत्यनुभावश्च व्यज्यते। अत्र वञ्जुललतागृहे दत्तसङ्केतया मया न गतम्। अनेन तु तत्र गत्वा स्वगमनसूचनाय वञ्जुलमञ्जरीमादाय मधुपालम्भाय पुनरागतमहो ममानौचित्यमिति नायिकानौचित्यं व्यङ्ग्यम्। तच्च रसभङ्गहेतुत्वात् न चमत्कारकारि। वाच्यं तु मुखच्छाया मालिन्यं[४] विप्रलम्भव्यञ्जकत्वाच्चमत्कारकारि। यद्यपि व्यङ्ग्यमप्यनौचित्यमनुरणनन्यायेन परंपरया विप्रलम्भव्यञ्जकम्, तथापि तस्यानुभावरूपवाच्यमुखप्रेक्षितया व्यञ्जकत्वम्। वाच्यं तु अनुभावरूपतया साक्षादेव व्यञ्जकमिति व्यङ्ग्यस्यापराङ्गतैव। यन्नैरपेक्ष्येण व्यञ्जकं, तन्मुखप्रेक्षित्वस्यैवापराङ्गत्वेन वक्ष्यमाणत्वात्। न चात्र विप्रलम्भस्य प्राधान्येन ध्वनित्वे कथं गुणीभूतव्यङ्ग्यतेति वाच्यम्। विप्रलम्भव्यञ्जनापेक्षया ध्वनित्वेऽपि अनौचित्यव्यञ्जनापेक्षया गुणीभूतव्यङ्ग्यत्वाविरोधादित्याहुः [५]अथाधमकाव्यं लक्षयति–

**अव्यङ्ग्यमपि यच्चारु तत्काव्यमधमं स्मृतम् ।**
**शब्दचित्रं चा[६]र्थचित्रमित्येतद्द्विविधं विदुः ।।८।।**
**उत्तालतालहिन्तालकृतमालतमालकम् ।**
**विपिनं तत्समालोक्य नन्दनस्यास्मरद्विभुः ।।**

चारुगुणालंकारसंबन्धनिबन्धनचमत्कारकरं, तदुभयसंबन्धमात्रस्य सकलसाधारण्यात् एतच्च ये शब्दार्थनिष्ठं गुणं मन्यन्ते तन्मतेन बोध्यम्। गुणानां रसनिष्ठत्वे गुणोत्कर्षेण रसोत्कर्षावश्यंभावादव्यङ्ग्यत्वासंभवात्। यद्वा चारुगुणाभिव्यञ्जकवर्णालंकार-

---

१. M. सिद्धय for सिद्धिं
२. M. adds अनेन before कामकला°
३. M. वर्तमानोपदेशात्° for वर्तमानकृदुपदे°
४. M. adds नित्यं नित्यं before विप्रलम्भ°
५. Pr. om. अथाधमकाव्यं लक्षयति
६. Pr. वाच्यचित्रं for चार्थचित्रं°

मात्रनिबन्ध नचमत्कारकारकमित्यर्थः[१]। वस्तुतस्तु अव्यङ्ग्यपदमस्फुटव्यङ्ग्यपरम्। 'अनुदरा कन्ये' त्यादावीषदर्थेऽपि नञः संभवात्। अतः मतद्वयेऽपि अविरोधः। युक्तं च तथा-व्यङ्ग्याभावे काव्यत्वहानेः। न चैवमस्फुटाख्यगुणीभूतव्यङ्ग्ये अतिव्याप्तिरिति वाच्यम्। उपधेयसंकरेऽप्युपाधेरसंकरादित्याहुः। अविवक्षितव्यङ्ग्यत्वमव्यङ्ग्यत्वमतो नातिव्याप्ति-रित्यप्याहुः। तच्च अधमकाव्यं शब्दचित्रमर्थचित्रं चेति द्विविधं विदुः। इदं च स्वरूपकथनमात्रपरं न तु विभागपरम्। षष्ठोल्लासे विभागस्य दर्शयिष्यमाणत्वादिति ध्येयम्। यथा 'उत्तालताल' इत्यत्र पूर्वार्धे शब्दचित्रं, उत्तरार्धे स्मरणालंकारनिबन्धनादर्थचित्रम्। यथा वा–

**स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा-**
**मूर्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाह्नाय वः ।**
**भि द्यादुद्यदुदारदर्दुरदरी दीर्घादरिद्रद्रुम-**
**द्रोहोद्रेकमहोर्मिमेदुरमदा मन्दाकिनी मन्दताम् ॥**

स्वच्छन्दं वाय्वाद्युपाधिमन्तरेणैव उच्छलन्त्यो या अच्छा निर्मलाः, कच्छकुहरेषु तटसमीपगर्तेषु छातेतराः कृशेतराः अम्बुच्छटा जलसमूहास्ताभिर्मूर्छन्मोहा विगलदज्ञाना ये महर्षयस्तैर्हर्षेण विहिताः स्नानादयः आह्निका यस्यां सा तथा उद्यन्नुद्गच्छन्नुदार उद्भटो दर्दुरो मण्डूको यासु तासु दरीषु तटकन्दरासु दीर्घा अदरिद्रा अस्तोका ये द्रुमास्तेषां द्रोहोद्रेक उन्मूलनातिशयस्तत्प्रचुराभिरूर्मिभिर्मेदुरोऽधिको मदो यस्याः सा मन्दाकिनी गङ्गा वो मन्दतामह्नाय झडिति भिद्यादित्यत्र शब्दगुणेनौजसा[२] शब्दालंकारेणानुप्रासादिना च युक्तत्वाच्चात्वम्। इदं च शब्दचित्रस्योदाहरणम्। अर्थ चित्रं यथा वा–

**विनिर्गतं मानदमात्ममन्दिराद्भवत्युपश्रुत्य यदृच्छयापि यम् ।**
**ससम्भ्रमेन्द्रद्रुतपातितार्गला निमीलिताक्षीव भियामरावती ॥**

मानदं शत्रुणां मानखण्डकं यं हयग्रीवं यदृच्छया लीलया न तु युयुत्सया आत्ममन्दिराद्विनिर्गतं न तु अमरावती समीपमागतम्। उपश्रुत्य न तु दृष्ट्वा ससंभ्रमेण इन्द्रेण[३] द्रुतम्[४] सपदि पातितार्गला संघटितकवाटा सती अमरावती भिया निमीलिताक्षीव भवतीति। अत्र प्रसादादिना गुणेन उत्प्रेक्षालंकारेण युक्तत्वात् चारुता।

यद्यप्यत्र प्रथमश्लोके मन्दाकिनीविषयो भक्ति रूपो भावो व्यज्यते, द्वितीयश्लोकेऽपि वीररसो व्यज्यते। तथापि निःशेषच्युतचन्दनमित्यत्रैव वाच्यस्य व्यङ्ग्यप्रवणतां विना विश्रान्त्यभावाभावेन प्रतीयमानार्थस्यैव स्फुटत्वाद्व्यङ्ग्यस्य न स्फुटतेति विवक्षितम्। अस्फुटव्यङ्ग्यत्वमक्षतमित्येके। व्यङ्ग्यसद्भावेऽप्यत्र व्यङ्ग्ये कविविवक्षावैधुर्यादव्यङ्ग्यत्वम्,

---

१. M. चमत्कारकरं for चमत्कारकारकं॰

२. M. ॰नौजसाम् before शब्दालंकारे॰

३. Pr. adds झडिति इन्द्रेण

४. Pr. om. दृतम् सपदि

सहृदयास्तु रसास्वादलालसाः। अत्रापि रसं भुञ्जत एव इति सहृदयदृष्ट्या नाधमत्वमित्यन्ये। प्रथमश्लोके मन्दाकिनी वो मन्दतां भिद्यादिति योजनायां व्यवधानं, द्वितीये च व्यभिचारिणो भयस्य स्व शब्देनोपादानाद्व्यभिचारिरसस्थायिभावानां शब्दवाच्यतेति वक्ष्यमाणमनौचित्यं च व्यङ्ग्यप्रतीतिमपकर्षतीति अप्रतीयमानव्यङ्ग्यत्वादधमत्वं दोषाज्ञाने व्यङ्ग्यप्रतीतौ नाध मत्वमित्यप्याहुः।

इति दन्तिद्योतदिवाप्रदीपाङ्कविश्वामित्रवंशमुक्ताफललक्ष्मीभवस्वामिभट्ट सुकृतपरि-पाकाद्वैतविद्याचार्यसत्यमङ्गलरत्नखेटश्रीनिवासदीक्षिततनयस्य कामाक्षीगर्भसंभवस्य श्रीमदर्धनारीश्वरदीक्षितगुरुचरणसहजतालब्धविद्यावैशद्यस्य श्रीराजचूडामणिदीक्षितस्य कृतिषु[१] काव्यदर्पणे प्रथमोल्लासः।

---

१. Pr. कृतौ for कृतिषु

# अथ द्वितीयोल्लासः

प्रथमोल्लासे हि गुणादिविशिष्टं शब्दार्थयुगलं काव्यमित्युक्तम्। तत्र शब्दार्थयोः प्राधान्यात् प्रथमं तयोः स्वरूपं दर्शयिष्यन् अर्थापेक्षयापि शब्दस्य प्राधान्यात् शब्दस्वरूपं तावत् विभजन्नेव निर्दिशति–

**शब्दोऽत्र त्रिविधः शक्तलक्षकव्यञ्जकात्मना ।।९।।**

शक्तलक्षकव्यञ्जकभेदेन शब्दोऽत्र काव्ये त्रिविधः। यद्यपि शास्त्रेषु शक्तलक्षकभेदेन द्विविध एव शब्दः तथापि काव्ये व्यञ्जक इत्यपरोऽपि सोऽस्तीत्युक्तमत्रेति[१]। लक्षणायाः शक्तिमूलत्वात् शक्तस्य प्रथमं निर्देशः व्यञ्जनायाः उभयमूलकत्वात् व्यञ्जकस्योभयानन्तरं निर्देश इति ध्येयम्।

**अथार्थमपि विभजन्नेव निर्दिशति–**
**तदर्थोऽपि त्रिधा शक्यलक्ष्यव्यङ्ग्यविभेदतः**

तेषां शक्तलक्षकव्यञ्जकरूपाणां शब्दानामर्थस्तदर्थः सोऽपि शक्यलक्ष्यव्यङ्ग्यभेदात् त्रिविधः। अत्र यद्यपि विभागादेव त्रिविधत्वसिद्धिः। तथापि न्यूनाधिकसंख्याव्यवच्छेदाय त्रिधेत्युक्तम्। यद्यपि वाचकादिशब्दनिर्देशानन्तरं तल्लक्षणमुक्त्वैव[२]ार्थनिरूपणमुचितं[३], तथाप्यर्थघटितमेव तेषां लक्षणं वक्तव्यम्। अतः प्रागर्थस्वरूपप्रदर्शनमिति ध्येयम्।

ननु वाक्यार्थस्योक्तत्रैविध्यानन्तर्भावाद्विभागन्यूनतेत्यत आह–

**अर्थस्तात्पर्यविषयो वाक्यार्थ इति तार्किकाः ।**
**अन्ये शक्यं तमप्याहुरपरे लक्ष्यमूचिरे ।।१०।।**

आकाङ्क्षासत्तिमतां पदानां समुच्चारणे सत्यपदार्थोऽपि घटानयनादिसंसर्गरूपोऽपूर्वो वाक्यार्थः तात्पर्यविषयतया समुल्लसतीत्यभिहितान्वयवादिनो नैयायिकादयः। वाक्यार्थोऽपि शक्य एवेत्यन्विताभिधानवादिनः प्राभाकराः। वाक्यार्थो लक्ष्य इति भाट्टा वेदान्तिनश्चाहुः।

---

१. M. समस्ती° for सोऽस्ती°

२. M. °कृत्वैव° for °मुक्त्वैव°

३. M. °निरूपणकृत° for °निरूपणमुचित°

४. M. तुल्य° for अर्थ°

वस्तुतस्तु वाक्यार्थो न शक्यो नापि लक्ष्य इति पञ्चमे[1] वक्ष्यते। न चैवं विभागन्यूनतेति वाच्यम्। शक्यपदेन वृत्यन्तरं विना[2] शक्तिप्रयुक्तोपस्थितिविषयत्वस्य विवक्षितत्वादिति दिक्। अथार्थव्यञ्जकतामाह–

**वाच्यादयस्त्रयोऽप्यर्थाः प्रायशो व्यञ्जका मताः ।**
**जयत्यधिवसन् गङ्गां देवस्तापैरनीक्षितः ।।११।।**

वाच्यलक्ष्यव्यङ्ग्यरूपाः त्रयोऽप्यर्थाः प्रायशो व्यञ्जकाः, न तु सर्वत्र-जयतिपदवाच्य-[3]स्योत्कर्षेण वर्तत इत्यस्य वक्तृनमस्कारव्यञ्जकतया वाच्यस्य व्यञ्जकत्वम् गङ्गापदलक्ष्यस्य तीरस्य शैत्यादिव्यञ्जकतया लक्ष्यस्य व्यञ्जकत्वम्। तथा गङ्गामित्यत्रैव व्यङ्ग्येन शैत्येन भगवतस्तापानीक्षणसामर्थ्यव्यञ्जनात् व्यङ्ग्यस्यापि व्यञ्जकत्वमिति ध्येयम्।

यद्यपि उद्देशक्रमानुरोधात् शब्दस्य व्यञ्जकत्वम् अभिधायार्थस्य व्यञ्जकत्वमभिधातुमुचितम्। तथापि शब्दव्यञ्जकत्वं स्फोटव्यञ्जकेषु वर्णेषु एव दृष्टम्। अर्थव्यञ्जकता तु न क्वापि दृष्टा। ततः कथमर्थानामपि काव्यत्वमिति शङ्कामपनेतुमिदमिहोक्तम्। न तु प्राधान्येनार्थव्यञ्जकत्वमुपदर्शयितुम्। अत एव अग्रे शब्दस्य व्यञ्जकत्वमुपपाद्यार्थस्य व्यञ्जकत्वं प्रपञ्चयिष्यत इति ध्येयम्। यथा वा वाच्यस्य व्यञ्जकता–

**माए घरोवअरणं अज्ज हु णत्थित्ति साहिअं तुमए ।**
**ता भण किं करणिज्जं एमेअ ण वासरो ठाइ ।।**

**(मातर्गृहोपकरणमद्य खलु नास्तीति साधितं[4] त्वया ।**
**तद्भण किं करणीयमेवमेव न वासरःस्थायी[5] ।।)**

हे मातर्गृहोपकरणं नद्याद्याधेयजलादिरूपं नास्तीति त्वया संप्रति कथितम्। किं तत्, किं वा कर्तव्यं वद वासर एवमेव न तिष्ठतीत्यत्र तद्भण किं करणीयमित्याद्यर्थेन वक्तृवैशिष्ट्याद्गृहोपकरणसंपादनव्याजेन स्वैरविहारोद्यमो व्यज्यते। तत्रापि मातरिति वृद्धता व्यज्यते। तथा च स्वयं जलाहरणाद्यसामर्थ्यम्। गृहोपकरणमित्यवश्यसंपादनीयत्वमद्य खलु इत्यपलापाशक्यता, त्वयेति न मयैव व्याजः संपाद्यत इत्ययमर्थः, तद्भणेति स्वस्य कर्तव्याज्ञानाभिनय एवमेवेत्यादिना क्षणमात्रमपि विलम्बानर्हता व्यज्यत इति ध्येयम्। अत्र तद्भण किं करणीयमित्यादि वाक्यार्थस्य व्यञ्जकत्वमिति भेदः। न चैवं वाच्यव्यञ्जकोदाहरणत्वमयुक्तं स्यात्। वाक्यार्थस्य वाच्यत्वाभावादिति वाच्यम्। वाक्यार्थस्यापि वाच्यान्तर्भावस्य उक्तत्वादिति दिक्। लक्ष्यस्य व्यञ्जकता यथा–

---

१. M. om. विना
२. पञ्चमे उल्लासे इत्यर्थः
३. M. adds तत्र before जयति°
४. Pr. कथितं for साहितं
५. Pr. °तिष्ठति for स्थायी

**साहेन्ती सहि सुहअं खणे खणे दूम्मिआसि मज्झकए ।**
**सब्भावणेहकरणिज्जसरिसअं दाव विरइअं तुमए ॥**
**(साधयन्ती सखि सुभगं क्षणे क्षणे दूनासि ममकृते ।**
**सद्भावस्नेहकरणीयसदृशकं तावद्विरचितं त्वया ॥)**

हे सखि मम कृते मन्निमित्तं सुभगं नायकं साधयन्ती संघटयितुं कृतसंचारेति यावत् क्षणे क्षणे दूनासि श्रान्तासि। सद्भावस्य समीचीनहृदयतायाः स्नेहस्य च यत् करणीयम्, तत्सदृशं त्वया कृतमिति वाच्यार्थः। अत्र दूत्याः प्रमाणान्तरेणापकारित्वावगमान्मुख्यार्थबाधावगमेन शत्रुत्वमाचरितमिति विपरीतलक्षणया अवगम्यते। तेन च त्वमधमा येन दूतीविरुद्धं नायकोपभोगमाचरितवती, सोऽप्यधमो येन दूतिकायां त्वय्यनुरक्त इति व्यज्यते, इदमपि वाक्यलक्षितस्य अर्थस्य[1] व्यञ्जकतायामुदाहरणमिति भेदः। व्यङ्ग्यस्य व्यञ्जकता यथा वा–

**उअ णिच्चलणिप्पंदा भिसिणीपत्तम्मि रेहइ बलाआ ।**
**णिम्मलमरगअभाअणपरिट्ठिआ संखसुत्ति व्व ॥**
**(पश्य निश्चलनिष्पन्दा बिसिनीपत्रे राजते बलाका ।**
**निर्मलमरकतभाजनपरि[2]स्थिता शङ्खशुक्तिरिव ॥)**

इदं सङ्केतार्थिनं कामुकं प्रति नायिकावचनम्। हे निश्चल संकेतार्थितयात्रैवावस्थितिशील ! नालिनीदले निष्पन्दा निश्चला निष्कलङ्का मरकतपात्रस्थिता शङ्खशुक्तिर्मुक्तास्फोट इव राजति। पश्येत्यत्र निष्पन्दत्वेनाश्वस्तत्वं तेन जनराहित्यं तेनापि तदेव संकेतस्थानमिति व्यज्यते। यद्वा संकेतस्थानमगत्वैव गतोऽस्मीति मिथ्यावदन्तं नायकं प्रति नायिकावचनमिदम्। अत्रापि निष्पन्दत्वेनाश्वस्तत्वं तेन च न त्वं तत्र गतोऽसि मिथ्यैव गतोऽस्मीति वदसि गतश्चेन्नेयं बलाका निःशङ्का वर्तेत इति व्यज्यते। अस्मिंश्च पक्षे निश्चलेति संबोधनं मिथ्या वदसीति व्यङ्ग्ये सहायतां प्रतिपाद्यते। केचित्तु नाथं प्रति अन्यापदेशेन वचनमिदम्। गत्यर्थानो ज्ञानार्थत्वात् निश्चलपदं ज्ञानशून्यपरम्। बलाकापदेन च स्त्रीलिङ्गमहिम्ना नायिका प्रतीयते। ततश्च भो ज्ञानशून्य स्वयमेव समागत्य पश्य सा विरहासहा संप्रति बिसिनीपत्रे राजते। कतिपयक्षयणविलम्बे प्राणान्न धारयिष्यति यतो निष्पन्दा।

निर्मलमरकत इत्यत्र बिसिनीपत्रस्य मरकतभाजनेन उपमिततया तदङ्गसङ्गान्नीरसता व्यज्यते तस्याः शुक्त्योपमितत्वेन पाण्डुत्वम् तेन च उपमाव्यङ्ग्येनानुभावेन विप्रलम्भातिशयः व्यङ्ग्य इत्याहुः।

---

१. Pr. om °अर्थस्य

२. Pr. °प्रतिष्ठता for °परिस्थिता

एवमर्थस्य स्वरूपं व्यञ्जकत्वं च निरूप्य अवसरसंगत्या वाचकादीनां क्रमेण लक्षणमाह—

**साक्षात्संकेतितं योऽर्थमभिधत्ते स वाचकः ।**
**घनश्यामः क्रियाद्रामः श्रियं सुग्रीव राज्यदः ।।१२।।**

अत्राभिधत्ते प्रतिपादयतीत्यर्थः। नत्वभिधया प्रतिपादयतीति। तथा सति अभिधाया वाचकशब्दव्यापारत्वेन अन्योन्याश्रयात् तावत एव सम्यक्वैशेषवैयर्थ्याच्च। संकेतश्चास्मात् शब्दादयमर्थो बोद्धव्य[1] इत्याकारक आप्ताभिप्रायो न तु ईश्वराभिप्रायमात्रम्। यदृच्छाशब्दस्याप्यग्रे संग्राह्यत्वकथनेन तत्राव्याप्तेः। एवं च लक्ष्यस्याप्यर्थस्य तादृशाप्ताभिप्रायविषयत्वेन संकेतितत्वाविशेषाल्लक्ष्यार्थप्रतिपादके लाक्षणिकपदे अतिव्याप्तिवारणाय साक्षादिति। अर्थान्तरप्रतीत्यद्वारकत्वं साक्षात्त्वमिह विवक्षितम्। तावन्मात्रं च संबन्धितया आकाशस्मारके घटादि शब्दे अतिव्याप्तमतः संकेतितमिति। शब्दत्वेन विशेषणाच्च न चेष्टायामतिव्याप्तिरित्येके। अन्ये तु साक्षात्संकेतितो योऽर्थः तत्प्रतिपादकत्वं लक्षणम्। सङ्केतश्च पूर्वोक्तप्ताभिप्राय एव। लक्षणास्थले च परंपरया संकेतः शक्यं बोधयित्वा लक्ष्यं बोधयतु इत्यभिप्रायेणैव आप्तेन लाक्षणिकपदप्रयोगात् इत्याहुः। अपरे संकेतपदं संबन्धपरम्। तथा च साक्षात्संबन्धविषयार्थप्रतिपादकत्वं वाचकत्वम्।

ननु छत्रिणो गच्छन्तीति यच्छत्र्यच्छत्रिसाधरणैकसार्थगन्तृत्वेन लक्षणयाच्छत्रिणोऽपि प्रतिपादके छत्रिपदेऽतिव्याप्तिः। न च यः शब्दः यद्विषयकसाक्षात्संबन्धेन यदर्थस्मृतिहेतुः स तस्य वाचक इति विवक्षितं छत्रिपदं च साक्षात्संबन्धेन छत्र्यच्छत्रि साधारणरूपेण न च्छत्रिस्मारकमिति न तत्राव्याप्तिरिति वाच्यम्। छत्रिविषयक साक्षात्संबन्धस्यापि लक्षणया छत्रिस्मरणेऽपि प्रयोजकत्वमस्त्येव। अन्यथा शक्यग्रहेऽपि लक्षणया तत् स्मृत्यापत्तेः न चेष्टापत्तिः। शक्यसंबन्धाग्रहेण लक्षणाया अप्रवृत्तेरिति चेन्न।

छत्रिण इत्यत्र छत्रिस्मृतिः साक्षात् संबन्धेनैवाछत्रिस्मृतिः परं लक्षणया इति अजहल्लक्षणैव नास्तियुगपद्वृत्तिद्वयविरोधश्च, गंगायां मत्स्यघोषावित्यादाविवादोषयैव। यद्वा साक्षात्त्वन्यप्रतिपादनक्रियाविशेषणत्वे नाप्यङ्गीकारान्न दोषः।

ननु एवमपि साक्षात्संबन्धविषयमर्थं यः पदार्थस्मृत्यन्तरमद्वारीकृत्य प्रतिपादयति स वाचक इति हि पर्यवसितम्। तथा सति शक्यभूतच्छत्रिमात्रस्मृतिं द्वारीकृत्य छत्र्यच्छत्रिस्मारके छत्रिपदेऽतिव्याप्तेरभावेऽपि 'राजा हरति लोकानां हृदयं मृदुभिः करैः' इत्याद्यभिधामूलव्यञ्जनास्थले प्रकरणादिनाभिधायाः प्राकरणिकचन्द्राद्यर्थस्मृतौ नियमने सत्यप्राकरणिकभूपाद्यर्थस्य व्यञ्जनयाप्रतिपादके राजादिपदे अतिव्याप्तिः। तत्र प्राकरणिकचन्द्रादिपदार्थस्मृतेः अप्राकरणिकभूपाद्यर्थस्मृतौ द्वारत्वाभावात्। न च पदार्थस्मृत्यन्तराव्यवहितत्वमेवात्र साक्षात्त्वं विवक्षितमिति वाच्यम्। तथापि- 'सर्वदो माधवः पायादन्धक-

---

१. Pr. बोध्य for. बोद्धव्य

क्षयकृत्सदा' इत्यादौ यत्र हरिहरयोरपि प्राकरणिकत्वं, तत्र प्रसिद्धिप्राचुर्येणान्धकासुरनाशकर इति हरविषयार्थस्य झटिति प्रतीतिः। पश्चात् पर्यालोचनायां[1]-यदुप्रभेदानां क्षयकृत् गृहकृदिति हरिविषयार्थस्य निहतार्थतया विलम्बेन प्रतीतिः। तत्रान्धकक्षयादिपदे अव्याप्तिः[2], पदार्थ-स्मृत्यन्तराव्यवधानेन स्मारकत्वाभावात् इति चेत् न। अस्वतन्त्रत्वेन पदार्थविशेषणात् स्वातन्त्र्यं च शक्यतावच्छेदकप्रकारेणान्वयबोधाविषयत्वम् ततश्च स्वतन्त्रपदार्थस्मृति व्यवधाने अपि अस्वतन्त्रपदार्थस्मृत्यव्यवहितत्वमस्तीति नाव्याप्तिः। अजहल्लक्षणास्थले तु छत्रिणां शक्यतावच्छेदकीभूतछत्रित्वप्रकारेणान्वयबोधविषयत्वात् न स्वातन्त्र्यमिति अस्वतन्त्रपदार्थस्मृतिव्यवधानेनैव लक्ष्यस्मारकतेति न तत्रापि अतिव्याप्तिः। न चैवं लाक्षाणिकस्थले साक्षात् संबन्धविषयस्य अन्वयबोधविषयत्वाभावेन स्वातन्त्र्याभावात् अस्वतन्त्रपदार्थस्मृत्यव्यवधानपदेनैव तत्रातिव्याप्तिवारणात् साक्षात्पदवैयर्थ्यमिति वाच्यम्। गङ्गायां मत्स्यघोषावित्यत्र साक्षात्संबन्धविषयस्यापि अन्वयबोधाविषयत्वेन स्वतन्त्रत्वात् तत् स्मृतिव्यवधानेऽपि तीरस्मृतेः अस्वतन्त्रपदार्थस्मृत्यव्यवहितत्वात् तीरस्मृतिजनकता-दशायाम् अतिव्याप्तिवारणाय साक्षात्पदावश्यंभावात्। न चैवं 'राजा हरति' इत्यत्र व्यञ्जनया भूपाद्यप्राकरणिकार्थस्मारकेऽतिव्याप्तिः स्यात्। तत्र प्राकरणिकार्थस्य अन्वयाविषयत्वेन स्वात्न्त्र्यात् तत् स्मृतिव्यवधानेऽपि अस्वतन्त्रपदार्थस्मृत्यव्यवधानसत्त्वादिति वाच्यम्। [3]नियन्त्रितसंकेतस्यैव संकेतपदेन विवक्षितत्वात् इत्याहुः। यथा वा—घनश्यामादि शब्दाःसाक्षात् संकेतितार्थस्मारकतया वाचकाः।

ननु संकेतिताः क इत्याकाङ्क्षायामाह—

**जातिर्गुणः क्रियाद्रव्यमिति संकेतिता मताः ।**

जातिर्घटत्वादिका। गुणो नीलपीतादिकः। क्रिया चलनादिका। द्रव्यं सजातीयवस्त्वन्तररहितमाकाशादिकम्। वक्तृयदृच्छासंकेतितडित्थादिशब्दव्यङ्ग्यस्फोटश्च। ऐते चत्वारः संकेतितविषया मताः।

ननु 'घटमानय' घटं स्थापय' इत्यादि वाक्येषु उत्तमवृद्धे नोक्तेषु प्रयोज्यस्य घटानयनस्थापनादिव्यहारं पश्यन् व्युत्पित्सुर्व्यवहारविषयीभूतायां व्यक्तावेव शक्तिं गृह्णाति, न तु जात्यादावेतद्विषय इति चेत्, न। व्यक्तेः व्यवहारविषयत्वेऽपि व्यक्तीनामानन्त्यात् सामान्यलक्षणायां मानाभावेन शक्तिग्रहसमये सर्वव्यक्त्युपस्थित्यसंभवात् न तासु शक्तिग्रहः[4]यदि च तत्कालोपस्थितकतिपयव्यक्तिष्वेव शक्तिग्रहः तदा यासु न शक्तिग्रहः तासां गवादिपदेनोपस्थितिः न स्यात्। यदि च क्वचित् शक्तिग्रहेऽपि अन्यत्र

---

१. M. पर्यालोचनाया for पर्यालोचनायां

२. M. न व्याप्तिः for अव्याप्तिः

३. M. अनियन्त्रित संकेत° for नियन्त्रितसङ्के°

४. M. शक्तिसंभवः for शक्तिग्रहः

शाब्दधीरिष्यते तदा शब्दधीः शाब्दज्ञाने व्यभिचारिणीति कारणमेव न स्यात्। यदि च यद्धर्माश्रये शक्तिग्रहः तद्धर्माश्रयस्य स्मृत्यगोचरस्यापि योग्यतावशात् अन्वयबोधविषयत्वं स्यादेव। समानप्रकारकत्वस्यैव नियामकत्वादिति मतम्। तथापि व्यक्तिमात्रस्य शक्यत्वे "गौःशुक्लश्चलः" इत्यादि पदानां व्यक्तिमात्रवाचकत्वेन पर्यायतापत्त्या सह प्रयोगानुपपत्तिः, जातिर्गुणः क्रियेति विभगानुपपत्तिश्च। यदि च जात्यादिविशिष्टव्यक्तिषु शक्तिग्रहमङ्गीकुरुषे तदा लाघवात् जात्यादेरेव शक्यता युक्ता। व्यक्तिलाभस्तु आक्षेपाल्लक्षणया वा भविष्यति। स च संकेतग्रहोपाधिभूतो जात्यादिरूपो धर्मो वस्तुनः स्वाभाविकः। वक्तृयदृच्छोपाधिकश्चेति सामान्यतो द्विविधः। स्वाभाविकधर्मश्च सिद्धसाध्यभेदेन द्विविधः। तत्र सिद्धोऽपि वस्तुनः प्राणप्रदो विशेषाधानहेतुश्चेति द्विविधःतत्राद्यो जातिः। सा हि वस्तुनः प्राणप्रदतुल्यत्वात् प्राणप्रदेत्युच्यते। तदवच्छिन्नं हि वस्तुव्यवहारयोग्यं भवति नान्यथा। तदुक्तं भर्तृहरिणा-

'गौः स्वरूपेण न गौः नाप्यगौः गोत्वाभिसंबन्धात्तु गौः' इति। गौः स्वरूपेण व्यक्तिमात्रेण गौरिति न व्यवह्रियते। नाप्यगौः इति वा व्यवह्रियते, किं तु गोत्वसंबन्धादेव गौरिति व्यवह्रियत इत्यर्थः। यद्वा प्राणप्रदत्वं यावदाश्रयं तावदाधारत्वम्। गुणानां तु नित्यत्वपक्षेऽपि न यावदाश्रयं तद्वृत्तित्वम्। आश्रये सत्यपि पाकादिना समवायनाशे तदनाधारतास्वीकारात्। द्वितीयस्तु शुक्लादिर्गुणः जात्या प्रथमं विशेषितमेव हि वस्तु द्वितीयादिक्षणे समवायोत्पत्तौ पश्चात् गुणैः विशिष्यते। द्वितीयस्तु साध्यरूपो धर्मः क्रिया। यद्यपि क्रियापि नित्या न साध्या तथापि आख्यातेन साध्यतया प्रतीतेः सा साध्या इत्युच्चते। यदाहुः—

**'यावत्सिद्धमसिद्धं वा साध्यत्वेन प्रतीयत ॥' इति।**

सा च क्रिया पाकादिपौर्वापर्येण वर्तमानाभिः स्वावयवकल्पाभिः चुल्लीसंमार्जनाद्यव-श्राणान्ताभिः क्रियाभिः अभिव्यज्यते। वक्तृयदृच्छोपाधिकस्तु धर्मः पूर्वपूर्ववर्णैः अस्फुटतया[1]भिव्यक्तः चरमवर्णबुद्धया स्फुटतरमभिव्यक्तः स्फोट एव स च व्यञ्जकानां वर्णानां क्रमवत्त्वेऽपि न स्वयं क्रमवान्। इतरथा वर्णवत्तस्यापि क्रमवत्त्वेऽर्थप्रत्यायकत्वा-सामर्थ्यप्रसङ्गात्। तादृशस्फोटरूपं च डित्थादिशब्दस्वरूपं वक्तृयदृच्छया डित्थाद्यर्थेषु शक्तिग्रहोपाधित्वेन संनिवेश्यत इति संज्ञारूपं यदृच्छात्मकं चोच्यते। यद्यपि जात्यादिशब्दानामपि स्फोटव्यञ्जकत्वमविशिष्टं तथापि जात्यादेरेव प्रकारत्वात् तेषामेवोपाधित्वं डित्थादि शब्देषु स्फोट एव प्रकार इति स एवोपाधिः। न चैवं यदृच्छाशब्दे द्रव्यमुपाधिरिति व्यवहारः कथमिति वाच्यम्। स्फोटरूपशब्दस्यापि द्रव्यत्वेन तदविरोधात्। अत एव 'गौः शुक्लश्चलो डित्थ' इत्यादौ चतुष्टयीशब्दानां प्रवृत्तिरिति महाभाष्यकारः।

ननु भिन्नासु घटादिव्यक्तिषु घटोऽयं घटोऽयमिति अनुगतप्र[2]तीतिविषयत्वं हि

---

१. M. अस्पृष्टतया for अस्फुटतया

२. M. °प्रयोगवि° for °प्रतीतिवि°

जातित्वमिहाभिमतम्-तच्च परमाणुत्वेऽतिव्याप्तम् न च परमाणुत्वमपि जातिरेवेति वाच्यम्। परमाणुत्वादीनां गुणमध्ये पाठादिति चेन्न। तेषां गुणमध्ये पाठात् पारिभाषिकमेव गुणत्वं न तु वास्तवमिति ध्येयम्।

ननु गुणक्रिययोरपि आनन्त्यादि व्यक्तिशक्तिपक्षोक्तदूषणसाम्यमिति चेन्न। शुक्लनीलादिगुणव्यक्तयः प्रत्येकमेकैका एव। नित्याश्च तत्तद्द्रव्यव्यक्तिभिर्व्यज्यन्ते। विनाशोत्पत्ति[1]धीस्तु तत्समवायविषयिणी। एवं पाकादि क्रियापि एकैका एव नित्याश्च। चुल्लीसंमार्जनाद्यवश्रावणान्तं तत्तव्द्यापारव्यङ्ग्याः व्यञ्जकक्रमाच्च क्रियायाः क्रमिकत्वव्यवहारःभेदप्रतीतिस्तु आश्रयभेदौपाधिकी यथैकस्यैव मुखस्य दर्पणतैलखड्गा-द्यालंबनभेदात् भेदप्रतीतिः तद्वदिति दिक्।

एवं जात्यादयश्चत्वारोऽपि तत्तत्पदसंकेतविषया इत्युक्तम्[2]। तत्र[3] मतान्तराण्याह—

**जातिरेवाथवा तद्वानेव वापोह एव वा ॥१३॥**

घटादिशब्देष्विव शुक्लादिशब्देष्वपि जातिरेव संकेतविषयः। तथा हि-शुक्लादयो गुणाः क्रियाश्च प्रतिव्यक्ति भिन्नभिन्ना एव। उत्पादविनाशप्रतीतेः तस्याः बाधकं विना तत्समवायत्वकल्पनानौचित्यात्। समवायस्य नित्यत्वाच्च। ततश्च हिमपयः शङ्खाद्याश्रयभेदे शुक्लादयो गुणा भिन्ना एव। भिन्नेष्वपि तेषु 'शुक्लः शुक्ल' इत्यनुगतप्रतीतिबलात् शुक्लत्वादिकं जातिः। तथा गुडतण्डुलादिपाकादिक्रियासु पाकत्वादिकं जातिः। एवं बालवृद्धशुकाद्युदीरितेषु डित्थादिशब्देषु स्फुटतरवैलक्षण्यानुभवात् भेदसिद्धौ तत्रापि अनुगतबुद्ध्यनुरोधात् डित्थशब्दत्वादिकं जातिः। सा च शब्दार्थयोः अभेदवादिमते डित्थाद्यर्थेऽपि वर्तते। तद्भेदवादिमतेऽपि परंपरयार्थेऽपि तस्याः वृत्ति अविरुद्धा। यद्वा प्रतिदिनमुपचयापचयवत्त्वेन डित्थादिशरीरस्य भेदः आवश्यकः तथापि अनुगतबुद्धया डित्थत्वादिकं जातिरेवेति सर्वेषां शब्दानां जातिरेव सङ्केतविषयः इत्येके। अन्ये तु तद्वान् जातिविशिष्टः पदार्थ एव सर्वत्र संकेतविषयः। प्रथममानयनादिव्यवहारदर्शनेन तत्रैव संकेतग्रहादग्रे तत्त्यागे मानाभावादित्याहुः। अपरे तु पटादिव्यावृत्तिरूपापोह एव घटादिपदसंकेतविषयोऽपोहव्यतिरिक्तजातौ मानाभावादित्याहुः।

एषु पक्षेषु युक्तायुक्तविचारणा ग्रन्थगौरवभयात् प्रकृतव्यञ्जनानिरूपणानुपयोगाच्च न कृतेति ध्येयम्।

वाचकं निरूप्य परिशेषादभिधाद्यतिरिक्तां व्यञ्जनां सिषाधयिषुस्तव्द्यापार-भूतामभिधां तावल्लक्षयति—

**'व्यापारः शक्यधीहेतुर्मुख्यः शब्दगतोऽभिधा' ॥१४॥**

---

१. M. विनाशोत्पाद° for विनाशोत्पत्ति°

२. M. इत्युक्त्वा°

३. M. om. तत्र

शक्यस्य साक्षात्संकेतविषयस्य या धीस्तद्धेतुर्मुख्यो यः शब्दनिष्ठो व्यापारः सोऽभिधा-तत्र शब्दगतव्यापारत्वमात्रं लक्षणायां अतिव्याप्तम्। अतः शक्यधीहेतुरिति। न चैवम् अपि 'छत्रिणोगच्छन्ती' त्यजहल्लक्षणायां छत्र्यछत्रिसाधारणैकसार्धगन्तृत्वेन शक्यानां छत्रिणामपि प्रतीतेः तत्रातिव्याप्तिरिति वाच्यम्। शक्यतावच्छेदकप्रकारेण शक्यधीहेतुत्वस्य विवक्षितत्त्वात् तावच्चाभिधामूलव्यञ्जनायामतिव्याप्तमिति मुख्यपदम्। मुख्यत्वं च तदर्थप्रतीतौ तद्गतव्यापारान्तरानपेक्षत्वम्। अभिधामूलव्यञ्जनायां व्यङ्ग्यार्थप्रतीतौ व्यङ्ग्यविषयशक्त्यपेक्षा-स्त्येवान्यथाशक्त्यग्रहेऽपि व्यञ्जनया तत्प्रतीत्यापत्तेः। न चैवं लक्षणायामपि तावतैवातिव्याप्ति-निरासे शक्यधीहेतुपदवैयर्थ्यमिति वाच्यम्। स्वरूपवर्णादिगतव्यञ्जनायामतिव्याप्तिनिरासाय[1] तदवश्यंभावादित्याहुः।

अन्ये तु शक्तिरेवाभिधा शक्तिश्च संकेतयितुः इच्छा संकेतयिता च जात्यादिवाचकपदेषु ईश्वर एव। डित्थादिपदेषु तत्तत्पित्रादिः[2] तदिच्छायाश्च स्वरूपस्वरूप-संबन्धेन शब्दे निष्ठत्वमपि अविरुद्धमतः शक्त्यतिरिक्तायाम् अभिधायां न किंचित्प्रमाण-मित्याहुः।

अथाभिधां विभजते—

**रूढिर्योगो योगरूढिरिति सा त्रिविधा मता ॥१६॥**

स्पष्टम्[3]।

रूढिं लक्षयति—

**रूढिस्त्वखण्डशक्त्यैव स्यादेकार्थाभिधायिता ।**
**पीनौ वधूकुचावुच्चैः मुक्ताहारौ च राजतः ॥१५॥**

समुदायशक्तिमात्रेण एकार्थप्रतिपादकता रूढिः। अवयवशक्त्या प्रतिपादके योगे अतिव्याप्तिवारणाय समुदायेति। समुदायावयवशक्तिभ्यांम् अर्थप्रतिपादिकायां योगरूढौ अतिव्याप्तिनिरासाय मात्रपदम्। समुदायशक्त्या वृक्षविशेषादिप्रतिपादकेऽवयवशक्त्या च तुरङ्गश्रोत्रादिप्रतिपादके अश्वकर्णादिशब्दे अव्याप्तिवारणायैकपदम्। तत्रावयवशक्त्या अर्थान्तरप्रतिपादनेऽपि[4] समुदायशक्तिमात्रेण[5] वृक्षविशेषाद्येकार्थप्रतिपादकत्वात् नाव्याप्तिः[6]। एवं च समुदायशक्तिमात्रेण अर्थप्रतिपादकत्वम् अवयवार्थाप्रतिभानात् तत्प्रतिभानेऽपि

---

१. M. स्वरवर्णादि° for स्वरूपवर्णादि°

२. M. om. तत्तत्°

३. M. स्फुटम् for स्पष्टम्

४. M. प्रतिपादकेऽपि for प्रतिपादनेऽपि

५. M. om. °ण

६. M. नातिव्याप्तिः for नाव्याप्तिः

तस्य प्रतिपाद्ये बाधात् वा भवतीति[1] द्विविधा रूढिः। यथा 'पीनौ वधूकुचौ' इति पदाभ्यां नावयवार्थप्रतिभानम्। मुक्ताहारपदे मुक्त आहारो याभ्यामिति अवयवार्थस्य प्रतिभानेऽपि तस्य मुक्तामयहारमालिकालक्षणे प्रतिपाद्ये बाध इति एषा रूढिः। यथा वा—

**प्रत्यर्थिक्षितिपालमौलिकलितप्रत्यग्रमुक्तातुला-**
**कोटिस्पर्शनमातनोति चरणाम्भोजं सदा तावकम् ।**
**वीरश्रीरघुनाथनायकविभो विश्वंभराधीश ते**
**तत्ते रूप्यतुलाप्रदानकलना चित्तेन मे विस्मयम् ॥**

अत्रापि मुक्तादिशब्देषु नावयवार्थप्रतिभानं, तुलाकोटिशब्दे अवयवार्थप्रतिभानेऽपि तस्य पादाङ्गदे[2]लक्षणे प्रतिपाद्ये बाध इत्येषा रूढिः। यद्यपि प्रत्यर्थिक्षितिपालानां मौलिभिः शिरोभिः प्रतिमाकारैः कलितो घटितः प्रत्यग्रमुक्तामयो याः तुलाकोटिः पादाङ्गदं, तस्य स्पर्शनं धारणमेव। प्रत्यर्थिक्षितिपालकिरीटखचितप्रत्यग्रमुक्तात्मकतुलितद्रव्यकोटि-प्रतिपादनम् इत्यभेदाध्यवसायार्थं तुलाकोटिशब्दस्यावयवार्थोऽपि विवक्षितः। तथापि तस्य पादाङ्गदगतत्वेन प्रतिपादनात् तत्र रूढिरेव। योगं लक्षयति—

**योगोऽवयवशक्त्यैव स्यादेकार्थाभिधायिता ।**
**रागिन् कान्तापदाघातस्तवाशोकस्य सांप्रतम् ॥१६॥**

रूढावतिव्याप्तिवारणाय अवयवेति। योगरूढौ तद्वारणाय एवेति। अवयवशक्तिमात्रेण कुसुमितादि वस्तुप्रतिपादके समुदायशक्त्या च दिवाकर[3]प्रतिपादके पुष्पवदादिपदे अव्याप्तिवारणाय एकपदम्। अवयवशक्तिमात्रेण प्रतिपादकत्वमपि समुदायार्थाप्रतिपादनात्[4] तत्प्रतिपादने[5]ऽपि तस्यावयवशक्तिप्रतिपाद्यार्थान[6]न्वयाद्वा भवतीति योगो द्विविधः। यथा 'रागिन्' इति केवलं योगः। अशोकपदे शोकरहिततत्वमेव कंकेलिवृक्षत्वमित्यभेदाध्यवसायार्थं समुदायार्थस्य विवक्षितत्वेऽपि शोकरहितत्वरूपावयवशक्तिप्रतिपाद्यार्थेनान्वय एव। यथा वा—

**शाखाभृतां यत्प्रमदावनेषु समाश्रितानामपि पुष्पवत्ताम् ।**
**छायातमिस्रप्रकरैरजस्रं पादा भजन्ते परिभूतिमेव ॥**

अत्रापि शाखाभृतामिति केवलं योगः। 'पुष्पवत्' पदे कुसुमवत्त्वमेव दिवाकरत्वमिति

---

१. M. om. °इति after भवति
२. M. om. °द°
३. M. adds °निशाकर before प्रतिपादके
४. M. °प्रतिभानात् for °प्रतिपादनात्
५. M. °प्रतिभानेऽपि for प्रतिपादनेऽपि
६. M. om. °न°

अभेदाध्यवसायार्थं समुदायार्थस्य विवक्षितत्वेऽपि कुसुमवत्त्वरूपावयव शक्तिप्रतिपाद्यार्थे अनन्वय एव। योगरूढि लक्षयति–

**योगरूढिस्तु शक्तिभ्यामेकार्थप्रतिपादनम् ।**
**मृगाक्षी पद्मनाभस्य मन्दिरे वसतान्मम ॥१७॥**

शक्तिभ्यामवयवशक्ति समुदायशक्तिभ्याम्। अत्र शक्तिद्वयेन भिन्नभिन्नार्थ-प्रतिपादके अश्वकर्णादिपदे अतिव्याप्तिवारणाय एकपदम्। यथा 'मृगाक्षी' पदं 'पद्मनाभ' पदं च। इयमपि अवयवशक्त्यैव अवयवगतवृत्त्यन्तरेणापि समुदायार्थप्रतिपादनेऽपि भवति। तथा अवयवार्थान्तरस्य विवक्षितत्वेऽपि तस्य समुदायार्थानन्वयेऽपि भवति।

**तेजःस्फूर्तिरसावनन्तमणिभिः स्थैर्यं च हेमाद्रिणा**
**कीर्तिस्ते शशिकोटिभिश्च तनुते नित्यं तुलारोहणम् ।**
**वीरश्रीचिनचेव्वयाच्युतधराधौरेय भाग्योन्नते**
**चित्रं किं रघुनाथभूप भवतो हेम्ना तुलारोहणम् ॥**

अत्र 'अनन्तमणिभिः' इति अनन्तस्याकाशस्य मणय इव मणय इत्यवयवगतगौण्या समुदायशक्त्या चा दित्याः प्रतीयन्ते। तथादित्या एव अनेकमणयो रत्नानीति अभेदाध्यवसा-यार्थमंवयवार्थान्तरस्य विवक्षितत्वेऽपि तस्य समुदायार्थानन्वयश्च। तथा 'हेमाद्रिणा' इति हेममयो अद्रिरिति अवयवशक्त्या समुदायशक्त्या च मेरुप्रतीतौ हेमाद्रिरेवाद्रिसदृशं 'हेम' इत्यभेदाध्यवसायार्थमवयवार्थान्तरस्य[1] विवक्षितत्वे अपि तस्य समुदायार्थे मेरावन्वयः। न च हेमाद्र्यादिपदानां केवलं मेरुप्रमुखेषु रूढिरेवास्त्विवति वाच्यम्। तत्रैव यौगिकार्थप्रतिभान-स्यापि सर्वसाक्षिकत्वात्। न च तस्य[2] अवयवशक्तिमात्रेण मेर्वाद्यर्थप्रतिपादकत्वोपपत्तौ समुदाायशक्तिः मास्त्विवति वाच्यम्। 'मेरुः सुमेरुर्हेमाद्रिः' इत्याद्यभिधानकोशपरंपरयां विशिष्य तत्र समुदायशक्तेरपि सिद्धेः। अन्यथा राजभिः[3] क्रीडार्थं निर्मितहोममयाद्राविव विशिष्यानुशासनानपेक्षणेन तद्वैयर्थ्यापत्तेः इत्याहुः। क्वचित् योगरूढस्यापि पदस्यावय-वार्थानन्वयात् समुदायार्थमात्रे विश्रान्तिः। यथा स्थलकमले नीरजादिपदम् क्वचित्तु समुदायार्थानन्वयादवयवार्थमात्रे विश्रान्तिः। यथा 'नीलनीरज'मित्यादौ। अत्र उभयत्रापि लक्षणैवेति न्यायविदः। तथा हि–नीरजपदे हि नीरजनिकर्तृत्वमवयवशक्त्या, समुदायशक्त्या तु पद्मत्वं प्रतीयते। ततश्च नीरजपदरूपैकार्थपदोपादानरूपयान्तरङ्गप्रत्यासत्त्या स्थलकमलेन्दीवरान्वयात् प्रागेव नीरजनिकर्तृत्वसमानाधिकरणत्वेन उपस्थितस्य पद्मत्वस्य पद्मत्वसमानाधिकरणत्वेन उपस्थितस्य नीरजनिकर्तृत्वस्य च स्थलकमलेन्दीवरान्वये

---

१. M. add °अपि before विवक्षितत्वे°

२. Pr. तर्हि for तस्य

३. M. om. °भिः

नाकाङ्क्षा न वा विशिष्टस्य तदन्वयविषयिणी शाब्दधीरिति तदन्वयार्थं स्वतन्त्रपद्मत्व-नीरजनिकर्तृत्वोपस्थिते नीरजपदस्य लक्षणैवाभ्युपगन्तव्या। न तु रूढिर्योगो वा न च प्रथमं योगरूढिभ्यां स्वार्थोपनयेऽपि पश्चात् स्थलकमलेन्दीवरान्वयार्थं विरुद्धवृत्तिमूकीभावे सति तदितरवृत्त्यैव स्वतन्त्रपद्मत्वनीरजनिकर्तृत्वोपपपस्थितेः आकाङ्क्षादिसद्भावात् न तदर्थमिह लक्षणेति वाच्यम्। केवलरूढ्यादिना[1] स्वतन्त्रपद्मत्वाद्युपस्थित्यर्थ शब्दस्य पुनरनुसन्धान-कल्पनागौरवापत्तेः। लक्षणापक्षे[2] तु नायं दोषो योगरूढ्या नीरजनिकर्तृत्वसंवलितपद्मत्व-रूपविशिष्टोस्थितेः विशेषणविशेष्यान्तरलक्षणा द्वारत्वेन द्वारे सति द्वारिणः पुनरनपेक्षणात् न शक्योपस्थितिः लक्षणायां लक्ष्योपस्थिताविव शक्योपस्थित्यन्तरेऽपि द्वारं येन पुनरनुसन्धानं न कल्पेते[3]त्याहुः।

अन्ये तु विशेषणस्य स्वतन्त्रोपस्थित्यर्थं लक्षणायामपि विशेष्यस्य स्वतन्त्रोपस्थितये न लक्षणा। अत एव 'नित्योघटः' इत्यत्र नित्यवस्य विशेषणान्वयितया विशेषणस्य घटत्वस्य[4] स्वतन्त्रोपस्थित्यर्थं लक्षणा, 'नष्टो घट' इत्यत्र तु न लक्षणेति नैयायिकैरेव स्वीकृतम्, ततश्च 'नीलनीरज' मित्यत्र लक्षणायामपि स्थलकमले नीरजमित्यत्र न[5] लक्षणेत्याहुः।

अपरे तु यथा[6]—'राजा हरति लोकानां हृदयं मृदुभिः करैः' इत्यादौ प्रकरणादिना प्रकृतचन्द्रादावेवाभिधायां नियमितायां भूपाद्यर्थान्तरविषया तु अभिधा मूकी भवति। तथा प्रकरणादिना स्थलकमलेऽवयवाशक्तेः इन्दीवरे समुदायशक्तेश्च तिरोभावात् प्रथममेव पद्मत्वं नीरजनिकर्तृत्वं चोपस्थितं भवतीति न क्वापि लक्षणेत्याहु।

एवं त्रिविधामप्यभिधां निरूप्य व्यापारप्रसङ्गात् लक्षणाश्रयत्वेन लक्षकं निरूपयितुं वा लक्षणां लक्षयति[7]—

**तात्पर्यविषयीभूतार्थान्वयानुपपत्तितः ।**
**शक्यभिन्नार्थधीहेतुर्व्यापारो लक्षणोच्यते ॥१८॥**

अभिधायामतिव्याप्तिवारणाय शक्यभिन्नेति व्यञ्जनायामतिव्याप्तिवारणाय अन्वयानुपपत्तित इति। तत्र तु न मुख्यार्थान्वयानुपपत्तिः। तावत्युक्ते 'छत्रिणो गच्छन्ति' इत्यत्र अव्याप्तिः। तत्र मुख्यार्नानां छत्रिणामपि गमनान्वययोग्यत्वेन तदनुपपत्त्यभावात्। अत्र उक्तं तात्पर्यविषयीभूतेति। तत्र हि छत्र्यछत्रिसमुदायकर्तृकमेव गमनं तात्पर्यविषयीभूतम्।

---

१. Pr. केवलं रूढ्यादिन for केवलरूढ्यादिना
२. Pr. लक्षणापेक्षे for लक्षणापक्षे
३. Pr. कल्प्यते° for कल्पेते°
४. Pr. om. घटत्वस्य
५. Pr. स for न
६. M. om. यथा
७. M. निरूपयति for लक्षयति

तेन च[1] छत्रिमात्रस्य नान्वयायोग्यतेति नाव्याप्तिः। तात्पर्यानुपपत्तिमात्रं च व्यञ्जनायामस्ति, तात्पर्यनिर्वाहायैव सर्वत्र वृत्तिकल्पनात्। अतः तात्पर्यविषयार्थान्वयानुपपत्तिपर्यन्तमुक्तम्। न च तादृशश्च व्यापारः शक्तिभिन्नः शक्यसंबन्ध एव स च लक्ष्यभूततीरादिनिष्ठ इति कथमस्य शब्दव्यापारता इति वाच्यम्। अस्यार्थनिष्ठस्यापि शब्दे आरोपात्। तदुक्तं काव्यप्रकाशिकायाम् 'लक्षणारोपता क्रियेति' प्राञ्चः। शक्यघटितपरंपरासंबन्धेन सोऽपि शब्दनिष्ठ एवेति नव्याः। तात्पर्यविषयार्थान्वयानुपपत्त्या शक्यसंबन्धादशक्यार्थस्मृतिः लक्षणेति प्राञ्चः। तदयुक्तम् अर्थप्रतिपत्त्यर्थं हि वृत्तिकल्पनम्। न तु सैव वृत्तिरिति युक्तं कल्पयितुमिति ध्येयम्।

**एवं लक्षणां लक्षयित्वा तां विभजते—**
**द्विविधा सा रूढिपूर्वा फलपूर्वेति भेदतः ।**

सा लक्षणा रूढिलक्षण, फललक्षण चेति सामान्यतो द्विविधा। प्रयोगबाहुल्येन रूढितुल्यतया प्रसिद्धा रूढिलक्षणा। यथा 'कुशलोऽयं रथकर्मणि तक्षेति'। कुशलशब्दो हि कुशान्[2] लात्यादत्त इति अवयवशक्त्या कुशादानकर्तरि वर्तते। समुदायशक्त्या समर्थ इति नीरजपदवत् योगरूढः। इयांस्तु विशेषः नीरजपदस्य नीलनीरजमिति योगार्थेऽपि प्रयोगबाहुल्यमस्ति। कुशलशब्दस्य तु मण्डपशब्दस्य[3] मण्डपानकर्तृत्वरूपयोगार्थ इव कुशादानकर्तृत्वरूपयोगार्थेन प्रयोगबाहुल्यमिति। ततश्च रथकर्मणि कुशादानकर्तृत्वरूप-योगार्थासंभवात् कुशलशब्दः सामर्थ्यमात्रे विवेचकत्वरूपशक्यसंबन्धसत्त्वेन [4]तल्लक्षणया वर्तते। यथा स्थलकमले नीरज[5]शब्दोऽवयवार्थासंभ[6]वात् लक्षणया समुदायार्थपुरस्कारेण वर्तते। न च कुशलशब्दस्य लाक्षणिकत्वे शक्यसंबन्धज्ञानाय कुशादानकर्तृत्वविशिष्ट-सामर्थ्यरूपशक्यार्थोऽपि प्रतीय[7]त इति वाच्यम्। व्युत्पन्नस्य इष्टत्वात् अव्युत्पन्नस्य नीरजादिपदसाधारण्यात्। इयं च लक्षणा प्रयोगबाहुल्यात् रूढिवदिति प्रसिद्धेति रूढिलक्षणा। विवक्षितार्थान्तरद्योतनफला तु फललक्षणा। यथा गङ्गयां घोषः' इत्यत्र गङ्गापदं मुख्यार्थस्य प्रवाहस्य घोषान्वयायोग्यत्वात् सामीप्यादिरूपशक्यसंबन्धस्य च सत्त्वात् तीरे लक्षणया वर्तते। स्वायत्ते शब्दप्रयोगे सति अपार्थकावाचकपदप्रयोगानौचित्यात् गङ्गागतपावनत्वादि धर्माणां तीरनिष्ठतया प्रतीतिः प्रयोजनमिति फललक्षणैषा।

---

१. M. om. च
२. M. कुशं for कुशान्
३. M. om. मण्डपशब्दस्य
४. M. om. तत्°
५. M. add °आदि before शब्दो°
६. M. °अनन्वयात् for °संभवात्
७. M. प्रतीयेत for प्रतीयत

रूढिलक्षणां विभजते—

**स्याद्रूढिलक्षणा द्वेधा गौणी शुद्धेति भेदतः ॥१९॥**

स्फुटम्।

**शक्यसादृश्यसंबन्धरूपा गौणी तु सा मता ।**
**लावण्यनिधिरेष्वैषा[1] प्रवीणा युववञ्चने ॥२०॥**

शक्यसादृश्यरूपसंबन्धात्मिका सा रूढा गौणी मता। ननु सादृश्यं न संबन्धः। विशिष्टधीनियामकस्यैव संबन्धत्वात्। न हि संयोगे सति 'दण्डी देवदत्त' इतिवत् समवाये सति 'रूपी घट' इतिवद्वा सादृश्ये सति 'सिंहवान् देवदत्त' इति विशिष्टधीरस्ति। तस्मात् गौणी[2] लक्षणातः भिन्नैव वाच्येति[3] चेन्न। व्यतिरेकलक्षणास्थले विशिष्टबुद्ध्यनियामकस्यापि। शक्यसंबन्धत्वाभ्युपगमेन सादृश्यस्यापि शक्यसंबन्धत्वाविरोधादित्याहुः। यथा लावण्यपदस्य लवणत्ववाचिनां हृदयंगमत्वादि सादृश्यात् सुषमाविशेषे वृत्तिः। यथा च[4] प्रकृष्टवीणावत्त्व-विशिष्टसमर्थवाचकस्य प्रवीणशब्दस्य विवेचकत्वादिसादृश्येन सामर्थ्यमात्रे[5] वृत्तिः इति इह निरूढा[6] गौणीति। शुद्धा सा शक्य[7]सादृश्यभिन्नसंबन्धरूपिणी 'पुष्पं धनुर्ज्याद्विरेफ[8]स्मर' तदपि दिग्जयी सादृश्यभिन्नशक्यसंबन्धरूपा रूढा शुद्धा। यथा द्विरेफशब्दस्य द्वौ रेफौ यस्येति व्युत्पत्त्या भ्रमरशब्दः शक्यः[9]। तद्वाच्ये[10] मधुव्रते रूढिलक्षणा शुद्धा। सादृश्यान्यभ्रमरशब्दघटितशक्यसंबन्धरूपत्वात्। न च द्विरेफपदस्य भ्रमरशब्दे शक्तिः नेति कथमत्र शक्यसम्बन्धः इति वाच्यम्। द्विरेफशब्दस्यापि भ्रमरशब्दे योगरूढ्यङ्गीकारात्। अथवा वृत्त्यन्तरं विना शक्तिप्रयुक्तोपस्थितिविषयत्वेन वाक्यार्थवदस्यापि शक्यत्वोपपत्तेः इत्याहुः एवं त्वगादिशब्दानाम् त्वगिन्द्रियादिषु शुद्धा रूढिलक्षणेति ध्येयम्।

फललक्षणां विभजते—

**जहती चाप्य[11]जहती जहत्पूर्वाजहत्यपि ।**
**सारोपा साध्यवसतिरित्यन्या पञ्चधा मता ॥२१॥**

---

१. Pr. °निधिरेषैव for °निधिरेष्वैषा
२. Pr. गौडी for गौणी
३. M. om. वाच्य
४. M. वा for च
५. Pr. समर्थमात्रे for सामर्थ्यमात्रे
६. Pr. रूढ़ा for निरूढा
७. M. om. शक्य°
८. Pr. °द्विरेफाः स्मरः for °द्विरेफस्मर
९. M. तद्वाच्यः for शक्यः
१०. M. Do for तद्वाच्ये
११. M. वाप्यज° for चाप्यज°

अन्या फललक्षणा जहल्लक्षणा, अजहल्लक्षणा, जहदजहल्लक्षणा, सारोपालक्षणा, साध्यवसानलक्षणा चेति पञ्चधा[१]। तत्र जहल्लक्षणां लक्षयति—

**स्याज्जहल्लक्षणा यत्र स्वार्थं त्यक्त्वान्यवृत्तिता ।**
**साक्षी मुकुन्दकेलीनां यमुनायामयं व्रजः ॥२२॥**

यत्र स्वार्थत्यागेन परार्थवृत्तिता, तत्र जहल्लक्षणा। यथा 'यमुनायाम्'' इत्यत्र वाच्यस्य प्रवाहस्य घोषान्वयायोग्यत्वात् यमुनाशब्दः स्वार्थं परित्यज्य स्वार्थसंबन्धिनि तीरे वर्तत इति तत्र जहल्लक्षणा।

इयमेव वाच्यमर्थमन्वयायोग्यत्वेनोपलक्षणीकृत्य अन्वययोग्यमर्थं लक्षयतीति लक्षणलक्षणेत्युच्यते।

परस्य तीरादेः घोषाद्यनधिकरणता सिद्धौ[२] तीराद्यर्थान्तरप्रतीतिव्यापारत्वमात्रेण स्वार्थप्रतीतिजनकत्वं यत्र तत्र लक्षणलक्षणेति अन्ये।

ननु[३] स्वार्थत्यागेन परार्थवृत्तिता तत्र यत्र जहल्लक्षणेत्ययुक्तम्। तथा हि 'गङ्गायां घोषः' इत्यादौ[४] गङ्गापदेन तीरत्वप्रकारिका न तीरप्रतीतिः, किं तु स्रोतस्त्वप्रकारिकैव। अन्यथा तीरस्य प्रवाहभेदा[५]प्रतीतेः प्रतिपिपादयिषितप्रवाहगतपावनत्वादिधर्मप्रतीतिः तीरे न स्यात्। अत एव तटादीनां गङ्गादिशब्दैः प्रतिपादने तत्त्वप्रतिपत्तौ हि प्रतिपिपादयिषितप्रयोजन-संप्रत्यय इति काव्यप्रकाशिकायामुक्तम्।

ननु अनुपपन्नमिदं न हि येन रूपेणानन्ववयनिश्चयः तेन रूपेण उपस्थितेः अन्वयधीर्भवति, अयोग्यत्वात्। अतः कथं स्रोतस्त्वेनोपस्थिते घोषवासान्वयः। किं च एवं स्वार्थादन्येन रूपेण ज्ञाने भवति लक्षणेत्यभियुक्तोक्ति विरोधश्च। स्रोतस्त्वेनैवात्र प्रतीतेः। अपि च मुखादौ चन्द्रोऽ[६]यमित्यादि साध्यवसानतो भेदः न स्यात्। आरोप्याभेदप्रतीतेः उभयत्राविशेषादिति चेन्न। न हि समानप्रकारकज्ञानमात्रविरोधि। किं तु समानविषयकत्वविशेषितमन्यथा घटः क्वचिदस्ति, क्वचिन्नास्तीत्यपि धीः न स्यात्। न चात्र सामनविषयत्वमस्ति। स्रोतस्त्वेन तीरस्यैव उपस्थितेः विषयभेदात्। अतः ना[७]योग्यताज्ञानम्। न चासंसर्गग्रहे स्रोतस्त्वग्रह एव तीरे कथमिति वाच्यम्। प्रत्यक्षवत्सारोपलणायामपि असंसर्गग्रहस्य भेदधीप्रतिबन्धकत्वाकल्पनात्। अत एव 'चन्द्र एवेदं मुख' मित्यादि सरोपलक्षणादौ अभेदधीः सर्वानुभवसिद्धा। अन्यथा लक्षणैव न स्यात्।

---

१. M. पञ्चविधा for पञ्चधा
२. M. सिद्धये for सिद्धौ
३. M. न तु for ननु
४. M. इत्यादौ for इत्यत्र
५. Pr. प्रवाहभेद for प्रवाहभेदा
६. M. चन्द्रोदयमि° for चन्द्रोऽयमि°
७. न योग्यता° for नायोग्यता°

प्रकारान्तरेण प्रतिपिपादयिषितप्रयोजनालाभात्। सर्वतो बलवतीहि अन्यथानुपपत्तिरिति न्यायात्। नापि स्वार्थादन्येनेत्यभियुक्तविरोधेऽपि तीरत्वेनैव ज्ञाते शक्यसंबन्धग्रहानन्तरं स्रोतस्त्वेन भावाभ्युपगमात् तीरत्वस्य नियतोपस्थितस्याप्यभावे स्रोतस्त्वस्य च भावे लक्षणास्वाभा- व्यमेव बीजम्। अन्यथा प्रयोजनालाभात् साध्यवसानाया भेदः तत्रारोपविषयनिगरणादेव। न चात्रापि आरोपविषयतीरादिवाचकपदानुपादानात् तन्निगरणमपि तुल्यमिति वाच्यम्। न ह्यारोपविषयवाचकपदानुपादानमात्रं विषयनिगरणम्। किं तु यत्र विषये आरोपविषय-वाचकपदोपादानेऽस्य भेदप्रत्ययः तत्र विषये आरोप्यमात्रवाचकपदोपादाने निगरणम्। तथा च नात्र विषयनिगरणमिति सहृदयैः विभावनीयम्।

ननु स्रोतस्त्वेन तीरस्य पूर्वमननुभवात् न गङ्गापदेन स्रोस्त्वेन तीरोपस्थितिः संभवति। 'चन्द्र एवेदं मुखम्' इत्यत्र तु वाक्यार्थत्वेनैव अभेदानुभव इति न दोष इति चेन्न।

**'पश्य नीलोत्पलद्वन्द्वान्निःसरन्ति शिताः शराः'**

इत्यादि साध्यवसानाया नीलोत्पलशरादिपदैः नेत्रकटाक्षादीनां इन्दीवरत्व साधकत्वादि प्रकारकस्मृतेः सर्वानुभवसिद्धत्वेन लक्षणास्वाभाव्यस्यैव तथाविधस्मृतावपि नियामकत्वेन अवश्यकल्प्यत्वात्। अतः अत्र स्रोतस्त्वेनैव तीरादिप्रतीतेः कथं स्वार्थत्यागः इति चेत्, सत्यम्। स्वार्थपदेन स्वशक्यतावच्छिन्नस्य विवक्षितत्वात् अथवा गङ्गादिपदात् तीरत्वेनैव तीरस्मृतिः। न चैवं प्रयोजनालाभात् लक्षणैव न स्यात् इत्युक्तमिति वाच्यम्। यथैव त्वन्मते लक्षणास्वाभाव्यात् तीरस्य स्रोतस्त्वेनोपस्थितिः, तादृशोपस्थित्या च पावनत्वादि प्रतीतिः इति कल्प्यते तथा अस्माभिरपि लक्षणा स्वाभाव्यादेव गङ्गापदप्रतिपाद्य- ज्ञानादेव प्रयोजनलाभ इत्यास्थीयते विशेषाभावात्। अत एव 'छत्रिणो गच्छन्ती'-त्यजहत्स्वार्थायां छत्र्यच्छत्रिसमुदायस्य छत्रिपदात् साधारणेनैकसार्थगन्तृत्वेन प्रतीतिः। नतु छत्रित्वेनेति न्यायविदः। एवं च साध्यवसानतोऽस्या भेदः स्फुट एवाभेदाविषयत्वादिति दिक्।

इयं च जहललक्षणा—

**'एकःकृती शकुन्तेषु योऽन्यं शक्रान्न याचते'**

इत्याद्यप्रस्तुतप्रशंसादेः अलङ्कारस्य बीजम्। एवं—

**'उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम्'**

इत्यादि विपरीतलक्षणापि जहत्येव।

**'कः स्वर्धुनि विवेकस्ते नयसे पापिनो दिवम्'**

इत्यादि व्याजस्तुतेर्बीजम्।

अथाजहल्लक्षणामाह—

**स्वसिद्धये पराक्षेपे त्वजहल्लक्षणोच्यते ।**
**वीक्ष्यानुद्रवतः कुन्तान् द्रवन्ति छत्रिणो रणात् ॥२३॥**

यत्र स्ववाच्यस्यान्वयसिद्ध्यर्थं स्ववाच्यसंबन्धी लक्ष्यते तत्राजहल्लक्षणा। यथानुद्रवतः 'कुन्तान्' इत्यत्र कुन्तपदं स्ववाच्यस्य कुन्तस्यानुद्रवणक्रियान्वयार्थं कुन्तवत्पुरुषेषु[१] वर्तते। अत्र कुन्तस्यापि पुरुषसाहित्येन क्रियान्वयादजहल्लक्षणा। अत्र च कुन्तबाहुल्यप्रतीतिः। तथा च हन्तृत्वं व्यज्यते। यथा वा 'छत्रिणो यान्ति'[२] इत्यत्र छत्र्यच्छत्रिसमुदायकर्तृकं गमनमेव तात्पर्यविषभीभूतम्। तत्र छत्रिमात्रस्य नान्वय इति स्ववाच्यछत्र्यन्वयसिद्ध्यर्थं छत्रिपदं छत्र्यच्छत्रिसमुदाये वर्तते। अत्रापि छत्रिणामपि अच्छत्रिसाहित्येनान्वयादजहल्लक्षणा।

छत्रिबाहुल्यप्रतीतिः फलम् इयमेव स्वार्थम् उपादायान्यत् लक्षयतीति उपादानलक्षणा इत्युच्यते। अत्रापि कुन्तच्छत्रिपदाभ्यां[३] कुन्तत्वेन छत्रित्वेन च लक्ष्यप्रतीतिः इत्येकं मतम्।

कुन्ता इत्यत्र कुन्त्यकुन्ति साधरणेन कुन्तसंयोगित्वेन तदुभयोरुपस्थितिः[४] छत्रिण इत्यत्रेकसार्थगन्तृत्वेन उभयोरुपस्थितिरिति[५] अपरं मतम् इति ध्येयम्। इयं च 'अयमैन्द्रीमुखं पश्य रक्तश्चुंबतिचन्द्रमाः'[६] इत्यादि समासोक्तिबीजम्।

केचित्तु 'गामालभत' इत्यादौ गवादिपदं स्ववाच्याया जातेः श्रुतिचोदितालम्बनाद्यन्वयसिद्धये स्ववाच्यजातिविशिष्टां व्यक्तिं लक्षयति, न त्वाभिधत्ते। 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषण' इति न्यायात्। ततश्च स्ववाच्यमुपादाय व्यक्तिलक्षणादुपादानलक्षणेत्याहुः। तदयुक्तम्। नेयं फललक्षणा अनादित्वेन प्रयोजनाकल्पनात्। न च तर्हि रूढिलक्षणास्त्विति वाच्यम्। न हि रूढिलक्षणायामुपादानलक्षणाख्यो भेदोऽस्ति। किं च यत्र निर्वचनानुपपत्तिरेव बाधः तत्र रूढिलक्षणा। कुशलादिपदे तथा दर्शनाच्च। न च गोशब्दस्य व्यक्तौ निर्वचनानुपपत्तिरस्ति। 'गच्छतीति गौः' इति निर्वचनस्य व्यक्तौ सत्त्वात्। किं बहुना? अनन्यलभ्य एव शब्दार्थः। व्यक्तिस्तु अविनाभावादनुमातुं शक्यत इति न तत्र लक्षणा युक्ता। न च व्यक्तेरनुमेयत्वे शाब्दबोधविषयत्वं न स्यादिति वाच्यम्। अर्थाध्याहारस्थलवददोषात्। न चैवमपि व्यक्तेः गोपदप्रकृत्यर्थत्वाभावेन[७] तत्र प्रत्ययार्थकर्मार्थानन्वयापत्तिः। अत एव 'गङ्गायां घोषः' इत्यत्रापि गङ्गापदशक्यस्य प्रवाहस्य स्वसंबन्धितीरोपस्थापकत्वसंभवेऽपि प्रत्ययार्थीभूताया[८] अर्थान्वयार्थमेव। तत्रापि लक्षणास्वीकार इति वाच्यम्। तत्र तथात्वेऽपि प्रकृते जातेः व्यक्त्यवच्छेदकतया लाभान्वययोग्यत्वात् जातावेव कर्मत्वान्वयसंभवेन व्यक्तौ लक्षणायाः अकल्प्यत्वात्।

---

१. M. कुन्तवत्सुपु° for कुन्तवत्पु°

२. M. द्रवन्ति for यान्ति

३. Pr. कुन्तछत्राभ्यां for कुन्तच्छत्रिपदाभ्यां

४. Pr. तदुभयोपस्थितिः for तदुभयोरुपस्थितिः

५. Pr. उभयोप° for उभ्योरुप°

६. M. नक्तं चु° for रक्तश्चु°

७. M. °प्रत्यय° for °प्रकृत्य°

८. Pr. प्रत्ययार्थभूताधारत्वान्वयार्थमेव for प्रत्ययार्थीभूतायार्थन्वयार्थमेव

अत एव 'क्रियाकारकयोः अविनाभावात् अन्यतरप्रतीतौ अन्यतरानुमितिसंभवात् 'क्रियताम्' इत्यत्र न कर्ता लक्ष्यते। तथा 'कुर्वि' त्यत्र यत्किंचित्कर्म 'प्रविशे'त्यत्र गृहं 'पिण्डीम्'[1] इत्यत्र भक्षयेति क्रिया च न लक्ष्यते।

ननु एवमपि 'पीनो देवदत्तः दिवा न भुङ्क्ते' इत्यत्र भोजनाभावसहितं पीनत्वम् अनुपद्यमानं रात्रिभोजनं लक्षयतु[2], रात्रिभोजनस्य पीनत्वेन सामानाधिकरण्यरूपसंबन्ध-सत्त्वात् रात्रि भोजनमात्रादेव अयं पीनः इति पुरुषवैशिष्ट्यप्रतीतिरूपफलसत्वात् च लक्षणासामग्र्यां अविकलत्वादिति चेन्न। 'पीनो देवदत्तः न भुङ्क्त' इति श्रुतः[3]शब्दः एवानुपपद्यमानो योग्यताघटकतया रात्रौ भुङ्क्त इत्यभिप्रायकशब्दं कल्पयति। यद्वा दिवा भोजनाभावेऽपि प्रतीतं पीनत्वम् अनुपपद्यमानं रात्रिभोजनं कल्पयतीति, तत्रापि अन्यथा सिद्धत्वात् रात्रिभोजनं लक्ष्यमित्याहुः। इयं च अजहल्लक्षणा जहल्लक्षणावत् शुद्धैव। सादृश्यमूलकत्वाभावात्। अस्यामपि लक्ष्यस्य वाच्यस्य च न भेदेन प्रतीतिः। प्रतिपिपादयिषितप्रयोजनालाभप्रसङ्गादित्यप्याहुः।

अथ जहदजहल्लक्षणां निरूपयति-

**स्वार्थैकदेशे वृत्तौ तु जहत्यजहती मता ।**
**पुष्पितं वनमालोक्य पथिकाः पुङ्खिता ययुः ॥२४॥**

यत्र समुदायवाचिनः शब्दय स्वार्थैकदेशे वृत्तिः तत्र जहदजहल्लक्षण यथा[4] 'पुष्पितं वनम्' इत्यत्र वनपदस्य स्वार्थैकदेशपरित्यागेन तदेकदेशे वृत्ति पुष्पित भूयस्त्वद्योतनम् फलम्।

सारोपामाह—

**सारोपा तत्र यत्रोक्ता विषयी विषयस्तथा ।**

यत्र विषयी आरोप्यमाणः चन्द्रादिः विषय आरोपविषयो मुखादिश्च मिथोऽनपह्नुत भेदौ सामानाधिकरण्येन निर्दिश्यते तत्र सारोपा।

सारोपां विभजते—

**सारोपा द्विविधा सेयं गौणी शुद्धेति भेदतः ॥२५॥**

स्फुटम्।

**सादृश्यात्मकसंबन्धारूपा सा गौण्युदीर्यते ।**
**शुद्धा तदन्यसंबन्धरूपा सा तु निगद्यते ॥**
**मुखेन्दुर्नयनानन्दस्तन्व्या विजयतेतराम् ॥२६॥**

---

१. M. पिण्ड for पिण्डीम्

२. M. लक्षयितुम् for लक्षयतु

३. Pr. श्रुतशब्द

४. Pr. om यथा

सादृश्यात्मकसंबन्धरूपा सारोपा गौणी सारोपा। यथा 'मुखेन्दुः' इत्यत्र विषयिविषयवाचकयोः इन्दुमुखपदयोः सामानाधिकरण्यनिर्देशात् सारोपा। इन्दुशब्दस्य मुखे[१] हृदयङ्गमत्वादि सादृश्येन वृत्तेः गौणी सारोपा। भेदः फलम्। नयनानन्दकारणे मुखेन्दौ सादृश्यान्येन हेतुहेतुमद्भावसंबन्धेन नयनानन्दपदस्य वृत्तेः शुद्धा सारोपा। ताद्रूप्यप्रतीतिः प्रयोजनम्।'नयनानन्द' इत्यत्र सरोपा एवं 'मुखं चन्द्र' इति व्यासेऽपि गौणी सारोपा। अत्रापि ताद्रूप्यप्रतीतिः तथा च अन्यवैलक्षण्येन कार्यकारित्वं च फलम्। यद्यप्यत्र 'गङ्गायां घोष' इत्यादाविव जहल्लक्षणैवेति न ततो भेदेन कथनं युक्तम्। तथापि विषयिविषयपदोपादान-कृतवैलक्षण्यात् ताद्रूप्यप्रतीतिरूपफलभेदाच्च भेदेन कथनम्।'मुखं चन्द्र' इत्यत्र चन्द्रशब्दः लक्षणया चन्द्रत्वसहचारिणं हृदयङ्गमत्वादि धर्मं प्रतिपादयति। ततश्च तन्निमित्रीकृत्य मुखमभिधत्ते। न तु मुखमपि लक्षयतीति केचिदयुक्तम्[२]। वाच्यवृत्तेरेव प्र[३]वृत्तिनिमित्तत्वात् चन्द्रत्वसहचारिधर्मस्य च वाच्यवृत्तित्वाभावात् तन्निमित्तीकृत्य चन्द्रशब्देन मुखमभिधातुं न युक्तम्। चन्द्रशब्दस्य च[४] मुखेऽपि शक्तिकल्पनं चायुक्तम्। तस्मात् चन्द्रत्वसहचारि-गुणाभेदेन मुखगतगुणा एव चन्द्रशब्देन लक्ष्यन्ते। तैश्च गुणैर्मुखमाक्षिप्य तेन तु मुखमपि लक्ष्यत इत्यपरे। मुखस्य चन्द्रपदाप्रतिपाद्यत्वे शाब्दसामानाधिकरण्यं न स्यात्। अतः चन्द्रशब्दः स्वार्थभूतचन्द्रमुखोभयानुभूतान् धर्मान् लक्षयिता तन्मुखेन मुखमपि लक्षणया प्रतिपादयतीत्यन्ये। तदुक्तं—

**अभिधेयाविनाभूता प्रतीतिर्लक्षणोच्यते ।**
**लक्ष्यमाणगुणैर्योगाद्वृत्ते[६]रिष्टा तु गौणता ॥**

अत्राभिधेयशब्दः वृत्यन्तरं विना शक्तिप्रयुक्तोपस्थितिविषयपरः। तेन यत्र यौगिकस्यैव लक्षकत्वं न तत्राव्याप्तिः। अविनाभावश्च संबन्धमात्रम्। न तु नियतसंबन्धः। तथा सति 'मञ्चाः क्रोशन्ति' इत्यत्र न लक्षणा स्यात्। न च क्रोशनकाले मञ्चपुरुषयोः अपि आविनाभावोऽस्यैव वाच्यम्। अविनाभावेनैव तदनुमितिसंभवेन लक्षणावैयर्थ्यात्। किं च अविनाभावस्यैव लक्षणाबीजत्वे 'घटमुच्चारय' इत्यत्र घटपदस्य स्वपरत्वं लक्षणया इत्यविवादम्। तत्र शब्दस्यार्थेन समं दैशिकस्य कालिकस्य वा अविनाभावस्यासंभवात् लक्षणा न स्यात्। प्रतीतिरिति प्राचीनमते।

नव्यमते तु प्रतीयते अनेनेति प्रतीतिपदं करणव्युत्पन्नमिति ध्येयम्। लक्ष्यमाणगुणयोगात्तु वृत्तिः गौणीत्यत्र गौण्यपि लक्षणाभेद इति तात्पर्यमिति ध्ययेम्। अत्र

---

१. Pr. om. मुखे
२. Pr. om. °म्°
३. Pr. om. च
४. M. om. च
५. Pr. om. चन्द्र°
६. M. °भूतै° for °वृत्तै°

च शुद्ध सारोपासादृश्यान्यसंबन्धस्यानेकविधत्वादनेकधा भिद्यते। तत्र नयनानन्दो मुखेन्दुरिति कार्यकारणभावेन[१] शुद्धसारोपोदाहृता। तादर्थ्यसंबन्धेन यथा 'इन्द्रार्थासु स्थूणास्विन्द्र' इति। अत्र ताद्रूप्यप्रतीतिः। तथा च इष्टार्थदायित्वधीश्च प्रयोजनम्। स्वस्वामिभावसंबन्धेन[२] यथा— राजकीयपुरुषे 'राजायं पुरुष इति अत्रापि ताद्रूप्यप्रतीतिः। तथा चालङ्घनीयशासनत्वधीश्च फलम्। तत्कर्मकारित्वसंबन्धेन यथा क्षत्तायं[३] ब्राह्मण इति। अत्रापि ताद्रूप्यप्रतीतिः। तथा च सामर्थ्यातिशयधीश्च प्रयोजनम्। अवयवान्वयसंबन्धेन यथा हस्तावयवेऽग्रमात्रे अग्रहस्त[४] इति। अत्रापि ताद्रूप्यप्रतीतिः तथा च कौशलातिशयधीश्च प्रयोजनम्। अत्र च 'समुदायवाचिनो[५] हस्तशब्दस्य स्वार्थैकदेशवृत्तितया[६] जहदजहल्लक्षणात्वेऽपि फलादिभेदात् भेदेन कथनमिति ध्येयम्।

अत्र वृत्तिवार्तिककृतः—यथा हि 'गङ्गायां घोषः' इत्यत्र गङ्गापदं स्वशक्यसबन्धिनि तीरे प्रवर्तमानं तीरत्वप्रकारिकामेव प्रतीतिं जनयति तथा 'मुखेन्दुः' इत्यत्रापि इन्दुपदं मुखेन्दूभयानुगतं कान्तिमत्त्वादिसाधारणधर्मं लक्षयित्वा तन्मुखेन मुखे प्रवर्तमानं मुखत्वप्रकारिकामेव धियं जनयत्याहोस्विदुभयसाधारणकान्तिमत्त्वप्रकारिकां वा, नाद्यः। तथा सति मुखपदेन पौनरुक्त्याःयापत्तेः। न द्वितीयः। तथाहि 'मुखेन्दुः' इत्यनेन कान्तिमन्मुखमिति प्रतीतिः स्यात्। तथा च कान्तिमान्मुखचन्द्र इति न स्यात्। चन्द्रपदस्य कान्तित्पदेन पौनरुक्त्यात्। न च चन्द्रसादृश्यमात्रं लक्षयित्वा तद्वति मुखे प्रवर्तते। ततश्च 'चन्द्रसदृशं मुखमिति' मुखेन्दुपदेन प्रतीतिर्भवति। चन्द्रसदृशो मुखचन्द्र इति तु न प्रयोग इति वाच्यम्। तथा सति सादृश्यस्यापि शब्दोपात्ततयोपमात्वापत्त्या तत्र रूपकव्यवहारविरोधात्। न हि सदृश्यस्य वाच्यत्व एवोपमा। 'चन्द्रसुहृन्मुखम्' इत्यादौ सुहृदादिपदेन तल्लक्षणायामपि उपमानप्रतिपत्तेः। अपि च 'पदाम्बुजम्' इत्यत्र 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इत्यम्बुजमिव पादमिति पूर्वपदार्थप्राधान्येन व्याघ्रादिसमासेन उपमायाः मयूरव्यसकादिसमासेन उत्तरपदार्थप्राधान्येन पाद एवाम्बुजमिति रूपकस्य च संभवेन, सर्वत्रानवधारणे प्राप्ते,— 'मञ्जुशिञ्जूनमञ्जीरं[७] पातु गौर्याः पदाम्बुजमि'ति यत्र पादे संभवन्नूपुरादिकं निबद्ध्यते, तत्र पूर्वपदार्थप्राधान्येन उपमा। यत्र पुनः 'उत्तंसितं विरिञ्चाद्यै' रिति पद्मसाध्यमुत्तंसनादिकं निबद्धयते, तत्र उत्तरपदार्थप्राधान्येन रूपकमित्यालङ्कारिकव्यवस्था भज्येत। 'पादाम्बुजम्'[८]

१. M. °भेदेन for °भावेन
२. M. om. °भाव°
३. M. तक्षायं for क्षत्तायं
४. M. हस्तावयावाग्रमात्रे for हस्तावयवेऽग्रमात्रे
५. Pr. °वादिनो for °वाचिनो
६. Pr. स्यादेकदेश° for स्वार्थैकदेश°
७. M. °शिञ्जानं for °शिञ्जूनं
८. M. om. पदाम्बुजम् to उत्तरपदार्थप्राधान्यव्यवस्थापकाभावेन

इति अञ्जनसादृश्यमात्रस्य प्रतीतौ तस्योत्तंसनानुगुणत्वाभावेन 'उत्तसितं विरिञ्चाद्यैः इत्यत्रापि उत्तरपदार्थप्राधान्यव्यवस्थापकाभावेन रूपकनिर्णायकाभावात्। किं च 'विद्वन्मानसहंसस्त्वं विजयस्व विशां पते' इत्यत्र श्लिष्टपरंपरितरूपके हंसपदस्य राजनि प्रसिद्धसादृश्याभावात् लक्षणा न स्यात्।

न च 'विदुषां मानसं हृदयमेव मानसाख्यं सर' इति अभेदाध्यवसानलभ्यमानसवासित्वरूपसाधारणधर्मनिबन्धनं सादृश्यं, तत्रा[१]स्तीति वाच्यम्। तत्र सादृश्यलंभकस्य श्लेषस्य रूपकोत्थाप्यतया लक्षणादशायां तस्य बुद्धिपथानारोहात्। न च श्लेषस्यैव प्राथम्यं किं न स्यादिति वाच्यम्। रूपकं विना कवेः अर्थद्वयविवक्षायाम् इह गमकाभावेन श्लेषानिवृत्तेः अभिधायाः प्रकरणनियम्यत्वेन रूपकात् प्रागप्राकरणिकस्य सरसो मानसपदेनानुपस्थित्यवश्यंभावाच्च। किं बहुना ? 'मुखं चन्द्रो राजहंस' इत्यादौ सर्वत्र लक्षणैव नाङ्गीकर्तव्या। मुखादिगतचन्द्र[२]ताद्रूप्यस्य सामानाधिकरण्यबलेन वाक्यार्थविधयैव प्रतीत्युपपत्त्या लक्षणाफलस्यान्यथापि सिद्धेः लक्षणावैयर्थ्यात् इत्याहुः। तच्चिन्त्यं, चन्द्रादिपदं सादृश्यसामान्यमेव पुरस्कृत्य मुखादौ प्रवर्तते। न चैवं सादृश्यस्यापि प्रतिपाद्यत्वे उपमा स्यात् इत्युक्तमिति वाच्यम्। उपमानवाचकपदादन्येन पदेन सादृश्यप्रतिपादन एव उपमाङ्गीकारात्। 'पद्माक्षी' इत्यादि लुप्तोपमायामपि यथा 'दधि पश्ये'त्यत्र लुप्तायां विभक्तेरेव कर्मत्वप्रत्यायकता तथा समासशास्त्रवशेन लुप्तस्यैवादेरेव सादृश्यप्रत्यायकत्वमिति नोपमावचकपद्मादिपदात् सादृश्यप्रतीतिः न च यत्किंचित् वैषम्यमात्रेणालंका[३]रांतरत्वोक्तिरयुक्तेति वाच्यम्। प्रकृताप्रकृतयोरेक[४] धर्मान्वये दीपकम्। प्रकृतयोरेव तदन्वये तुल्ययोगिता इत्यङ्गीकारेण यत्किंचित् वैषम्यमात्रेणापि अलङ्कारान्तरत्वाविरोधात्।

'चन्द्र इव मुखं मुखमिव चन्द्र' इत्यत्र सदृशान्तरव्यवच्छेदरूपफलभेदानुरोधेन उपमाप्रतिपत्तिद्वयसंसृष्ट्यतिरेकेण उपमेयोपमा पृथगङ्गीक्रियते। तथात्रापि मुख्यप्रयोगलभ्येऽर्थे लाक्षणिकप्रयोगवैयर्थ्य परिहाराय सादृश्यलक्षणया ताद्रूप्यप्रतिपत्तिरूपफलभेदस्या[५]सत्त्वादपि न अलंकारान्तरत्वविरोधः। य[६]दप्युक्तमेवं सति 'पदाम्बुजम्' इत्यत्र उत्तंसनानुरोधेन रूपकव्यवस्था भज्येतेति। तदपि न। तत्रापि सादृश्यलक्षणया ता[७]द्रूप्यप्रतीतोत्तंसनरूपकार्यबलेन रूपकव्यवस्थोपपत्तेः। य[८]दप्युक्तं 'विद्वन्मानसहंसस्त्वम्' इत्यत्र प्रसिद्धसादृश्याभावात्

---

१. M. add अपि before अस्तीति

२. M. adds आदि (चन्द्रादि) before °ताद्रूप्यस्य

३. Pr. °आलंकारत्वोक्ति for °आलंकारांतरत्वोक्ति°

४. Pr. °एव for °एक

५. M. om. °स्या°

६. M. यद्यप्युक्त° for यदप्युक्त°

७. Pr. om. ताद्रूप्य°

८. M. तदम्युक्तम् for यदम्युक्तम्

लक्षणया सहृदयस्य प्रथमं सादृश्यप्रतीतिः न स्यादिति। तदपि न युक्तम्। न हि प्रसिद्धसादृश्यमत्र लक्ष्यमित्युक्तम्। किं तु सादृश्यमात्रम्। ततश्च तत्रापि सामानाधिकरण्य-बलात् वक्तृराप्तत्वनिश्चयवान् सहृदयः सादृश्यविवक्षयैव राजहंसपदं[1] प्रयुक्तमिति निश्चिनोति प्रथमं। पश्चात् किं तत् सादृश्यमिति गवेषमाणः श्लेशभित्तिकाभेदाध्यवसायलभ्यमानस-वासित्वनिबन्धनं तत्सादृश्यमिति निश्चिनोतीति किमनुपपन्नम्? यदप्युक्तं लक्षणां विनैव सामानाधिकरण्यबलेन ताद्रूप्यप्रतीतिसंभवात् लक्षणावैयर्थ्यमिति, तदपि न। चन्द्रादिसादृश्ये वक्तृतात्पर्ये सति तत्प्रकारकप्रतीत्यर्थं लक्षणावश्यंभावात्। वस्तुतस्तु 'मुखं चन्द्र' इत्यत्र चन्द्रताद्रूप्यप्रतीतिर्मुखम् इति सर्वानुभवसिद्धम्। ततश्च चन्द्रपदस्य चन्द्रताद्रूप्य एव लक्षणा। सादृश्यप्रतीतिः फलम्। अत एव रूपकादिषु उपमा व्यङ्ग्येति सांप्रदायिकाः। निरतिशयसौन्दर्यवत्त्वं वा व्यङ्ग्यम्। न च[2] चन्द्रताद्रूप्यस्य मुखगतत्वाभावेन कथं तत् प्रवृत्तिनिमित्तीकृत्य चन्द्रपदस्य मुखे प्रवृत्तिः? अन्यधर्मस्यान्यत्र प्रवृत्तिनिमित्तत्वा-योगादिति वाच्यम्। सत्यम्। लक्षणया चन्द्रपदेन चन्द्रताद्रूप्ये प्रतिपादिते शाब्दसामाना-धिकरण्यबलात् मुखे चन्द्रताद्रूप्यप्रतीत्यविरोधात्। न चैवं लक्षणां विनैव वाक्यार्थविधया समभिव्याहारात् ताद्रूप्यप्रतीतिः अस्तु इति वाच्यम्। तत्प्रकारकप्रतीतेः अनुभवसिद्धत्वेन लक्षणां विना तदनिर्वाहात्। किं च 'नीलमुत्पलम्' इत्यादाविव शाब्दसामानाधिकरण्येनाभेदस्य वाक्यार्थविधया सिद्धावपि ताद्रूप्यस्य तथात्वायोगात् तदेव विषयिविषयपदसामानाधि-करण्यस्थले सर्वत्र विवक्षितम्। अन्यथा पदद्वयवैयर्थ्यात् अभेदप्रतीतेः अतिशयोक्ताविव चन्द्रादिविषयिपदोपादानादेव सिद्धेः विषयवाचकमुखादिपदानर्थक्यात्। न च 'साक्षाच्चन्द्र एवेद'मित्यत्र विषयविषयिवाचकपदद्वयोपादानेऽपि एवकारस्य साक्षात्पदाभ्यां चन्द्रभेदप्रतीतिरविकलेति वाच्यम्। तादृशस्थले तथात्वेऽपि उत्सर्गतः पदद्वयोपादाने ताद्रूप्यप्रतीतिरेवानुभविकत्वादिति ध्येयम्।

अथ साध्यवसानामाह—

**निगीर्य विषयं यत्र विषय्येन निबद्ध्यते ।**
**तत्र साध्यवसाना स्याद्गौणी शुद्धेति सा द्विधा ।**
**सरोजकाहलीरम्भासैकताकाशभूधरैः ।**
**शङ्खेन्दुतिमिरैः सृष्टा वल्ली कामिजनोत्सवः ॥२७॥**

यत्रारोपविषयं मुखादिकं निगीर्यात्मपरिशेषीकृत्य स्थितो विषय्यारोप्यमाणश्चन्द्रादिरेव निबध्यते, तत्र साध्यवसाना। अध्यवसान एकांश उत्कटं ज्ञानम्। ज्ञानस्योत्कटत्वं च

---

१. Pr. राजनिहंसपदं for राजहंसपदं

२. M. om. च

३. Pr. om. °स्य°

तत्तत्कोटिसहचरितानेकधर्मवद्धर्मिविषयकत्वादिकम्। सा च साध्यवसाना सादृश्यतदन्यसंबन्धमूलतया गौणी शुद्धेति द्विविधा। यथा 'सरोजकाहली'त्यत्र गौणी। तत्र पदजङ्घादिप्रतीत्यर्थं सादृश्यं पुरस्कृत्य विषयिपदमात्रोपादानादत्र चाभेदधीः। तथा[1] च लावण्यातिशयधीश्च फलम्। कामिजनोत्सव इत्यत्र सादृश्यान्यकार्यकारणभावसंबन्धं पुरस्कृत्य, विषयिपदमात्रोपादानेन शुद्धसाध्यवसाना। अत्रापि अभेदधीः। तया[2] च अव्यभिचारेण कार्यकारित्वधीश्च फलम्। क्वचित् ताद्रूप्यधीरपि फलम्। 'अनाकाशे कोऽयं गलितहरिण शीतकिरणः इत्यत्र शीतकिरण इति विषयिवाचकपदमात्र उपादानेऽपि गलितहरिण'' इति प्रसिद्धचन्द्रात् व्यतिरेकप्रतीत्या ताद्रूप्यमात्रप्रतीतेः इति ध्येयम्। इयं चातिशयोक्तेः बीजम्। यद्यपि इयमपि जहल्लक्षणैव। तथापि [3]विषयिवाचकपदमात्रोपादानकृतवैलक्षण्यादभेदप्रतीतिरूपफलभेदाच्च पृथगुपात्ता। इयं चाजहल्लक्षणापि संभवति। तथा च[4] चन्द्रमुखोभयविषये चन्द्रौ पश्येति प्रयोगे।

वृत्तिवार्तिककृतस्तु मुख्यार्थसादृश्येन लक्षणा हि[5] गौणी। न च तत्रैव तत्सादृश्यमस्ति। येन मुख्ये गौणी वृत्तिः स्यात्? शुद्धा तु अजहल्लक्षणा विशेषणवाचिनो विशिष्टमपि[6] संभवति। विशिष्टविशेषणयोः एकदेश्येकदेशरूपसंबन्धसत्त्वात्। तस्मात् चन्द्रो 'पश्येत्'यत्र अभिधालक्षणाभ्यामेव अर्थद्वयप्रतीतिः। 'गङ्गायां मत्स्यघोषा'वित्यत्रैव वृत्तिद्वयविरोधस्य अदोषत्वात्। अतः न गौण्यामजहल्लक्षणा[7] इत्याहुः। तच्चिन्त्यम्।

'कुन्ताः प्रविशन्ती'यादावपि कुन्तांशस्य शक्त्यैव उपस्थिति संभवे तत्र न लक्षणा कल्प्या। किं तु पुरुषांश एव तत्कल्पना। तत्राजहल्लक्षणाव्यवहारस्तु शक्तेरपि अन्वयप्रतियोग्युपस्थानार्थानुत्यागादेव[8] ततश्च 'चन्द्रावि'त्यत्रापि शक्यत्यागेन सादृश्यसंबन्धेन मुखे लक्षणाकल्पनादजहद्गौणसाध्यवसानाप्यङ्गीकार्येति दिक्।

इदमत्रावधातव्यम् लक्षणास्थले लक्षकपदेन लक्षकपदवाच्यतावच्छेदकप्रकारेण प्रतीतिरिरिति मते 'कुन्ताः प्रविशन्ती'त्यजहल्लक्षणायां कुन्तकुन्तिनोः कुन्तत्वेन रूपेण प्रतीतिः। 'गङ्गायां घोष' इत्यादि जहल्लक्षणायां तीरादेः गङ्गात्वादिनैव प्रतीतिः। तथा 'मुखं चन्द्र इन्द्रःस्थूणा' इत्यादि सारोपायां चन्द्रत्वादिना मुखादिप्रतीतिः। तथा चन्द्रः इन्द्र इत्यादि साध्यवसानायामपि मुखादेः चन्द्रत्वादिनैव प्रतीतिः। अजहल्लक्षणा जहल्लक्षणयोः वाच्यस्य कार्यान्वयानन्वयाभ्यां भेदः। सारापायां विषयिविषयवाचकपदद्वयोपादानात् भेदः।

---

१. Pr. तथा for तया

२. Do. " "

३. M. om. from विषयि° to प्रतीतिरूप

४. M. om. च

५. Pr. अस्ति for हि

६. Pr. विशिष्टेऽपि for विशिष्टमपि

७. Pr. गौण° for गौण्या°

८. M. °स्थानार्थं° for स्थानार्थऽनु°

साध्यवसानायां विषयनिगरणात् भेदः। विषयनिगरणं च विषयिविषयवाचकपदद्वयोपादाने यत्र विषयस्य विषयित्वेन प्रतीतिः। तत्र विषयस्य विषयिणात्ममात्रपरिशेषीकरणम्। इदं च विषयनिगरणं गंगायामित्यत्र नास्त्येव। तत्र गंगातीरमिति विषयिविषयवाचकपदद्वयोपादाने तीरस्य गङ्गात्वेन प्रतीत्यभावात्मतान्तरे तु 'कुन्ताः प्रविशन्ति' इत्यजहल्लक्षणायां कुन्त-कुन्तिनोः कुन्तसंयोगाश्रयत्वेन साधारणरूपेण प्रतीतिः गङ्गयामिति जहल्लक्षणायां तीरस्य तीरत्वेनैव प्रतीतिः गौणसारोपसाध्यवसानयोश्चन्द्रादिसदृशत्वेन मुखादेः शुद्धसारोपसाध्यव-सानयोः तादर्थ्यादिना प्रतीतिः इत्येकं मतम्। सारोपायां चन्द्रादितादूप्येण मुखादिप्रतीतिः, साध्यवसानायां चन्द्राद्यभेदेन मुखादिप्रतीतिः इत्यपरं मतम्। भेदस्तु पूर्ववदूह्य इति दिक्। उपसंहरति॥

**एवं निरूपिते रूढिलक्षणाफललक्षणे।**

स्फुटम्॥

लक्षणया भेदं वक्तुमर्थसिद्धमर्थं कथयति—

**तत्राद्याव्यङ्ग्यरहिता सव्यङ्ग्या फललक्षणा ।**

आद्या रूढिलक्षणा व्यङ्ग्यरहिता, फललक्षणा तु प्रयोजनस्य व्यञ्जनैकगम्यत्व-नियमेन व्यङ्ग्यसहितैव ततश्च रूढिलक्षणाफललक्षणाभ्यां अन्या लक्षणा न विधेया, नेयार्थरूपदोषापत्तेः इत्यवसेयम्।

अर्थसिद्धार्थकथने फलमाह—

**तच्च व्यङ्ग्यं क्वचिदूढमगूढं च क्वचिद् भवेत् ।**
**विकासिहासा निर्यान्ति चुम्बत्यैन्द्रीमिने स्त्रियः ॥२८॥**

तथा च फललक्षणा सप्तविधापि गूढव्यङ्ग्यागूढव्यङ्ग्यभेदेन प्रत्येकं द्विविधा सती चतुर्दशधा भिद्यत इति ध्येयम्। अत्र गूढ़त्वं सहृदयैकवेद्यत्वं, न तु सहृदयैरपि दुःखेन प्रतीयमानत्वम्। तथा सति वक्ष्यमाणा स्फुटत्वलक्षणगुणीभूतव्यङ्ग्यरूपतया लक्षणामूल-प्रधानध्वनिव्यङ्ग्यभेदाभावापत्तेः अगूढ़त्वं च सहृदयाहृदयोभयवेद्यत्वं अगूढ़व्यङ्ग्यं च वक्ष्यमाणगुणीभूतव्यङ्ग्यान्तर्गतमेवेति ध्येयम्। तत्र गूढं यथा[1] 'विकासिहासा' इत्यत्र विकासः पुष्पधर्मः। स चा[2]न्तरभागद्योतकत्वसादृश्येन स्मिते समारोप्यते। सौरभेत्यादि व्यङ्ग्यम्। तच्च सहृदयैकवेद्यमिति गूढ़म्।

अगूढं यथा—'चुम्बत्यैन्द्रीमिति'। चुम्बनपदं मिथुनयोः कपोलादिस्थलवक्त्रसंयोग-वाचकमत्यन्ततिरस्कृतवाच्यतया संबन्धमात्रं लक्षयत्, प्रत्यूषस्य तादात्विकतां व्यञ्जयति। अत्र वाच्यं व्यङ्ग्यं सहृदयाहृदयवेद्यमित्यगूढ़म्। यथा वा—

---

१. Pr. om यथा

२. M. °अनन्तरभाग° for अन्तरभाग°

३. M. °वक्त्रस्थल for स्थलवक्त्र

**मुखं विकसितस्मितं वशितवक्रिम प्रेक्षितं**
**समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः ।**
**उरो मुकुलितस्तनं जघनमांसबन्धोद्धुरं**
**बतेन्दुवदना तनौ तरुणिमोद्गमो मोदते ।।**

अत्र विकासः पुष्पधर्मः। स चान्तरभागद्योतकत्वेन सादृश्येन स्मिते समारोप्यते सौरभत्वादि व्यङ्ग्यम्।

**वशितो वशीकृतो वक्रिमा येन प्रेक्षणेन तद्वशितवक्रिम ।।**

अत्र वशितत्वं चेतनगतं, तदचेतने वक्रिम्णि अधीनत्वसादृश्येन समारोप्यते। न च सार्वत्रिकालोचनस्य वक्रिमा। किं तु अभिमतविषय एवेति उचितपुरुषानुरागो व्यङ्गः। समुच्छलन् मूर्तधर्मः स च विभ्रमेऽतिशयित्वसादृयेन समारोप्यते। विभ्रमाणामयत्नसाध्यत्वं व्यङ्ग्यम्। संस्था यथावस्थितविषयप्रकाशीकरणं, तदुपासनं चेतनधर्मः। स च उचितविषयत्व-सादृश्येन मतौ समारोप्यते। गुरुजनादिसमीपं भावगोपनं व्यङ्ग्यम्। मुकुलनमपि पुष्पधर्मः। स च उज्जृम्भणोन्मुखत्वसादृश्येन स्तनयोः आरोप्यते। परिरंभयोग्यत्वं व्यङ्ग्यम्। अंशबन्धेनोद्धुरत्वं देहधर्मः। न तु तदवयवस्य जघनमात्रस्या स च अंसलत्वसादृश्येन समारोप्य उपभोगयोग्यत्वं व्यङ्ग्यम्। अंसबद्धवदुद्धर मङ्गलमिति। तत्रोपमैव न समारोप इति केचिदुद्गमो मूर्तधर्मः। स च उद्भूतसादृश्येन तरुणिम्नि समारोप्यते। विभक्तावयवत्वं व्यङ्ग्यम्। तेन च सौन्दर्यातिशयः। मोदत इति चेतनधर्मः। स च तरुणिमोद्गमे समुल्लसितत्वसादृश्येन समारोप्यते। तरुणिम्नः पराकाष्ठा व्यङ्ग्या। तदेतत्सर्वं सहृदयैकवेद्यमित्ति गूढम्। अगूढं यथा—

**स्त्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धाचरितानाम् ।**
**उपदिशति कामिनीनां यौवनमद एव ललितानि ।।**

इयं च नायिकायाः कथं शिक्षाग्रहणसामर्थ्यमिति राज्ञा पृष्टस्य नायिकामध्यापयतो नाट्याचार्यस्योक्तिः। जडा अपि स्त्रीणामुपदेशं विना तत्परिचयादेव विदग्धचरितानामभिज्ञा भवन्ति।

अस्त्वेवं स्त्रीणां विदग्धचरिताभिज्ञता तु कुतः? इत्याकाङ्क्षायामुक्तं उपदिशतीति। स्त्रीणां तु तारुण्ण्यदर्प एव विलासानुपदिशतीत्यत्र उपदेशो नामाज्ञातज्ञापक आचार्योच्चार्यमाणः शब्दविशेषः। स च सामान्यविशेषभावसंबन्धेनाज्ञातज्ञापनमात्रे वर्तते। अनायासेन नायिकायाः शिक्षाग्रहणम् तच्च व्यङ्ग्यमभिधेयवत् स्फुटमित्यगूढ़म्। इदं च गुणीभूतव्यङ्ग्यमेव। गूढ़व्यङ्ग्यं तु उत्तमं काव्यमिति ध्येयम्।

पूर्वोक्तरीत्या बहुविधामपि लक्षणां विवक्षाविशेषेण पुनः त्रेधा संकलयति।

**तदव्यङ्ग्या तथा गुढ़ा गूढ़व्यङ्ग्येति सा त्रिधा ।।**

यतो रूढ़िलक्षणायां सफलं व्यङ्ग्यम्। फललक्षणा च गूढव्यङ्ग्या, अगूढव्यंग्या चेति द्विविधा। तस्मात्[१] पूर्वोक्ता लक्षणा सर्वाप्यव्यङ्ग्या, गूढ़व्यङ्ग्या, अगूढ़व्यङ्ग्या चेति त्रिधा भवति।

**एवं लक्षणां निरूप्य, तद् द्वारा लाक्षणिकं लक्षयति–**

**भवेल्लाक्षणिकः शब्दो लक्षणायाः समाश्रयः ॥२९॥**

यद्यपि वाचकत्वदशायामपि लक्षणाश्रयत्वमस्ति। तथापि यत् अलक्षणया प्रतिपादकं तत् अलाक्षणिकं विवक्षितमिति ध्येयम्।

अन्यलाक्षणिकस्य फले प्रतिपाद्ये यो व्यापारः स[२] व्यञ्जनेत्युच्यते। इद्रं च व्यञ्जनायाः न लक्षणपरं वचनम्। फलप्रतीत्यनुकूललाक्षणिकशब्दगतव्यापारत्वस्य अभिधामूलव्यञ्जनायाम् अर्थगतव्यञ्जनायां च अव्याप्तेः। किं तु वृत्तिद्वयव्यतिरेकेण व्यञ्जनैव नास्तीति वदन्तं प्रति क्वचित् व्यञ्जनाङ्गीकार्येति तत्सद्भावप्रदर्शनपरम्[३]। यदि व्यञ्जनैव नाङ्गीक्रियते, तदा लाक्षाणिक स्थले फलप्रतीतिः न स्यादिति। तत्र व्यञ्जना समाश्रयणीयेति भावः।

स्यादेवं यदि लक्षणास्थले फलमावश्यकं स्यात् तदेव मास्तु, फलावश्यंभावेऽप्यनु-मानादेव तत्प्रतीतिरस्तु। किं व्यञ्जनया इत्यत आह–

**यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ।**
**फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ॥३०॥**

न हि गङ्गातीरे घोष इति वक्तुं प्रतिपादको न जानाति न च[४] तत्प्रयोगे तीराधारक-घोषप्रतीतिरेव न भवति। येनैवं स्वायत्ते अपि शब्दप्रयोगे लाक्षणिकमेव प्रयुङ्क्ते। तेन प्रयोजनप्रतिपिपादयिषयैव लाक्षणिकं प्रयुङक्त इति लक्षणास्थले फलं अवश्यमेषितव्यम्। तत्प्रतीतिश्च शब्दादेव नानुमानात्। व्याप्त्याद्यप्रतिसन्धानेऽपि जायमानत्वात् शब्दस्य च व्यञ्जनां विना नान्यो व्यापारः समस्तीति व्यञ्जनावश्यंकार्या।

ननु एवमपि शब्दादभिधया लक्षणया वा तत्र फलधीरस्तु इत्यत आह

**नाभिधा समयाभावाद्धेत्वभावान्न लक्षणा ॥३१॥**

पावनत्वादौ प्रयोजने हि गङ्गादिशब्दानां साक्षादाप्ताभिप्रायविषयत्वाभावेन साक्षात्सङ्केतितार्थप्रतीत्यनुकूलव्यापारात्मा अभिधा तत्र न संभवति नापि लक्षणा। मुख्यार्थबाधादिरूपलक्षणाहेत्व भावात् हेत्वभावमेव विशदयति–

---

१. M. adds सा before पूर्वोक्ता

२. M. om. स

३. M. तद्भावदर्शन° for तत्सद्भावप्रदर्शन°

४. M. वा for च

**लक्ष्यं न मुख्यं नाप्यत्र बाधो योगः फलेन नो ।**
**नापि प्रयोजनं तत्र न च शब्दः स्खलद्गतिः ।।३२।।**

लक्षणायां हि मुख्यार्थबाधो मुख्येन लक्ष्यस्य संबन्धः प्रयोजनं च हेतुः। तथा चात्र लक्षणायाः लक्ष्यप्रतीत्यनन्तरं पुनश्च लक्षणया फलप्रतीतिः अभिमता किं वा लक्ष्यफलयोर्युगपदेव लक्षणया प्रतीतिः। नाद्यः। तथा हि[1] लक्ष्यतटप्रतीत्यनन्तरं फले प्रवर्तमाना लक्षणा तटे बाधादेव प्रवर्तत इति वाच्यम्। पूर्वप्रतीतेऽर्थे बाधकं विना लक्षणाया अप्रवृत्तेः, अन्यथा गङ्गाशब्दस्य स्रोतसि बाधाभावेऽपि तीरलक्षणापत्तेः। न च तीरे बाधादेव फले लक्षणास्त्विवति वाच्यम्। तथापि मुख्यार्थबाधरूपहेत्वभावान्न फले लक्षणा युक्ता। न च त[2]न्मुख्यार्थोऽस्त्विवति वाच्यम्। तस्य लक्ष्यत्वे[3] मुख्यत्वाभावादित्याशयेनोक्तं लक्ष्यं न मुख्यमिति।

ननु मुख्यार्थबाधो न लक्षणाबीजम्। किं तु ज्ञाप्यबाध एव इत्यत उक्तं, नाप्यत्र बाध इति, ननु न बाधो लक्षणाबीजम्। किन्तु तात्पर्यानुपपत्तिरेव इत्यत उक्तं योगः फलेन नेति। पावनत्वायो हि श्रोतः संबन्धिन एव न तीरसंबन्धिन इति ज्ञाप्यार्थ संबन्धाभावाच्च न फले लक्षणा।

ननु साक्षात् संबन्धाभावेऽपि तीरेण पावनत्वादेः श्रोतोरूपैकार्थसंबन्धित्वात्मकः परम्परासंबन्धो अस्तीत्यत्र उक्तं, नापि प्रयोजनं तत्रेति। तत्र फले लक्ष्ये सति प्रयोजनान्तरं वाच्यम्। न च तदस्ति। किं च गङ्गाशब्दो लक्षणया तटं प्रतिपाद्य पुनश्च लक्षणया फलमपि प्रतिपादयितुं न समर्थः। यतः शब्दो हि लोके न स्खलद्गतिर्विरम्यव्यापारवान्न भवतीत्यर्थः। यद्वा ननु लक्षणास्थले फलप्रतीतिरेव नास्ति, येन तदर्थं व्यञ्जना समाश्रयणीया स्यादित्यत उक्तं-न च शब्दः स्खलद्गतिरिति। अत्र तत्रेति पदं काकक्षिन्यायेन संबध्यते। तथा च तत्र फले शब्दो लाक्षणिकः स्खलद्गतिः प्रतिहतबोधनशब्दश्च न भवति। ततः न फलंप्रतीत्यपलापः कथं शक्यत इति भावः।

ननु यदुक्तं नापि प्रयोजनं तत्रेति तदयुक्तं, प्रयोजनान्तरकल्पनसंभवात् इत्यत आह—

**फलान्तरस्य तत्रापि कल्प्यत्वे त्वनवस्थितिः ।।३३।।**

तत्रापि प्रयोजनस्य लक्ष्यत्वपक्षेऽपि यदि प्रयोजनान्तरं कल्प्यते, तर्हि किं तत् फलान्तरं ? व्यञ्जनागम्यं लक्षणागम्यं वा ? आद्ये अस्मदिष्टसिद्धिः द्वितीये तस्यापि फलस्य लक्ष्यत्वे फलान्तरं कल्प्यमेवं तस्यापीत्यनवस्था।

---

१. Pr. सति for हि

२. M. तट° for तत्°

३. M. adds न after लक्ष्यत्वे

नन्वस्तु तर्हि लक्ष्यसमकालमेव विशिष्टलक्षणया प्रतीतिरिति द्वितीयः पक्षः। न च प्रयोजनविशिष्टतया तटादिलक्षणायामपि प्रयोजनान्तरेण भाव्यमिति वाच्यम्। गङ्गायाः तटे घोष इति मुख्यात् प्रयोगात् गङ्गायां घोष इति लाक्षणिकप्रयोगस्य पावनत्वादि विशिष्टतीर प्रतीतिरेव फलमिति न फलान्तरकल्पना दोष इति विशिष्टलक्षणैवास्तु इत्यत आह—

**प्रयोजनविशिष्टस्य लक्षणा तु न युज्यते ।**
**ज्ञानस्य विषयादन्यद्योतो वाच्यं प्रयोजनम् ।।३४।।**

'अयं घटः' इत्यादि प्रत्यक्षज्ञानस्य हि विषयभूतात् घटादेः अन्यदेव ज्ञातताख्यं घटादिविषयगतं प्राकट्यं फलमिति भाट्टैः अङ्गीकृतम्। नैयायिकैरपि हानोपादानादिसंवित्ति-र्विषयादन्यैव फलमिति स्वीकृतम्।

तथा च लाक्षणिकशब्दजन्यज्ञानस्यापि स्वविषयभिन्नमेव फलं वाच्यम्। तच्च फलविशिष्टलक्षणायां न संभवति। पावनत्वादेरपि शब्दजन्यज्ञानविषयतया तद्भिन्नत्वाभावादतो न फलविशिष्टलक्षणा युक्ता। किं च गङ्गयां घोषाद्यन्यथानुपपत्त्या[1] हि कल्प्यमाना वृत्तिः तदुपपादकतीरादिमात्र एव कल्पयितुं युक्ता न फलविशिष्टे, न च तात्पर्यानुपपत्त्या फलविशिष्टे लक्षणा कल्पनमिति वाच्यम्। तथा फललक्षणया अत्र गङ्गापदेन शक्यप्रवाहसंबन्धिपावनत्वादेरेव प्रतीतिः स्यात्, न तु तीरगतस्य। श्रोतोगतपावनत्वादेः तीरगतत्वप्रतीतिश्चात्र फलमिति विशिष्टलक्षणयापि कथं तत्सिद्धिः ? अतिरिक्तव्यञ्जनाङ्गीकारे तु धर्मिग्राहकमानेन तस्याः तथाविधप्रतीति जनकत्वेनैव सिद्धिरिति न किंचित् बाधकमिति ध्येयम्। यद्यपि पावनत्वादिप्रतीतिरेव फलम्। पावनत्वादिः तथापि फलीभूतप्रतीतिपरिचायकतया[2] पावनत्वादेरपि उपचारात्। 'प्रयोजनविशिष्टस्य' इत्यत्र प्रयोजनत्वोक्तिः। वस्तुतस्तु पावनत्वादिविशिष्टलक्षणायाः पावनत्वादि धीः शब्दज्ञानात् नातिरिक्तेति[3] तस्याः फलत्वं युक्तमिति ध्येयम्।

उपसंहरति—

**तस्माल्लक्ष्ये प्रतीते तु पावनत्वादिधर्मताः[4] ।**
**अभिधा लक्षणा भिन्ना व्यञ्जनैवात्र कारणम् ।।३५।।**

न च गङ्गाशब्दस्य लक्षणया तीरप्रतिपादनेन व्यापारविरमात् कथं व्यञ्जनयापि पुनः पावनत्वादिप्रतीतिजनकतेति वाच्यम्। लक्ष्योपस्थित्यनन्तरं व्यञ्जनया वाक्यैकवाक्य-तावत्प्रयोजनामदाय अन्वयबोधसंभवेन विरमाभावात् व्यङ्ग्यरूपाभिधेया पर्यवसानेन आकाङ्क्षासत्त्वादित्याहुः—

---

१. M. °द्यन्वयानुप° for °द्यन्यथानुप°

२. M. °बाधकतया for परिचायकतया

३. M. adds न before तस्याः

अथाभिधामूलामपि व्यञ्जनां संभावयति–

**अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।।**
**संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम् ।।३६।।**

अनेकार्थस्य हरिरामादिशब्दस्य संयोगाद्यैर्वक्ष्यमाणैः वाचकत्वे अन्वय-प्रतियोगिस्मारकत्वे नियन्त्रिते नियमिते सति अर्थान्तरस्मृतजननप्रतिबन्धेन एकार्थ[१]-स्मृतिजनकत्वे कृत इति यावत् अवाच्यार्थान्तरस्य व्यापृति[२]र्व्यापारः सौऽञ्जनमित्यभिधीयते।

अत्रापि यदि व्यञ्जनैव नाङ्गीक्रियते तथा अनेकार्थशब्दप्रयोगे शक्तेः प्रकृतिमात्र-नियमितत्वात् अप्रकृतार्थस्मृतिरनुभवसिद्धा न स्यात्। अतः तदन्यथानुपपत्त्या व्यञ्जना समाश्रयणीयेति अर्थापत्तिः उपदर्शितेति ध्येयम्।

**संयोगादीनां नियन्तृत्वं हरिणोक्तमनुवदति–**
**संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।**
**अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः ।।**
**सामर्थ्यमौचिती देश कालो व्यक्तिः स्वरादयः ।**
**शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ।।**

शब्दार्थस्य हरिरामादिनानार्थशब्दार्थस्य सर्वस्यापि अन[३]वच्छेदे सत्यविशेषेण स्मरणे प्रसक्ते सति संयोगादयो विशेषस्मृतावेकमात्रस्मृतौ हेतव इति योजना।
अथ संयोगं लक्षयति–

**संयोगस्तु स्ववाच्यैक निष्ठार्थान्तरसङ्गतिः ।**
**पुङ्खयत्यधिकां भूतिं शङ्खचक्रधरो हरिः ।।३७।।**

संयोगो नाम स्ववाच्येष्वर्थेषु एकार्थनिष्ठार्थान्तरसंबन्धः। तेन च संयोगेन क्वचिदभिधा नियम्यते। यथा 'शङ्ख[४]चक्रधरो हरिः' इत्यत्र शङ्खचक्रसंयोगेन हरिशब्दस्य शक्रादि साधारणस्य श्रीपतौ अभिधा नियम्यते।
विप्रयोगमाह–

**विप्रयोगस्तु संयोगाभाव एव निगद्यते ।**
**अशङ्खचक्रः स हरिरपि नाको भवो भवान् ।।३८।।**

---

१. M. एव कार्यर्थ° for एकार्थ°

२. M. adds या before व्यापृति°

३. M. अवच्छेदे for अनवच्छेदे

४. M. om. शङ्खचक्रधरोहरिः इत्यत्र

संयोगाभावरूपेण विप्रयोगेण अभिधानियमनं तथा अशङ्खचक्र इति। शङ्खचक्र-संयोगाभावेन हरिशब्दस्य इन्द्रादिसाधारणस्य नारायणे अभिधा नियम्यते। प्रतिषेधस्य प्रसक्तिपूर्वकत्वेनान्यत्र शङ्खादिप्रसक्तेः अभावेन प्रतिषेधासंभवात्। एवमपि नाक इति संयोगाभावेन भव शब्दस्य संसारसाधारणस्य शङ्करेऽभिधानियम्यते। विप्रयोगो वियोग इत्यपरे।

साहचर्यमाह—

साहाचर्यं स्ववाच्यैकवस्तुना सहचारिता ॥
वन्दारुजनमन्दारौ वन्देऽहं रामलक्ष्मणौ ॥३९॥

स्ववाच्यभूतेषु वस्तुषु एकस्य वस्तुनः पदार्थान्तरेण प्रायशः सहचरितत्वं साहचर्यं तेन 'रामलक्ष्मणावित्यत्र सौमित्रिसाहचर्यात् बलभद्रादिसाधारणस्य रामपदस्य दाशरथावभिधा नियम्यते।

विरोधितामाह—

सहानवस्थितिर्वध्यहन्तृत्वं च विरोधिता ।
दिनं निशां च संयुध्य रामोऽजैषीद्दशाननम् ॥४०॥

विरोधिता नाम सहानवस्थितिर्वध्यघातकभावश्च। तत्र दिनं निशामित्यत्र निशापदस्य हरिद्रासाधारणस्य दिनेन सहानवस्थानलक्षणविरोधात् रात्रौ अभिधा नियम्यते। रामपदस्य भार्गवादिसाधारणस्य दशाननेन[1] सह वध्यघातकभावलक्षणविरोधात् दाशरथौ अभिधा नियम्यते। प्राञ्चस्तु 'भीमबकयो रामार्जुनगतिस्तयो' रिति विरोधित्व साधर्म्योपमायां प्रयुङक्ते 'रामार्जुनगतिः' इत्यत्र रामार्जुनपदयोः वध्यघातकभावविरोधेन भार्गवकार्तवीर्ययोः अभिधा नियम्यत इत्याहुः। अत्र वृत्तिवार्तिककृतः—भार्गवे रामपदस्य अभिधा नियमने सति तद्विरोधि[2]प्रतिसन्धानेन अर्जुनपदस्य कार्तवीर्ये अभिधानियमनम्। तस्मिंश्च सति तद्विरोधप्रतिसन्धानेन रामपदस्य इति अन्योन्याश्रयापत्तेः। तस्मात् अन्यतरपदस्य व्यवस्थितार्थत्व एव स्मृततद्विरोधप्रतिसन्धानात् नानार्थपदस्याभिधानियमनमिति प्रागुक्तमेवात्रोदाहरणमित्याहुः। अत्रापि दार्ष्टान्तिकयोः भीमसेनबकासुरयोः विरोधात् तद्दृष्टान्तयो रामार्जुनपदवाच्ययोरपि विरोधं सामान्यतः निश्चित्य पश्चाद्रामपदस्य भार्गवे, अर्जुनपदस्य कार्तवीर्ये च अभिधानियमनसंभवात् नान्योन्याश्रय इति नव्याः।

अथार्थं लक्षयति—

अर्थः प्रयोजनं स्थाणुं तं संसारच्छिदे[3] नुमः ॥४१॥

---

१. M. om. °न°

२. M. तद्विरोधप्रति° for तद्विरोधिप्र°

३. M. °च्छिदये for °च्छिदे

अत्र संसारच्छेदनरूपप्रयोजनेन स्थाणुशब्दस्य स्कन्धशून्यवृक्षसाधारणस्य शङ्करे अभिधा नियम्यते। चतुर्थ्या प्रयोजननिर्देश एवार्थो नियामकः। 'स्थाणुं भज भवच्छिदमि'[1]ति द्वितीया निर्देशे तु औचित्यं नियामकमिति विवेक इत्याहुः।
अथ प्रकरणं लक्षयति—

**विदुः प्रकरणं वक्तृश्रोतृबुद्धिस्थितं हि यत् ।**
**जानाति सकलं देवः प्रश्नोऽयं वितथोऽधुना ।।४२।।**

'जानाती'त्यत्र वक्तृश्रोतृबुद्धिस्थतारूपप्रकरणेन देवपदस्य संबोध्ये अभिधा नियम्यते।
अथ लिङ्ग निरूपयति—

**लिङ्गं स्ववाच्यान्तरेभ्यो व्यावृत्तो धर्म इष्यते ।**
**जय्ये जगति केनैष कुपितो मकरध्वजः ।।४३।।**

अत्र सागररूपवाच्यान्तरव्यावृत्तेन कोपरूपलिङ्गेन मकरध्वजशब्दस्य मन्मथे अभिधा नियम्यत इत्येके। मकरध्वजशब्दस्य मन्मथे प्रसिद्धयैव नियमनं, न तु कोपरूपचिह्ने न। अत एव मकरध्वजशब्दस्य सागरपरतया प्रयोगे निहतार्थत्वं वक्ष्यति। तस्मात् कुपितशब्देन यावत्कुपितोपस्थितिप्रसक्तौ [2]मकरध्वंजरूपचिह्नेन कुपितशब्दः कामदेवे नियम्यते। न च कुपितशब्दो नानेकार्थ इति वाच्यम्। अनेकव्यक्त्युपस्थानसमर्थस्यैवात्रानेकार्थत्वेनाभिमतत्वात्। अत एव 'जानाति सकलं देव' इत्यत्रानेकव्यक्त्युपस्थापकतयैव अनेकार्थत्वात् देवशब्दस्याभिप्रेत्य अभिधाया नियमनमुक्तमिति मधुमतीकृतः। वस्तुतस्तु 'कुपितो भूभृत्' इत्यत्र कोपलिङ्गेन भूभृत्पदस्य पर्वतसाधारणस्य राज्ञि अभिधा नियम्यत इति नव्याः। संयोगोदाहरणे द्रव्यसंयोगात् इह गुणादिसंबन्धात् इति भेदः।
अथ शब्दान्तरसंनिधिमाह—

**सामानाधिकरण्यं यन्नियतार्थपदेन तत् ।**
**शब्दान्तरस्य सान्निध्यं देवोऽन्या त्रिपुराहितः ।।४४।।**

अत्र नियतार्थकत्रिपुराहितपदसामानाधिकरण्यरूपेण शब्दान्तर संनिधानात् देवपदस्य विरिञ्च्यादिसाधारणस्य शङ्करे अभिधा नियम्यते। अत्र वृत्तिवार्तिककृतः— समभिव्याहृतशब्दस्य नियतार्थत्वे तत्प्रतिपादिततल्लिङ्गादि नैव तन्नियमनम्। अन्यथा लिङ्गाद्युदाहरणेऽपि शब्दान्तरसंनिधेरेव नियामकत्वापत्तेः। अतः नियतार्थशब्दसामानाधिकरण्यं न शब्दान्तरसंनिधिः किं तु नानार्थप[3]दवाच्यैकार्थसंबन्ध्यर्थान्तरगृहीतसङ्केतकनानार्थशब्द-

---

१. 'भवच्छिदे' इति पाठो संसारच्छेदयि'त्यर्थः।

२. M. om. from मकरध्वज to इत्यत्रानेकव्यक्त्युपस्थापकतयैव

३. M. °प्रति°

समभिव्याहर एव। तस्य च 'निषधं पश्य भूभृतमि'त्युदाहरणम्। अत्र च जनपदविशेषे साधारणस्य निषधपदस्य पर्वतवाचिभूभृत्पदसंनिधिना पर्वतविशेषेऽभिधा नियम्यते भूभृत्पदस्य च सर्वसाधारणस्य पर्वतविशेषवाचिनिषधपदसंनिधिना पर्वते अभिधा नियम्यते। न च अन्योन्याश्रय इति वाच्यम्। नह्यत्र समभिव्याहृशब्देन तदर्थप्रतिपादनम् अभिधानियमनायापेक्ष्यते। किं तु स्वार्थेन गृहीतसंसर्गे अर्थे व्युत्पन्नो यः शब्दः तत् समभिव्याहारमात्रम्। तथा च यथा संबन्धिदर्शनात् संबन्ध्यन्तरस्मृतिस्थले गृहीतसंबन्धस्य वस्तुनो दर्शनमात्रं संबन्ध्यन्तरस्मरणायापेक्ष्यते। न तु तद्दर्शनान्तरं तत्संबन्धस्मरणमपीति नान्योन्याश्रयः। तथा इहापि निषधभूभृत्पदयोरभिधानियमनाय गृहीतस्वार्थसंसर्गकपदार्थ-व्युत्पन्नभूभृन्निषधपदसमभिव्याहारमात्रमपेक्ष्यत इति तत्तदर्थप्रतिपादनस्यानपेक्षितत्वात् न अन्योन्याश्रयः।

ननु एवमपि 'शङ्खचक्रधरो हरिः' इत्यादावपि शङ्खचक्र शब्दान्तरसंनिधिनैव अभिधानियमनं भविष्यतीति व्यर्थं पृथक् संयोगाद्युदाहरणमिति चेत् नैवम्। तत्र शङ्खचक्रादिशब्दानां नियतार्थतया श्रवणमात्रात् अर्थप्रतिपादकतया तत्प्रतिपादितार्थ संयोगादितः अभिधानियमनसंभवात्। न च शब्दान्तरसंनिधिरपि तत्रास्तीति वाच्यम्। अस्तु। तथापि हरिशब्दात् अभिधानियमनसमर्थे तदर्थसंयोगादिरूपे सन्निहितसंबन्धेनान्तरङ्गे शङ्खचक्रादावुपस्थिते तस्यापि वाचकतया व्यवहितसंबन्धेन बहिरङ्गभूतः शब्दान्तरसंनिधिः नोदाहरणमर्हति। तस्मात् 'निषधं पश्य भूभृतम्' इत्यादौ यत्रोभयं नानार्थतया न कस्याप्यर्थस्य प्रथममुपस्थितिः तत्रैव बहिरङ्गस्यापि तस्य नियामकत्वेनोदाहरणमिति[1] न कश्चित्सङ्करः। एवं च 'रामर्जुनगतिस्तयोः' इत्यत्रापि शब्दान्तरसंनिधिरेव नियामकः। तथा 'व्यालो दानेन राजत इत्यत्रापि शब्दान्तरसंनिधिनैव व्यालदानपदयोः अहिखण्डनसाधारणयोः दुष्टगजमदजलयोः अभिधा नियम्यत इत्याहुः। तच्चिन्त्यम्। एवं सति निषधपदवाच्यजन-पदविशेषसंबन्धिनि राजन्यपि भूभृच्छब्दस्य गृहीतशब्दव्युत्पत्तिकवात् भभृत्पदस्य निषधपदेन जनपदविशेषस्मृतावपि नियामकता तुल्येति न कुत्रापि अभिधानियमनं स्यात्। न च सामानाधिकरण्यनिर्देशानुपपत्तिज्ञानसहायेन शब्दान्तरसंनिधिना अत्र[2] अभिधाया नियमनमिति वाच्यम्। तर्हि आवश्यकादौचित्यादेव अभिधानियमनसंभवेन शब्दान्तरसंनिधिवैयर्थ्यापत्तेः। न चात्र औचित्यावश्यंभावेऽपि 'व्यालो दानेन राजत' इत्यत्र व्यालपदवाच्यार्थान्तर संबन्धिन्यपि व्यालपदस्य गृहीतसंकेतत्वाभावेन औचित्यानपेक्षणात् शब्दान्तरसंनिधिनैवात्र विशेषस्मृतिरिति वाच्यम्। तत्रापि व्यालपदस्य स्वार्थप्रतिपादनं विना न दानपदे अभिधानियमनसंभवः। पदान्तराभिधानियमनस्य तदर्थ संबन्ध्यर्थप्रतिपादकत्वज्ञानं विनानुपपत्तेः। एवं दानपदस्यापि इत्यन्योन्याश्रयः। न च तदर्थसंबन्धिगृहीतव्युत्पत्तिकपदस्यैव

१. M. °नोदाहरत्वमितिं for °नोदाहरणमिति

२. M. अपि for अत्र

तदर्थस्मृतिहेतुत्वं संभवतीत्युक्तमिति वाच्यम्। तर्हि 'गङ्गायां घोष' इति लक्षणास्थलेऽपि तीररूपार्थसंबन्धिपरगृहीतशक्तिकगङ्गापदात् पूर्वं तीरस्मृतिं विनैव तीरस्मृत्यापत्तेः। तथा हस्तिपदात् गजस्मृतिं विनैव हस्तिपदस्मृत्यापत्तेश्च। न चैवं संबन्धिदर्शनात् संबन्ध्यन्तर-स्मृतिस्थलेऽपि संबन्धित्वज्ञानं संबन्ध्यन्तरस्मृतिसमयेऽप्यपेक्ष्यं स्यादिति वाच्यम्। परम्परा-संबन्धिस्मृतौ तदपेक्षायामापि साक्षात्संबन्धिस्मृतौ तदनपेक्षेति कार्यानुरोधेन कल्पनात्। अत एव पदेन शब्दस्मृतौ न शक्तिस्मृत्यपेक्षा। लक्ष्यस्मृतौ तु लक्ष्यस्य शक्यसंबन्धिज्ञानापेक्षा च दृश्यते। तस्मात् उभयनानार्थपदस्थलेषु औचित्यादिनैवाभिधानियमनम्। 'देवोऽव्यात्त्रि-पुराहित' इत्यादावेव शब्दान्तरसंनिधिना तन्नियमनम्। न च पदान्तरस्य नियतार्थत्वे तत् प्रतिपादितलिङ्गेनैव तन्नियमनम् इत्युक्तमिति वाच्यम्। तद्गतगुणक्रिययोरेव लिङ्गत्वेन विविक्षितत्वात्। न च तद्गतासाधारणधर्ममात्रस्यैव लिङ्गत्वमपि विवक्ष्यतामिति वाच्यम्। स्वतन्त्रेच्छानां प्राचां नियोगपर्यनुयोगानर्हत्वात्। अन्यथा तदर्थसंबन्धिमात्रस्य लिङ्गत्वं विवक्षित्वा संयोगसाहचर्यादीनामपि लिङ्गान्तर्भावानुयोगस्य दुष्परिहरत्वादिति दिक्। अथ सामर्थ्यमाह—

**सामर्थ्यं स्यात्कारणत्वं मत्तोऽयं मधुना पिकः ।।४५।।**

अत्र कोकिलमदकारणत्वरूपसामर्थ्येन मकरन्दादिसाधारणस्य मधुशब्दस्य वसन्तैकदेशचैत्रमासे अभिधा नियम्यते। न चात्रार्थभेदः। तत्र प्रयोजनेनाभिधानियमनम्। अत्र तु कार्येण कार्यं चानिष्टरूपमपि संभवतीति महान् भेदः। यत्र हेतुत्वमार्थां तत्रार्थो यत्र तच्छाब्दं तत्र सामर्थ्यमिति वा भेद इत्याहुः।
अथौचितीमाह—

**औचित्यन्वययोग्यत्वं पातु वो दयितामुखम् ।।४६।।**

अत्र पात्विति शब्दस्य सुखसमर्पणदुःखानिर्हरणतदुभयानुकूलव्यापारादिसाधारणस्य दयितामुखे स्वरूपेण सुखसमर्पणाद्ययोगात्तदनुकूलव्यापारात्मनि सांमुख्ये समभिव्याहृत-पदार्थान्वययोग्यतारूपेण औचित्येनाभिधा नियम्यते।[1]
अथ देशमाह—

**देशः पुरादिर्भात्यत्र नगरे परमेश्वरः ।।४७।।**

अत्र नगर इति देशेन परमेश्वरशब्दस्य शंकरादिसाधारणस्य राजन्यभिधा नियम्यते। यद्यप्यत्र नगरभावरूपलिङ्गेन तन्नियमनं संभवति। तथापि तदस्फुरणदशायां देशस्यापि नियामकतेतिध्येयम्। नगरस्य राजनिष्ठात्वाभावेन तन्निष्ठद्रव्यसंबन्धरूपेण संयोगेन नात्र नियमनशङ्का इत्याहुः।

---

१. M. सुखसमर्पकाद्ययो° for सुखसमर्पणाद्ययो°

अथ कालमाह—

**कालो निशादिस्तामस्यां चित्रभानुर्विराजते ।।४८।।**

अत्र निशारूपकालेन रविसाधारणस्य चित्रभानुपदस्याग्नावभिधा नियम्यते। आदिपदाद्दिवसवसन्तादिग्रहः। ततश्च दिवसे 'चित्रभानुर्विभाती' त्यत्र रवौ वसन्ते पुंनागो भातीत्यत्र पुंगजसाधारणस्य पुन्नागपदस्य न 'मेरावभिधानियमनमित्याहुः[1]।

अथ व्यक्तिमाह—

**पुंलिङ्गादिर्भवेव्द्यक्तिर्मित्रं मित्रश्च राजतः ।।४९।।**

अत्र रविसुहृत्साधारणस्य मित्रशब्दस्य नपुंसकलिङ्गेन सुहृदि पुंलिङ्गेन रवौ चाभिधा नियम्यते।

**उदात्तादिस्वरश्च स्यादिन्द्रशत्रुरिति श्रुतौ ।।५०।।**

'उदात्तानुदात्तादिस्वरश्च स्वाहेन्द्रशत्रुर्वर्धस्व' इत्यादि श्रुतावेव अभिधानियामको न तु काव्ये। तथा हि शत्रुशब्दः शातयतेरुपजनितः। ततश्च इन्द्रशत्रुपदे यद्यादेरिकारस्य उदात्तत्वं तदा बहुब्रीहिः। बहुव्रीहिपक्षे च इन्द्रः शत्रुःशातयितास्येति इन्द्रस्य शातयितृत्वम्। यदि चान्तस्य शत्रुशब्दवर्तिनः उकारस्य उदात्तत्वं, तदा षष्ठीतत्पुरुषः। तथा च इन्द्रस्य शत्रुः शातयितेति वृत्रस्य शातयितृत्वं लभ्यत इति इन्द्रशत्रुपदस्य स्वरभेदेन अर्थद्वये प्रसक्त आद्युदात्तस्वरेण इन्द्रस्य शातयितृत्वेऽभिधा नियम्यते। ननु—

**सुभ्रु ! त्वं कुपितेत्यपास्तमशनं त्यक्ता कथा योषितां**
**दूरादेव विवर्जितास्सुरभयस्स्रग्गन्धधूपादयः ।**
**कोपं रागिणि मुञ्च मय्यवनते दृष्टे प्रसीदाधुना**
**सत्यं त्वद्विरहे भवन्ति दयिते सर्वा ममान्धा दिशः ।।**

इत्यत्रास्य दृष्ट इति पदस्य प्लुतस्वरेण सप्तम्यन्तत्वभ्रमव्युदासद्वारा मयीत्येतद्विशेषणत्वव्यावर्तनेन दयितायां दृष्टित्वारोपेण तत्संबोधनान्तत्वसूचनद्वारा चक्षूरूपार्थविशेषेऽभिधानियमनं दृश्यत इति चेन्न। तथापि दृष्टिदृष्टशब्दयोः भिन्नत्वेन अनेकार्थप्रतिपादनसमर्थैकशब्दत्वरूपनानार्थशब्दत्वाभावेन प्लुतस्वरस्य नाभिधानियामकत्वम्। किं तु प्रकृत्यन्तरसूचकत्वमेव। वस्तुतस्तु उदात्तादिस्वराणां यद्यपि काव्येषु नाभिधानियामकत्वम् तथापि काकुस्वरस्य काव्येषु अभिधानियामकत्वमस्त्येव। तथा हि—

**तरुणतातरुणिद्युतिनिर्मितद्रढिम तत् कुचकुंभयुगं तथा ।**
**अनलसंगति तापमुपैतु नो कुसुमचापकुलालविलासजम् ।।**

---

१. M. इत्यूह्यम् for इत्याहुः

मन्मथकुंभकारचातुर्यजनितं यौवनदिनकरकिरणसंपादितदाढ़र्यं दमयन्तीस्तन-घटद्वयं नलसंगत्यभाव एव। अनलस्य वह्नेः संगतिः तया तापमुपैतु नो इत्यत्र 'नञो' निषेधसाधारणस्य काक्वा विधावभिधा नियम्यते। न च नञः निषेधार्थत्वमेव। न विध्यर्थत्व[१]मपीति कथं नञो विधावभिधानियमनमिति वाच्यम्। अव्ययानामनेकार्थत्वेन नञो विध्यर्थत्वस्यापि अविरोधात् अन्यथोक्तस्थले विधिप्रतीतिः न स्यात्। काकोरपदत्वेनार्थवत्त्वाभावात्। न चैवं काकुं विनापि नञा विधिप्रतीतिः कदाचिद्भवेदिति वाच्यम्। केषांचित् पदानां द्योतकत्वाभावे अर्थविशेषप्रत्यायकत्वाभावस्य स्वभावसिद्धत्वात्। अत एव धातूनामनेकार्थत्वेऽपि तिष्ठति धातोः, प्रोपसर्गाभावे गमनरूपार्थविशेषप्रत्याय-कत्वाभावः सर्वसिद्ध इति ध्येयम्। वस्तुतस्तु ब्राह्मणा संगच्छेति लौकिकवाक्ये प्लुतस्वरेण दूरस्थे ब्राह्मणे अभिधा नियम्यत इति द्रष्टव्यम्।

'स्वरादयः' इत्यत्र आदिशब्देनाभिनयोपदेशादयो गृह्यन्ते। तत्राभिनयो विवक्षितार्थस्वरूपप्रदर्शको हस्तादिव्यापारः।

यथा–

**एद्दहमेत्तत्थणिआ एद्दहमेत्तेहि अच्छिवत्तेहिं ।**
**एद्दहमेत्तावत्था एद्दहमेत्तेहि दि अएहिं ॥**
**(एतावन्मात्रस्तनिका एतावन्मात्राभ्यामक्षिपत्राभ्याम् ।**
**एतावन्मात्रावस्था एतावन्मात्रैर्दिवसैः ॥)**

इदं च शैशवे प्रणयिनीं परित्यज्य देशान्तरं गतस्य कालान्तरे स्मृतवतः कामिनो वचनम्। अत्र अक्षिपद्माभ्यां तामरससमाख्यामक्षिभ्याम् उपलक्षणे तृतीयेयम्। अत्र स्थौल्यवैशाल्यावस्थाविशेषकालप्रदर्शकहस्तव्यापारैरेतावन्मात्रपदस्य स्थौल्यादिविशेषे अभिधा नियम्यते। उपदेशो नाम विवक्षितार्थस्य श्रृङ्गग्राहिकया निर्देशः। यथा–

**इतः सदैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् ।**
**विषवृक्षोऽपि संवर्ध्य स्वयं च्छेत्तुमसांप्रतम् ॥**

इदं सुराभ्यर्थिततारकासुरनिग्रहस्य चतुर्मुख्यवचनम्। अत्र इत इति स्वात्मनिर्देशेन तस्य वक्तरि परमेष्ठनि अभिधा नियम्यते। इदमत्रावधातव्यम्। यत्र तु नानार्थशब्दस्य अनेकस्मिन्नर्थेऽभिधा नियामक[२]मविशिष्टम् तत्र नान्यतरस्मिन्नाभिधा नियम्यते नियामकाभावात्। यथा–

**सर्वदोमाधवः पायाद्यो गङ्गां समदीधरत् ।**

---

१. M. om. °त्व°

२. M. om. °म°

इस्यत्र हरिहरयोः द्वयोरपि स्तुत्यतया प्रकरणमविशिष्टमिति। यः अगङ्गोवर्धनं कृष्णावतारे गां भूमिं च वराहावतारे समदीधरत्। 'सर्वदः समाधवःश्रीपतिः पायात्' इत्यर्थे यः गङ्गां जाह्नवीं समदीधरत्स उमाधवः पार्वतीपतिः सर्वदा पायादित्यर्थे च अभिधैव व्यापारः। अत एव तत्र श्लेषालङ्कारः इत्यधमकाव्यत्वमाहुः-यत्र तु संयोगादिभिरर्थान्तरविषयाभिधानियमनेऽपि अनेकार्थशब्दादर्थान्तरप्रतीतिः तत्र नाभिधा। तस्या अन्यत्र नियमितत्वात्। नापि लक्षणा मुख्यार्थबाधाद्यभावात्। अपि तु व्यञ्जनैव तत्र[१] व्यापारः। न च अभिधया इव व्यञ्जनयापि प्रकरणादिना नियमनेन तथापि न तन्निर्वाह इति वाच्यम्। तस्या धर्मिग्राहकमानेन प्रकरणाद्यनियमयतयैव सिद्धेः। अत एव काव्यान्तर्निर्विष्टस्य प्राकारणिककिंचिदर्थनियन्त्रिताभिधाव्यापारास्यापि असभ्यपदार्थान्तरप्रत्ययहेतोः पदस्य हेयत्वम्। अन्यथा अत्र अभिधाया इव व्यञ्जनायापि प्रकरणादिना नियन्त्रणे सति असभ्यार्थान्तरप्रत्ययासंभवात्। 'यस्याननं योनिरुदारवाचा' मित्यादौ अश्लीलाख्य दोषो न स्यात्। तस्मात्–

**संयोगादिभिरभिधा श्रृङ्खलिता यत्र कुण्ठतामेति ।**
**अर्थान्तरावगमने व्यञ्जनमेव क्षमं तत्रेति ॥५१॥**

अत्र वृत्तिवार्तिककृत[२] असावुदयमारूढः कान्तिमान् रक्तमण्डलः।

**राजा हरति लोकानां हृदयं मृदुभिः करैः ॥**

इत्यादौ प्राकरणिकेऽर्थे प्रकरणवदप्राकरणिकेऽपि राजकरमण्डलादिशब्दानां परस्परान्वययोग्यनृपतितद्वाह्यधनदेशादिवाचिनां समभिव्याहाररूपकमभिधानियमनमस्तीति अर्थद्वयस्यापि प्राकरणिकत्व इव प्रकारणिकाप्राकरणिकरूपत्वेऽपि उभयत्र अभिधैव व्यापारः। यथोक्तपदसमभिव्याहारस्यापि नानार्थपदवाच्यैकार्थसंबन्धार्थान्तरगृहीतसङ्केतकनानार्थशब्दसमभिव्याहाररूपशब्दान्तरसंनिधित्वेन प्रकरणवत् अभिधानियामकत्वात्। यैस्तु नियतार्थपदसन्निधिरेव शब्दान्तरसंनिधिरित्युच्यते। तैरपि उक्तस्थले अर्थान्तरप्रतीतेः अनुभवसिद्धत्वेन अर्थद्वयानुकूलानेकपदसंघटनात्मकं नियामकान्तरमवश्यमास्थेयम्।[३] स च अप्राकरणिके अर्थान्तररूपकमेकमेव नियामकम्। प्राकरणिके तु तच्च प्रकरणं चेति नियामकाधिक्यात् तत्रैवाभिधा स्यादिति वाच्यम्। प्रकरणादीनां प्रत्येकम् अभिधानियमनसमर्थतया तेषु कस्यचिदपि समवधाने स्मृतिसामग्री पुष्कलेति किं तद्बाहुल्येन? यत्रापि एकमेव पदं नानार्थमप्राकरणिकेऽपि तात्पर्यम्। यथा–'अन्धकद्विरदध्वंसी देयात्पञ्चाननः श्रियम्' इत्यादौ। तत्रापि समभिव्याहृतद्विरदपदप्रतीतगजविरोधादिकमप्रकारणिके सिंहेऽपि[४] पञ्चाननपदस्याभिधानियामकमस्त्येव। यत्र तु 'यस्याननं योनिरुदारवाचा-

---

१. Pr. om. तत्र

२. M. adds ननु after वृत्तिरार्तिककृतः

३. M. न चाप्राकरणिकेऽर्थे उक्तरूपमेकमेव नियामकम्।

४. M. om. °अपि

मि' त्यादौ अश्लीलेनैव तादृशं नियामकं तत्रापि बुभुत्सितार्थस्यासक्तसमनसस्तमुल्लङ्घ्या-सह्यदुर्गन्धादौ प्रवृत्तिवत् प्रकरणनियन्त्रितस्यापि शब्दस्य तदुल्लङ्घनेन विषयस्वाभाव्यादश्ली-लेऽपि प्रवृत्तिरिति न क्वापि शक्तिविषये वृत्तिः अङ्गीकार्या। यदि चैवंविधानि नियामकानि नाद्रियन्ते तदोदाहृतस्थलेषु व्यञ्जनाव्यापारः दुर्घटः। तथा हि प्रकरणादिकमुल्लङ्घ्य व्यञ्जनाव्यापारेणापि अर्थान्तरप्रत्ययो न सर्वत्र वक्तुं शक्यते। प्रकरणादीनाम् अभिधानियामककल्पनस्य वैयर्थ्यापत्तेः, तद्भिनादृष्टार्थम्। किं तु 'सैन्धवमानय' इत्यादौ एकार्थपरनानार्थस्थले अर्थविशेषस्मृतिव्यवस्थार्थं तत्। यदि तत्र व्यञ्जनाव्यापारेणार्थान्तरप्रत्ययः स्यात् तदा कथमेषा व्यवस्था सिध्येत्? न हि अभिमतानभिमतक्षेत्रसाधारणस्य जलाशयस्य अभिमत- क्षेत्रगामिनीम् एकां कुल्यां विधायाभिमतक्षेत्रगामिनः कुल्यान्तरस्य कल्पने जलस्याभिमत- क्षेत्रैकगामित्वव्यवस्था कृता भवति। तथा च यत्र कवयितुश्चमत्काराया प्राकरणिकेऽप्यर्थे तात्पर्यम्। यत्र चाश्लीलदोषः तत्रैव व्यञ्जनाव्यापारोन्मेषो न सर्वत्र तादृशस्थले च प्रकरणवदस्मदुक्तानामपि अभिधानियाम कत्वसंभवात् व्यर्थः। तत्र व्यक्तिकल्पनापरिश्रमः। किं च दुर्वारश्च तत्र व्यक्तिवादिमते अप्यभिधाव्यापारः। तथा हि – यदि शक्तिरभिधा तदानीमप्रकरणिकेऽपि सा दुर्वारा! यदि च काव्यप्रकाशिकोक्तरीत्या शक्यार्थप्रतिपाद- कत्वरूपः शब्दनिष्ठो व्यापारः, सौऽप्यस्त्यैव। न हि तत्राप्राकरणिकशक्यप्रतीत्यापत्तेः शब्दादन्यज्जनकम्। न च शब्दस्यैव तत्प्रतिपादकत्वेन[1] शक्तिग्रहापेक्षेति वाच्यम्। तर्हि अगृहीतशक्तिकस्यापि तत्र व्यञ्जनया अर्थान्तरप्रतीत्यापत्तेः।

ननु शक्त्या साक्षात्प्रतिपादकत्वमभिधासाक्षादित्यविशेषेण मुख्यार्थशक्तिग्रहमवेक्ष्य मुख्यार्थप्रतिपादनव्यवधानेन तत्संबन्ध्यर्थान्तरप्रतिपादनरूपाया लक्षणायापि अभिधात्व-प्रसङ्गात्। तथा च प्रागेवानुमानेन प्रकरणेन प्राकरणिकार्थोपस्थापनं शीघ्रभावीति तद्व्यवधानेन अर्थान्तरप्रतिपादनं नाभिधा इति चेन्न। तद्विषयशक्तिग्रहमपेक्ष्य तत्प्रतिपादनम् अभिधेति विवक्षणे[2] विनैव साक्षात्वविशेषणमनतिप्रसङ्गात् पदरूपेण पदभङ्गकृतपदान्तररूपेण वा अर्थान्तरप्रतिपादनव्यवधानराहित्यरूप साक्षात्त्वविशेषणस्य गुरुत्वात् तथा विशेषणे 'सर्वदो माधवः पायात्सयो गङ्गामदीधरत्' इत्यत्र शङ्करपक्षे एकपदत्वेन गङ्गामित्यत्र झडित्यर्थप्रतीतिः वैकुण्ठपक्षेत्वगङ्गोवर्धनं गां भूमिमिति पदभङ्गक्लेशेन गोपदस्य भूमौ प्रसिद्धिप्राचुर्याभावाच्च विलम्बेनार्थप्रतीतिः इत्यनुभवसिद्धत्वेन तत्र अभिधाविषयेऽपि तदभावापत्तेः। किं च "कलापभूषणं सेवे नीलकण्ठं गुहाश्रयम्' इत्यादौ प्रकृताप्रकृतोभयपरे यत्र प्रकृतशङ्करपक्षे चन्द्रमसः प्रसिद्धतरम्, अप्रकृतबर्हिणपक्षे तु बर्हे प्रसिद्धतरं कलापपदं तत्र प्रसिद्धिप्राचुर्येणा-प्रकृतार्थप्रतीतेरेव प्राथमिकत्वेनाप्रकृते अभिधाप्रकृते व्यक्तिरिति वैपरीत्यापत्तिः। प्रकरणम् उल्लङ्घ्यापि प्रसिद्धपदार्थस्यैव[3] प्रथमस्मृतेः। अत एव–द्वयार्थमप्रसिद्धेऽर्थे प्रयुक्तं

---

१. M. तत्प्रतिपादकत्वेऽपि तत्र न शक्तिग्रहा°

२. Pr. om. from विवक्षणे to अर्थान्तरप्रतिपादनव्यवधानराहित्यरूप

३. M. प्रसिद्धतरार्थस्यैव for प्रसिद्धपदार्थस्यैव

निहतार्थकमित्युक्तलक्षणस्य निहतार्थस्य काव्यदोषत्वम् अभ्युपगम्यते। प्रसिद्धतराप्रकृतार्थ-प्रतीत्या प्रकृतार्थप्रतीतिव्यवधानात्। न च निहतार्थस्य दोषत्वात्। तत्प्रयोगोऽर्थद्वयविवक्षा-स्थलेऽपि काव्येषु न संभवतीति वाच्यम्। श्लेषयमकादिषु वृद्धैः निर्दोषत्वाभिधानात्[१] देवोऽन्धकक्षयकरोबर्हिपत्रप्रियोऽवतात् अन्धकासुरस्य क्षयं नाशं करोतीत्यन्धकक्षयकरः। बर्ही शिखीपत्रं वाहनं यस्य स बर्हिपत्रो गुहः, स प्रियो यस्य स तथा तादृशो देवः शङ्करोऽवतात्[२] अन्धकानां क्षत्रियप्रभेदानां क्षयं गृहं करोतीति स तथा बर्हिणः शिखिनः पत्रं पिञ्छं प्रियं यस्य स तथा तादृशो देवः कृष्णः अवतादित्यत्र शङ्करपक्षे निहतार्थस्य बर्हिपत्रपदस्य कृष्णपक्षे निहतार्थस्यान्धकक्षयपदस्य प्रयोगदर्शनाच्च। तस्मात् शब्दस्यार्थप्रतिपादनोपयोगितत्प्रत्यासत्तिरूपधर्मभेद एव। वृत्तिप्रयोजको[३] न तु तद्भेदाभावे प्रतिपादनगतसाक्षात्वव्यवहितत्वभेदः शक्तिशक्यसंबन्धरूपप्रतिपाद्य प्रत्यासत्तिभेदेनैवा-भिधालक्षणयोः भेददर्शनात्। तद्भेदाभावे च प्रसिद्धाप्रसिद्धगोचरशब्दश्लेषस्थले लक्षितलक्षणा-स्थले व्यङ्ग्याव्यङ्ग्यस्थले चार्थद्वयप्रतीत्योः साक्षात्त्वव्यवहितत्वभेदे सत्यपि अभिधालक्षणा-वृत्त्यतिरिक्तवृत्त्यदर्शनाच्च इत्यप्रयोजकस्याव्यवस्थापादकस्य[४] च साक्षात्वविशेषणस्यायोगात् तद्विषयशक्तिग्रहमपेक्ष्य, तत्प्रतिपादकत्वमेव अभिधेत्यप्रकृतार्थेऽपि अभिधाव्यापारो दुर्वारः। तस्मात् प्रकृताप्रकृतोभयपरे [५]प्रकृतोभयपर इवाभिधैव वृत्तिः। तदुपस्थितेषु च पदार्थेषु आकाङ्क्षादिसहकारिवशादुभयविधवाक्यार्थप्रत्यय इत्यप्रस्तुतविषये न पदार्थ प्रतीतये व्यञ्जना, नापि वाक्यार्थप्रतीतये व्यञ्जना उपगन्तव्या। यत्तु प्राचामप्रस्तुते शब्दशक्तिमूल व्यञ्जनावृत्त्यभिधानं तदप्रस्तुतार्थप्रतीतिमूलके यथोदयमारूढः' इत्यादि विशेषणविशिष्टः पृथिवीपतिः स्वल्पैः ग्राह्यधनैः लोकस्य हृदयं रञ्जयति। एवं तथाविधश्चन्द्रमामृदुलैः किरणैः इत्यादिरूपेण प्रतीयमाने उपमाद्यर्थालङ्कारे व्यञ्जनावश्यंभावदृढीकरणाभिप्रायेण। न तु तत्रापि व[८]स्तुतो व्यञ्जनास्तीत्यभिप्रायेण—

> **आच्छादितायतदिगम्बरमुच्चकैः**
> **गामाक्रम्य च स्थितमुदग्रविशालश्रृङ्गम् ।**
> **मूर्ध्निस्ख[९]लत्तुहि न दीधितिकोटिमेनम्**
> **उद्वीक्ष्य को भुवि न विस्मयते गिरीशम् ॥**

---

१. M. ० आपादितत्व for अभिधानात्
२. M. add तथा before अन्धकानां
३. M. add भेद before °प्रयोजको
४. Pr. °अव्यवस्थापकस्य for अव्यवस्थापादकस्य
५. M. adds अपि before प्रकृतो
६. M. प्रस्तुता° for प्रकृतो°
७. M. om. व्यञ्जना
८. M. अप्रकृता for वस्तुतो
९. M. स्फुरन्तु for स्खलतु

इत्यादिनां शब्दशक्तिमूलोपमालङ्कारध्वनेरेव उदाहरणत्वेन तैरपि लिखितत्वात्– 'उपोढ़रागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् इति श्लेषापादितविशेषण-साधारण्यनिमित्तक समासोक्त्यलंकारोदाहरणे रागादिशब्दानाम् अप्रस्तुतेऽपि अभिधावृत्तेरेव श्लेषव्यवहारेण स्फुटीकरणाच्च। न च तत्र स्वतोऽप्रस्तुतयोरपि कामिनोः प्रस्तुते शशिन्यवच्छेदकत्वेनान्वयात् न तत्र तयोः सर्वथैव प्रकरणसंभव इति वाच्यम्। विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिरिति लक्षणानुरोधेनाप्रस्तुतप्रतिपत्तेः विशेषणसाम्याधीनत्वेनाप्रस्तुतस्य प्रकरणसंबन्धावगमात् प्रागेव तद्विशेषणेषु अभिधाया-वाच्यत्वात् प्रस्तुत उपमानत्वादिना[१] यथाकथांचिद्द्वाविप्रकरणसंबन्धस्यात्रापि संभवाच्च सर्वथा प्रस्तुतासंबन्धात् अप्रस्तुतस्य क्वापि कविविवक्षागोचरत्वाभावात्।

ननु एवं शब्दशक्तिमूलालंकराध्वनेः 'आच्छादितायतदिगम्बरम्' इत्युदाहरण-सत्त्वेऽपि तन्मूलो वस्तुध्वनिः लुप्येत। निरलंकारे अप्रस्तुतार्थ एव वस्तुध्वनेः उदाहरणीयत्वात्। तत्र च त्वयाभिधाङ्गीकारादिति चेन्न। यत्राप्रस्तुतेऽर्थे अभिधयेव प्रतिपद्यमाने तन्मूलमनभिधेयं वस्तु प्रतीयते। तत्र तदङ्गीकारादिति। यथा–

शनिरशनिश्च[२] तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम् ॥

अत्र हि अशनिशब्देन प्रस्तुतात् वज्रादन्यस्मिन् समभिव्याहृतशनिरूपेऽप्यर्थे अभिधयैव प्रतिपद्यमाने विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत इत्युपश्लोक्यस्य प्रभावातिशयः प्रतीयते। इत्थमेव च प्राचीनैरपि शब्दशक्तिमूलो वस्तुध्वनिः उदाहृतः।

ननु एवं प्रस्तुतार्थपर्यालोचनलभ्ययोरेव वस्त्वलंकारयोः व्यक्त्युपगमे तत्रार्थशक्ति-मूलैव व्यक्तिर्भवेदिति पृथगर्थशक्तिमूलध्वनेः शब्दशक्तिमूलोध्वनिः न स्यादिति चेन्नैवं, तथात्वेऽपि प्रस्तुताप्रस्तुतोभयसाधारणशब्दसापेक्षतया प्रस्तुतमात्रापरपर्यायिशब्दान्तर परिवृत्त्यसहिष्णुत्वेन च। ततः तस्य पृथक्त्वव्यवस्थितेरेव[३] अप्रस्तुतशक्ये व्यक्त्यनुपगमे संभाविताः क्षुद्रोपद्रवाः निरसनीया इत्याहुः। अत्र ब्रूमः यत्तूक्तम् 'असावुदय मारूढ़' इत्यादौ प्राकरणिकार्थे प्रकरणवदप्राकरणिकार्थेऽपि नानार्थपदवाच्यैकार्थसंबन्ध्यर्थान्तरगृहीत-संकेतकनानार्थशब्दसमभिव्याहारलक्षणशब्दान्तरसन्निधिरभिधानियामकोऽस्तीत्य-प्राकरणिकार्थस्मृतिरपि अभिधयैव स्यादिति तदयुक्तंनियतार्थपदसमभिव्याहर एव शब्दान्तरसन्निधिर्न तूक्तरूप इत्युक्ततया शब्दान्तरसन्निधेरेव तत्राभावात्। अस्तु वा तादृशनानार्थशब्दसमभिव्याहर[४]लक्षणः शब्दान्तरसन्निधिः। तथापि उक्तस्य शब्दान्तरसन्निधेः प्राकरणिकार्थद्वयसाधारणत्वेन अप्राकरणिकार्थे अभिधानियमनहेतुत्वासंभवेनासंजात-

---

१. M. उपमानत्वाधीनस्य for उपमानत्वादिना

२. M. °शनिरपि for °शनिश्च

३. Pr. adds °एवमन्येऽपि

४. M. °व्यवहारे एव for °व्याहार लक्षणः

प्रतिपक्षेण प्रकरणेन प्रकृतार्थ एवाभिधाया नियमनात् नाभिधया अर्थान्तरस्मृतिसंभवः। न च एवमपि उक्तस्थले अर्थान्तरप्रतीतेरनुभवसिद्धत्वेन अर्थद्वयानुकूलानेकसंघटनात्मकस्य शब्दान्तरसन्निधेरेव तत्र प्रयोजकत्वमास्थेयम् इत्युक्तमिति वाच्यम्। सत्यन्तस्य व्यञ्जनासहकारितयैव तत प्रयोजनत्वं युक्तं न तु अभिधासहकारितया। तस्याः प्रकृतार्थ एव प्रकरणेन श्रृंखलितत्[१]वात्।

ननु एवमपि 'अन्धकद्विरदध्वं सीदेयात्पञ्चाननःश्रियम्' इत्यादौ यत्र द्विरदादिपदप्रतीतगजविरोधादिरूपमप्रकृतार्थेऽपि अभिधानियामकमस्ति। तत्र का गतिरिति चेत्, तत्रापि प्रकरणस्य नियामकान्तरापेक्षया बलवत्त्वेन तद्विरोधे सति उक्तनियामकान्तरस्यापि अभिधानियमनहेतुत्वासंभवात्। अत एव 'यमलार्जुनवृक्षभङ्गकरणे कृष्णार्जुनालोकनजात विस्मयात्' इत्यत्र प्रसिद्धिप्राचुर्यसाहचर्ययोः पार्थ स्मृतिप्रयोजकयोः सत्त्वेऽपि प्रकरणात् वृक्षविशेषस्मृतिरेव जायते। न च प्रकरणविशेषस्य स्मृतिनियामकत्वे व्यञ्जनायां वा कथं पदार्थान्तरस्मृतिः स्यादिति वाच्यम्। प्रकरणस्याभिधामात्रनियमनहेतुत्वेन प्रकारान्तरेण तत्स्मृतौ बाधकाभावात्। स च प्रकरणस्य अभिधानियामकत्वकल्पनं नादृष्टार्थं। किं तु नानार्थकशब्दस्थले अर्थविशेषस्मृति व्यवस्थार्थम्। तत् यदि तत्रापि व्यञ्जनया अर्थान्तरस्मरणं तदा कृतं तस्य नियामकत्वकल्पनयेति वाच्यम्। एकार्थपरनानार्थ-स्थले 'सैन्धवमानय' इत्यादावेव अर्थान्तरस्मृतिप्रतिबन्धार्थत्वेन तत्कल्पनस्यार्थवत्त्वात्। तत्र नानार्थस्थलत्वावच्छेदेन सामान्यतः अभिधानियामकत्वेन क्लृप्तस्य प्रकरणस्य अनेकार्थपरनानार्थ स्थलेऽपि अभिधा नियामकत्वे सिद्धे अनुभूयमानस्यार्थान्तरप्रत्ययस्य व्यञ्जनामन्तरेणानिर्वाहात् तत्कल्पनावश्यंभावात्। एतेन यदप्युक्तं शब्दान्तरसान्निध्यादेरति विशेषस्मृतिनियामकत्वानङ्गीकारे 'सैन्धवमानय' इत्येकार्थपरनानार्थस्थले व्यञ्जनयापि नार्थान्तरप्रतीतिः। 'असावुदयमरूढ़' इत्या[२]द्यनेकार्थपरनानार्थस्थले तु व्यञ्जनया अर्थान्तर-प्रतीतिः इति व्यवस्था न स्यात्। अविशेषात्। ततश्च शब्दान्तरसांनिध्यादेरभावात् एकार्थपरस्थलेनार्थन्तरप्रतीतिः। अनेकार्थपरस्थले तु तत्सद्भावादर्थान्तरप्रतीतिः इति तेषां व्यञ्जनासहकारित्वं भवताप्यास्थेयम्। तत् वरम्। तत्रापि तेषामभिधानियामकत्वकल्पनमेवेति तदपि परास्तम्। एकार्थपरनानार्थस्थले नानार्थस्थलत्वावच्छेदेन प्रकरणस्य अभिधानियाम-कत्वेन कलृप्ततया अनेकपरनानार्थस्थलेऽपि प्रकरणे नाभिधानियमनावश्यंभावात् शब्दान्तरसंनिध्यादेर्व्यञ्जनासहकारित्वकल्पनस्याप्राक[३]रणिकत्वात्। एवं च अश्लीलस्थलेऽपि व्यञ्जनयैव अश्लीलार्थप्रतीतिसंभवे प्रकरणस्याभिधानियामकत्वसंकोचकल्पनम् अयुक्तम्। यदप्युक्तम्-तद्विषयशक्तिग्रहमपेक्ष्य तत् प्रतिपादनम् अभिधा।' साच अप्रकृतार्थप्रतिपादनेऽपि

---

१. Pr. श्रृङ्खलितत्वम्

२. Pr. इत्यनेकरप° for इत्याद्यनेकार्थपर°

३. Pr. °अप्रामाणिकत्वात् for अप्राकरणिकत्वात्

अस्त्यैवेति, तदपि न तद्विषयशक्तिग्रहस्य तत्प्रतिपादने किं साक्षादपेक्षात्र विवक्षिता। किं वा परंपरया आहोस्वित्? साक्षात्परंपरौदासीन्येनापेक्षामात्रम्। नाद्यः, तद्विषयकशक्तिग्रहस्या-प्रकृतार्थप्रतिपादने साक्षादपेक्षाभावात्। न च तत्र तद्विषयकशक्तेः[१] अनपेक्षायां अगृहीतशक्तिकस्य चार्थान्तरस्मृतिप्रसक्त्यभावेन प्रकरणस्य तत्र नियामकत्वाप्रसक्त्या व्यञ्जनानुन्मेषात्। तस्मात् तद्विषयकशक्तिग्रहस्य प्रकरणनियामकत्वप्रयोजकत्वेऽपि तत्प्रतिपादने साक्षादपेक्षा नास्त्यैव। नापि द्वितीयः। घटादिपदस्य घटाद्यर्थप्रतिपादने तद्विषयकशक्तिग्रहस्य साक्षादेवापेक्षितत्वेनाभिधा न स्यात्। नापि तृतीयः। 'छत्रिणो गच्छन्ती'त्यत्र लक्षणया च्छत्र्यच्छत्रिप्रतिपादनेऽपि अभिधैव स्यात्। न च तद्विषयशक्ति-ग्रहमपेक्ष्य शक्यतावच्छेदकप्रकारेण तत्प्रतिपादनम् अभिधा। 'छत्रिणो गच्छन्ति' इत्यत्र च उभयसाधारणेन एकसार्थगन्तृत्वेनैव लक्षणया छत्रिप्रतीतिः। न तु छत्रित्वेनैवेति वाच्यम्। तत्रापि छत्रित्वेनैव छत्रिप्रतीतेः। यदि च एकसार्थगन्तृत्वेनैव तत्प्रतीतिः इत्याश्रीयते, तथापि अवच्छेदकत्वप्रकारकत्वयोः बहुपदार्थघटितत्वेन शक्यतावच्छेदकप्रकारेणेति विशेषणा-पेक्षया साक्षात्त्वविशेषणस्यैव लघुत्वात्। यदि[२] 'छत्रिणो गच्छन्ति' इत्यत्र अभिधया छत्रिप्रतीतिः, लक्षणया त्वच्छत्रि[३] प्रतीतिः अजहल्लक्षणा तु नास्त्यैवेति मतम्। तदानीमपि 'सैन्धवमानय' इत्याद्येकार्थपरनानार्थ[४]स्थले लाघवेन नानार्थपदतावच्छेदेनैव प्रकरणादेः प्रकृतार्थे[५] अभिधामात्र[६]नियमनप्रयोजकत्वकल्पनात्। अप्रकृतार्थे व्यञ्जनाया एव अवश्यं वाच्यत्वेन व्यञ्जनाप्युदासार्थमेव। तद्विषयशक्तिग्रहं साक्षादपेक्ष्य तत्प्रतिपादनमभिधा इत्यवश्यवाच्यत्वात् तद्विषपशक्तिग्रहस्य साक्षादपेक्षितत्वं च[७] तदर्थस्मृत्यनुकूलसिद्ध्यर्थम् अनपेक्ष्यत्वे सति तदर्थस्मृत्यर्थमपेक्ष्यत्वं। ततश्च[८] 'च्छत्रिणो गच्छन्ती'त्यत्र लक्षणया छत्र्यच्छत्रिस्मृत्यनुकूलच्छत्रिमात्रस्मृतिसिद्ध्यर्थमेव। तद्विषयक[९]शक्तिग्रहस्यापेक्षितत्वात् नाभिधा। अनेकार्थपदनानार्थस्थलेऽपि अप्रकृतार्थविषयकशक्तिग्रहस्य अप्रकृतार्थस्मृति-प्रसंजनद्वारा प्रकृतार्थप्रकरणेन अभिधानियमन एवोपयोगित्वेन, तदर्थस्मृतिहेतुव्यञ्जनोन्मेषानु-कूलाभिधानियमनसिद्ध्यर्थमेवापेक्ष्यतया न साक्षादपेक्ष्यत्वमिति न तत्रापि अभिधावकाशः। एवं च साक्षात्त्वविशेषणेऽपि[१०] 'यो गङ्गां समदीधरत्' इत्यत्र वैकुण्ठपक्षे अगंगो वर्धनं गां

---

१. M. °विषयशक्तेः for °विषयकशक्तेः

२. M. adds च before छत्रिणो°

३. M. adds मात्र before प्रतीतिः

४. M. adds °पद before °स्थले

५. M. प्रकृताद्यर्थे for प्रकृतार्थे

६. M. om. °मात्र°

७. M. तु for च

८. M. तथा च for ततश्च

९. M. तद्विषयशक्ति° for तद्विषयकशक्ति°

१०. M. adds स before 'यो गङ्गां°

भूमिमिति पदभङ्गश्लेशेन गोपदस्य भूमौ प्रसिद्धिप्राचुर्याभावेन विलम्बेनार्थप्रतीतावपि नाभिधाभावापत्तिः'[1]। तत्र तद्विषयकशक्तिग्रहस्य तदर्थस्मृत्यर्थमेव अपेक्षितत्वात् तथा प्रकृताप्रकृतोभयपरेऽपि अप्रकृते प्रसिद्धप्राचुर्यात् झटिति अर्थप्रतीतावपि प्रकृतार्थेन व्यञ्जनापत्तिः। तत्रापि तद्विषयकशक्तिग्रहस्य तदर्थस्मृत्यर्थमेवापेक्षित्वात्। वस्तुतस्तु प्रकृतार्थे प्रसिद्धिप्राचुर्यविधुरस्य पदस्य प्रयोगो निहतार्थत्वदोषापत्त्या काव्येषु न युक्त एव श्लेषयमकादिषु निहतार्थत्वस्य वृद्धैः निर्दोषत्वापादनं च अप्रकृतार्थे प्रसिद्धि विधुरप्रयोग एव। अत एव प्रकृतार्थे प्रसिद्धि विधुरप्रयोगयमकादिष्वपि क्लिष्टत्वव्यवहारो[2] लोकसिद्धः। यदप्युक्तं प्राचामप्रस्तुते शब्दशक्तिमूलव्यञ्जनाख्य व्यापाराभिधानमप्रस्तुतार्थप्रतीतिमूलकोप-माद्यलंकारे व्यञ्जनाव्यापारावश्यं भावपरम्। न तु अप्रस्तुतार्थेऽपि व्यञ्जानास्तित्वपरमिति। तदपि न युक्तम्।

**भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमश्शरीरसादम् ।**
**मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ।।**

इत्यत्र विषयशब्दव्यङ्ग्यं गरलं जलदस्य भुजगत्वरूपणरूपस्य वाच्यस्य सिद्धिकृदिति काव्यप्रकाशिकायां कण्ठत एव गरलस्य विषशब्दव्यङ्ग्यत्वाभिधानेन प्राचामप्रस्तुतार्थे व्यञ्जनास्तित्वाभिप्रायनिरासासंभवात्। समासोक्त्यादिस्थले श्लेषव्यवहारोऽपि रागादिशब्दानां नानार्थत्वाभिप्रायेण नत्वप्रकृतेऽपि अभिधास्तित्वाभिप्रायेण।

ननु एवं-'शनिरशनिश्चतमुच्चैर्निहनित कुप्यसि नरेन्द्र यस्मै त्वम्' इत्यत्राशनिशब्देन प्रस्तुतात् वज्रादन्यस्य समभिव्याहृतशनिविरुद्धस्यार्थस्य व्यञ्जनया प्रतीतेः शब्दशक्तिमूल-वस्तुध्वनिरिति वक्तुं शक्यतया विरुद्धावपि शनितद्विरुद्धौ द्वावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत इत्युपश्लोक्यस्यप्रभावातिशयप्रतीतेः। अत्र शब्दशक्तिमूलवस्तुध्वनिरिति प्राचां तावत्पर्यन्तं धावनमयुक्तं स्यादिति चेन्न। विरुद्धावपि त्वदनुवर्त्तनार्थमेकं कार्यं कुरुतः इत्यस्यापि वस्तुनोः अर्थपर्यालोचनालभ्यत्वेऽपि नार्थशक्तिमूलध्वनिविषयता। किं तु प्रकृताप्रकृतोभयसाधारणशब्दसापेक्षतया शब्दशक्तिमूलध्वनिविषयतैवेत्यभिप्रायेण प्राचां तथोक्तिरिति संक्षेपः। न्यायमतानुसारिणस्तु शक्तिग्रहजनितसंस्कारोद्बोधवशेना-प्राकरणिकार्थस्मृतेरपि प्रथमम् अनुभूयमानत्वेन प्रकरणादीनां नाभिधानियामकत्वम्। किं तु लिङ्गविधया तेषां तात्पर्यग्राहकत्वमात्रं, ततश्चाप्राकरणिकाद्यर्थानां तात्पर्यग्राहकप्रकरणाद्य-भावे अन्वयबोधाविषयत्वेऽपि स्मृतिः अनिवार्येत्याहुः।

**एवं व्यञ्जनाया अङ्गीकार्यतां प्रसाध्यतां लक्षयति—**
**वाच्यलक्ष्यविभिन्नार्थधीकृद्व्यापृतिरञ्जनम् ।।५२।।**

---

१. Pr. om. from नाभिधाभावापत्तिः to अर्थप्रतीतावपि
२. Pr. दुष्टत्व for क्लिष्टत्व°

इदं च शब्दार्थोभयनिष्ठव्यञ्जनासाधारणं लक्षणम्। तादृशी शब्दव्यापृतिः शब्दव्यञ्जनायाः अर्थान्तरधीहेतुरर्थव्यापृतिरर्थव्यञ्जनायाः अर्थस्य शब्दवत् वाच्यलक्ष्यधीहेतुत्वाभावेन अर्थान्तरे वाच्यलक्ष्यविभिन्नत्वविशेषणाभावेऽपि अदोषादिति ध्येयम्।

एवमभिधालक्षणाविलक्षणां व्यञ्जनां निरूप्य यल्लक्षणार्थमियं निरूपिता तं व्यञ्जकं शब्दं लक्षयति।

**व्यञ्जनेनार्थधीहेतुः शब्दो व्यञ्जकयिष्यते ।**
**सामोदसुमनोजातजुष्टो जयति माधवः ।।५३।।**

अत्र शब्दपदं काकाक्षिन्यायेन लक्षणे लक्ष्ये च सम्बध्यते। तेन लक्ष्यमात्रान्वये व्यञ्जकेऽर्थे अतिव्याप्तिः। लक्षणमात्रान्वये व्यञ्जकमात्रस्य लक्ष्यत्वापत्त्या व्यञ्जकेऽर्थे [१]अतिव्याप्तिरिति निरस्तम्। अत्र व्यञ्जनयार्थधीहेतुत्वं फलोपधानं विवक्षितम्। अतः न वाचके अतिव्याप्तिः। यथा—

सामोदैरानन्दसहितैः सुमनोजातैर्देवसमूहैः जुष्टः से[२]व्यो माधवो मुकुन्दो जयति इत्यत्र

ससौरभपुष्पकदम्बभव्यो वसन्त इत्यर्थान्तराणां व्यञ्जनया प्रतीतिहेतवः सामोदादिशब्दा व्यञ्जकाः।

यथा वा—

**भद्रात्मनो दुरधिरोहतनोर्विशालवंशोन्नतेः कृतशिलीमुखसंग्रहस्य ।**
**यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोऽभूत् ।।**

अत्र भद्रात्मनः शोभनाकृतेः दुरधिरोहतनोः दुर्धर्षवपुषः, विशालवंशोन्नतेः बहुलसंतानमहत्ताशालिनः कृतशिलीमुखसंग्रहस्य संगृहीतशरस्य अनुपप्लवगतेः अनुपहतज्ञानस्य परवारणस्य शत्रुनिवारकस्य यस्य राज्ञः करो हस्तः सततं दानाम्बुना एकेन प्रतिपादनार्थम् उपात्तजलसेचनेन सुभगोऽभूत् इत्यभिधयाप्रतिपाद्यमाने [३]मत्तमृगजातिद्वयातिरिक्तात्युत्कृष्टभद्रजातिप्रभवाकृतेः अत्युन्नततया दु[४]रधिरोहतनोः विशालपृष्टास्थिसमुच्छ्रायस्य कृतभ्रमरसंग्रहस्य निष्प्रत्यूहगमनस्य यस्य परस्योत्कृष्टस्य गजस्य शुण्डादण्डो मदजलसेकसुभगोऽभूत् इत्यप्रकृतार्थः शब्दशक्तिमूलव्यञ्जनया भद्रादिपदैः प्रतिपाद्यते।

ननु अत्र अप्रकृतार्थेषु शब्दशक्तिमूलया व्यञ्जनया प्रतिपादितेषु प्रकृतार्थस्य अप्रकृतार्थेन प्रतीयमानमौपम्यं किं शब्दशक्तिमूलध्वनेरेव विषयः ? किं वार्थशक्तिमूलध्वनेः इत्याकाङ्क्षायामाह—

---

१. Pr. om. अति before व्याप्तिरिति
२. M. सेव्यमानो for सेव्यो
३. M. मद° for मत्त°
४. Pr. दुरारोह° for दुरधिरोह०

**अत्रार्थप्रत्ययद्वारेणोपमादेस्तु या मतिः ।**
**तस्यां च शब्दशक्त्युत्था व्यञ्जनैषैव कारणम् ॥५४॥**

अत्र शब्दशक्तिमूलव्यञ्जनास्थले प्रकृताप्रकृतार्थप्रतीतिद्वारा[१] प्रकृताप्रकृतयोः उपमालंकारस्य 'शनिरशनिश्च तमुच्चैः' इत्यत्र विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुर्वाते[२] आहूते प्रभावातिशय इत्येवंभूतस्य वस्तुनश्च या प्रतीतिः तस्यामपि प्रतीतौ[३] शब्दशक्तिमूला व्ञ्जनैवहेतुः।

ननु तत्रोपमादेः प्रस्तुताप्रस्तुतार्थपर्यालोचनालभ्यत्वात् अर्थशक्तिमूल ध्वनिविषयतैव युक्तेति चेत् न। तथात्वेऽपि प्रकृताप्रकृतोभयसाधारणशब्दसापेक्षतया प्रकृतमात्रपरपर्यायशब्दासहिष्णुत्वेन शब्दशक्तिमूलध्वनिविषयताया एव तत्रौचित्यादिति ध्येयम्।

ननु एवमुक्तरीत्या उपमादौ व्यज्यमाने प्रकृताप्रकृतार्थयोः किमजागलस्तनायमानतैव न इत्याह—

**यतोऽर्थधियमुत्पाद्य शब्दोऽर्थान्तरबुद्धिकृत् ।**
**ततोऽर्थो व्यञ्जकःशब्द सहकारितया मतः ॥५५॥**

अत्र यतोऽर्थप्रतीतिमादायैव शब्द उपमादिप्रतीति जनयति, ततोऽर्थोपि शब्दसहकारितया व्यञ्जको मतः। न चैवम् अर्थस्यापि व्यञ्जकत्वे तत्र शब्दशक्तिमूलव्यञ्जनैव हेतुरिति कथमुक्तमिति वाच्यम्। शब्दस्यैव तत्र 'प्राधान्यात्' 'व्यपदेशा भवन्ती' ति न्यायेन तथोक्तमिति ध्येयम्।

इति दन्तिद्योतिदिवाप्रदीपाङ्कविश्वामित्रसाग्निचित्यविश्वजिदतिरात्रयाजिसत्यमङ्गल-रत्नखेट[४] श्रीनिवासदीक्षिततनयस्य कामाक्षीगर्भसंभवस्य श्रीमदर्धनारीश्वरदीक्षितगुरुचरण-सहजतालब्धविद्यावैशद्यस्य श्रीराजचूडामणिदीक्षितस्य कृतिषु काव्यदर्पणे द्वितीय उल्लासः।

---

१. Pr. om. प्रकृता before °प्रकृतार्थप्रतीति°
२. Pr. कुरुतो for कुर्वाते
३. M. om. प्रतीतौ
४. M. adds श्री before दन्तिद्योति°

# तृतीयोल्लासः

अवसरलक्षणां सङ्गतिं [१]प्रदर्शयन् उल्लासप्रतिपाद्यमाह—

**वाच्यलक्ष्यव्यङ्ग्यभेदादर्था ये प्रतिपादिताः ।**
**तेषामिह व्यञ्जकत्वमधुना प्रतिपाद्यते ।।५६।।**

पूर्वत्रोल्लासे वाचकलक्षकव्यञ्जकभेदेन त्रिविधानामपि शब्दानां प्राधान्यात् व्यञ्जकत्वं प्रतिपादितम्। प्रसङ्गात्तु तेषां वाचकादिशब्दानां वाच्यलक्ष्यव्यङ्ग्यभेदेन त्रिविधा अर्थाश्च निरूपिताः। संप्रति अवसरप्राप्तत्वादिह तृतीयोल्लासे त्रिविधानामपि तेषामर्थानां व्यञ्जकत्वं प्रतिपाद्यते। यद्यपि पूर्वत्रैव त्रिविधानामर्थानामपि व्यञ्जकत्वमुक्तम्, तथापि तत्रासंभावनानिरासायाप्राधान्येन दिङ्मात्रं प्रदर्शितम्। इह तु प्राधान्येन सप्रपञ्चमुच्यते। यद्वा सहकारिविशेषप्रदर्शनार्थमयं पुनरारम्भ इति ध्येयम्।

ननु अर्थानामपि व्यञ्जकत्वे सर्वेषामपि सर्वत्र तत्तद्व्यङ्ग्यार्थप्रतीतिः स्यात्। न तु केषांचित् क्वचिदेव ततो [२]नार्थानां व्यञ्जकता इत्यत आह—

**वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः ।**
**प्रस्तावदेशकालादेर्वैशिष्ट्यात् प्रतिभाजुषाम् ।।**
**योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ।।५७।।**

अत्र बोद्धव्यपदमन्तर्भावितणिजन्ततया [३]बोधयितव्यापरं न तु वाच्यपरमतो न पौनरुक्त्यम् काकुर्ध्वनिविकारः। प्रस्तावः प्रकरणम्। अर्थस्य वाच्यलक्ष्यव्यङ्ग्यभेदेन त्रिविधस्य। [४]अत्र वाक्यार्थज्ञानानन्तरं वक्त्रादिवैशिष्ट्यज्ञातवतां सहृदयानां यार्थान्तरधीः तदनुकूलो अर्थस्य व्यापारो व्यक्तिरेव व्यञ्जनैव। [५]अत्रैवकारेण व्याप्त्यादिनिरासः। तत्प्रकारश्चाग्रे वक्ष्यते। न तु [६]अभिधालक्षणयोः निरासः। तयोरर्थे प्रसक्त्यभावात्। एवं च यद्यर्थानां

---

१. Pr. om. 'प्र'
२. Pr. नानार्थानां for नार्थानां
३. Pr. बोधयित्वपरं for बोधयितव्यपरं
४. M. अस्य for अत्र
५. M. अत्रैवकारो for अत्रैवकारेण
६. Pr. अभिधानलक्षणयोः for अभिधालक्षणयोः

व्यञ्जकता नेष्यते। तदा वाक्यार्थप्रतीत्यनन्तरमर्थान्तरधीः न स्यात्। न चैवं सर्वेषां सर्वत्र व्यङ्ग्यप्रतीतिः स्यात् इत्युक्तमिति वाच्यम्। वक्त्रादिवैशिष्ट्यज्ञानं नवनवोन्मेषशालि-प्रज्ञात्मकप्रतिमोत्थापकतया[१] अर्थानां व्यञ्जकत्वे सहकारीत्यभ्युपगमादिति ध्येयम्।

अथ वक्तृवैशिष्ट्यज्ञानस्य व्यञ्जनासहकारितामुदाहरति–

**अस्तं गतोऽद्य सविता पथिक त्वं प्रयास्यसि ।**
**इत्यत्र वक्तृवैशिष्ट्यज्ञानाद्रत्यभिलाषधीः ॥५८॥**

अत्र विदितस्वैरचारवक्तृवैशिष्ट्यज्ञानवतां प्रतीयमानेनार्थेन नायिकाया रत्यभिलाषो व्यज्यते। यथा वा–

**अइपिहुलं जलकुंभं धेत्तूण समागदह्मि सहि तुरिअम् ।**
**समसेअसलिलणीसासणीसहा वीसमामि खणम् ॥**
**(अतिपृथुलं जलकुम्भं गृहीत्वा समागतास्मि सखि त्वरितम् ।**
**श्रमस्वेदसलिलनिःश्वासनिःसहा विश्राम्यामि क्षणम् ॥)**

अत्र अतिपृथुलमिति[२] दुर्वहत्वं, जलकुंभमिति जलपूर्णत्वेन दुर्वहतरत्वं, गृहीत्वेत्यनेन मयैव गृहीतो न त्वन्यया साहायकमाचरितमित्यायासाधिक्य व्यज्यते। त्वरितमिति श्रमाविर्भावे निदानोपन्यासः। इयमुपपतिना नदीतीरे सद्योभुक्तमुक्तायाः कस्याश्चिदुक्तिः। अत्र तादृशवक्तृवैशिष्ट्यज्ञानवतां प्रतीयमानेनार्थेन चौर्यरतिगोपनं[३] व्यज्यते।

बोधयितव्यवैशिष्ट्यज्ञानस्य सहकारितामाह–

**प्रातश्चेन्नाथ को दोषः शान्तोऽसि स्वपिहि क्षणम् ।**
**अत्र बोद्धव्यवैशिष्ट्याद्वक्तृकोपः प्रतीयते ॥५९॥**

इदं हि रात्रावन्यामुपभुज्य प्रातरागतं नायकं प्रति प्रच्छन्नकोपायाः नायिकायाः वचनम्। अत्र तादृशसंबोध्यवैशिष्ट्यज्ञानवतां प्रतीयमानार्थेन नायिकायाः कोपो व्यज्यते। यथा वा–

**उण्णिद्दं दोब्बल्लं चिन्ता अलसत्तणं सणिप्पसि अं ।**
**मह मंदभाइणीए केरं सहि तुहनिअहह परिभवइ ॥**
**(उन्निद्रं दौर्बल्यं चिन्तालसत्वं सनिःश्वसितम् ।**
**मम मंदभागिन्याः कृते सखि त्वामप्यहह परिभवति ॥)**

उन्निद्रमुद्भूतं दौर्बल्यं निःश्वाससहितं चिन्ताजनितमलसत्वं च मन्दभागयायाः मम

---

१. M. प्रतिबोद्धापिततया for प्रतिबोद्धापकतया

२. M. adDso च for अतिपृथु°

३. M. चौर्यरत° for चौर्यरति°

कृते मन्निमित्तं हे सखि त्वामपि परिभवति बाधते अहह खेदे। इयं स्वनायकाभिलाषिणीं दूतीं प्रति नायिकायाः उक्तिः। अत्र प्रसिद्धनायकाभिलाषदूतीरूपबोधयितव्यवैशिष्ट्यज्ञानवतां प्रतीयमानार्थेन दूत्या नायकोपभोगो व्यज्यते। अथ काकुवैशिष्ट्यात् व्यञ्जनामाह–

**सखि श्रुत्वापि मामेवं नानुतापमुपैति सः ।**
**इत्यादौ काकुवैशिष्ट्यज्ञानाद्व्यङ्ग्यार्थधीर्मता ॥६०॥**

इदं नायकसमीपं गत्वा आगतवतीं दूतीं प्रति नायिकावचनम्। अत्र काकुवैशिष्ट्यज्ञानवतां मामेवमीदृशदशावत्त्वेन इत्यादि पदार्थेनानुतापाभावो न युक्त इति व्यज्यते। यथा वा–

**तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां**
**वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।**
**विराटस्यावासे स्थितमनुचितारम्भनिभूतं**
**गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥**

इदं संरब्धस्य भीमसेनस्य वचनम्। नृपसदसि न तु यत्र क्वापि विविक्तस्थले पाञ्चालराजतनयां[1] नत्वज्ञातकुलगोत्रां तथाभूतां केशग्रहणादिपरिभववतीं दृष्ट्वापीत्यध्याहारः वल्कलधरैः अस्माभिः इति शेषः। व्याधैः किरातैः स सुचिरं, न तु कियत्कालं वने उषितं न केवलमेतावन्मात्रमपि तु विराटस्य गृहे पाकाद्यनुचितारम्भेण निभृतमज्ञातं यथा भवति तथा स्थितम्। एवमपि गुरुः युधिष्ठिरः उक्तविधया खिन्नेऽपि इत्यव्याहारः। मयि खेदं खिद्यतेऽनेनेति खेदो मन्युस्तं भजति। कुरुषु दुर्योधनादिषु अद्यापि न भजति इत्यत्र मयीति कुरुष्विति च सप्तम्यन्यं पदद्वयं काकुस्थानं, ततश्च उभयत्रापि प्रश्नमभिव्यज्य काकौ विश्रान्तायां तद्वैशिष्ट्यज्ञानवतः सहृदयस्य खिन्ने कोपस्यायोग्यत्वात् खिन्न इति पदार्थेन मयि न कोपो युक्त इत्यमर्थः, तथापकारिषु कोपस्योचितत्वात् अनेकापराधकर्तृत्वाभिप्रायककुरुष्वितिपदार्थेन कुरुषु कोपो युक्त इत्ययमर्थश्च व्यज्यते।

ननु अस्य कुपितोत्थितनायकवक्तृकत्वात् विपर्ययपर्यवसायित्वमवश्यं वाच्यम्। तच्च काकुव्यङ्ग्येन प्रश्नरूपार्थेन विना न संभवतीति काकुव्यङ्ग्यस्य वाच्यसिद्ध्यङ्गत्वाद्गुणीभूतव्यङ्ग्यतैवात्रेति न[2] प्रधानध्वनिप्रस्तावे अस्योदाहरणत्वं युक्तमिति चेत् न। अलङ्घनीयशासनस्य गुरो कोपाविषयत्वेनात्र विपर्ययपर्यवसानाभावात्। अत एवात्र न्यूनपदताख्यं दोषं वक्ष्यति। अन्यथा कोपाविष्टकर्तृकत्वेन न्यूनपदताया दोषता न स्यात्। अतः अत्र काकोः प्रश्नमात्र एव विश्रान्तिः इत्याहुः। अत्र काकोरेव साक्षात् व्यञ्जकत्वाभावात् न काक्काक्षिप्तत्वरूपं गुणीभूतव्यङ्ग्यत्वमपीति ध्येयम्।

---

१. M. °राजसतनयां for राजतनयां
२. M. om. न

वाक्यवैशिष्ट्यादाह—

**स्वप्नेऽपि नास्मरः प्राङ्मां भाग्येनाद्यागतोऽसि मे ।**
**इत्यत्र वाक्यवैशिष्ट्यज्ञानाद्व्यङ्ग्यार्थधीर्मता ॥६१॥**

इदं प्रणयकोपेन सपत्न्यावधूतं स्वसमीपमागतं नायकं प्रति नायिकाया वचनम्। प्राक् तत्प्रसाददशायाम् अद्य तत्कोपदशायाम्। अत्र प्रागद्येति वाक्यवैशिष्ट्यज्ञानात् सततानुकूलामपि मां परित्यज्यता भवता सद्यः फलमनुभूतम् इत्युपहासः प्रकृतवाक्यार्थेन व्यज्यते। यथा वा—

**तइआ मह गण्डत्थलणिमि अं दिट्ठिं ण णेसि अण्णत्तो ।**
**एण्हिं सच्चेअ अहं ते अ कवाला ण सा दिट्ठी ॥**
**तदा मम गण्डस्थलनिमज्ञां दृष्टिं नानैषीरन्यतः ।**
**इदानीं सैवाहं तौ च कपोलौ न सा दृष्टिः ॥**

इयं प्रत्यक्षदृष्टस्वकपोलप्रतिबिम्बितसखीदर्शनौत्सुक्यं नायकं प्रति नायिकोक्तिः। तदा सख्या मम गण्डस्थले प्रतिबिम्बितत्वदशायां मदीयकपोलतलासक्तां दृशमन्यत्र[2] नानीतवानसि इदानीं सखीप्रतिबिंबाभावदशायामहं सैव कपोलौ च तावेव तव दृष्टिस्तु न सा पूर्ववत्कपोलतलासक्ता न भवति इत्यत्र तदेदानीमिति पदद्वयात्मकवाक्यवैशिष्ट्यज्ञानात् प्रकृतवाक्यार्थेन मत्सखीं कपोलतलप्रतिबिम्बितां पश्यतः ते दृष्टिरन्यादृशी अनुरागशालिनी जाता चलितायां च तस्यामन्यादृशी ताटस्थ्यशालिनी जातेत्याहूते (अहो ते ?) प्रच्छन्नकामुकतेति व्यज्यते। अथ वाच्यवैशिष्ट्यात् व्यंग्यप्रतीतिं दर्शयति—

**शून्या प्रपेयमेकाकिन्यस्मि पान्थास्यतां क्षणम् ।**
**इत्यत्र वाच्यवैशिष्ट्यात् संभोगेच्छावगम्यते ॥६२॥**

यथा वा—

**उद्देशोऽयं सरसकदलीश्रेणिशोभातिशायी ।**
**कुञ्जोत्कर्षाङ्कुरितरमणीविभ्रमो नर्मदायाः ॥**
**किंचैतस्मिंत्सुरतसुहृदो वान्ति ते तन्वि वाताः ॥**
**येषामग्रे सरति कलिताकाण्डकोपो मनोभूः ॥**

सोऽयं रिंसोर्नायकस्य नायिकां प्रत्युक्तिः। नर्मदाया अयमुद्देशः। उद्दिश्यत इत्युद्देशः। तेन दूरादेवायं प्रदेशो जनैः निर्दिश्यते न तु निकटादिति जनराहित्यं व्यज्यते। सरसरम्भापङ्क्तीनां शोभाभिरतिशायी देशान्तरातिशयनशीलः। तेन उद्दीपकता व्यज्यते।

---

१. Pr. om. इत्यत्र........धीर्मता ॥
२. Pr. दृश्यमं for दृशमं।

कुञ्जानामुत्कर्षेणाधिक्येनाङ्कुरित उद्भूतो रमणीनां विभ्रमः संभोगसंभ्रमो यस्मिन् तथा तेन कुञ्जान्तरेषु रमण्यो रमन्त इत्यतिशयेनोद्दीपकता व्यज्यते। किं चात्र हे तन्वि ते सरतसुहृदः सुरतिजनितश्रमापनयनेन सुहृत्कार्यकारिणः। तेन चिरकालसंभोगसौलभ्यं व्यज्यते। वाता वान्तीत्यत्र वर्तमानापदेशेन प्रारब्धा समाप्तिः प्रतीयते। येषां वातानामग्रे कलितास्थानकोपः, तेनात्मनोः इदं रिरंसातिशयो[1] व्यज्यते। 'मनोभूः सरति गच्छति' इत्यत्रैवंविधवाच्यवैशिष्ट्य-ज्ञानात् अत्र रतार्थं प्रविशेति व्यज्यते।

**अथान्यसन्निधिवैशिष्ट्यात् व्यङ्ग्यं दर्शयति—**

**एकाकिन्येव यास्यामि जलार्थं कथमापगाम् ।**
**इत्यादिषु व्यङ्ग्यबुद्धिर्वैशिष्ट्यादन्यसंनिधेः ॥६३॥**

अत्रोपपतिसंनिधिवैशिष्ट्यज्ञानवतां प्रकृतवाक्यार्थेन नदीतीरं संकेतस्थानमिति व्यज्यते।

यथा वा—

**णोल्लेइअणुल्लमणाअत्ता मं घरभरम्मि सअलम्मि ।**
**खणमोत्तं जइ संझाइ णवर होइ ण व होइ वीसामो ॥**
**(नोदयत्यनार्द्रमनाश्वश्रूर्मां गृहभरे सकले ।**
**क्षणमात्रं यदि सन्ध्यायां केवलं भवति न वा भवति विश्रामः ॥)**

इयं तटस्थं कामुकमुद्दिश्य कस्याश्चित् स्वैरिण्याः तटस्थ्येनोक्तिः। अत्र तटस्थोपपतिसंनिधिवैशिष्ट्यज्ञानवतां निष्करुणा श्वश्रूः सर्वस्मिन् गृहकृत्ये मां नोदयति प्रेरयति तद्विश्रान्तिरेव न भवति। यदि भवति तदा सन्ध्यायामेव केवलं कदाचिद्भवति तत्रापि क्षणमात्रं कदाचित्तु न वा भवतीति वाक्यार्थेन सन्ध्या संकेतकाल इति व्यज्यते।

प्रस्ताववैशिष्ट्यादाह—

**वयस्ये प्रतिवेशिन्याः पतिरद्य समागतः ।**
**अत्र प्रस्ताववैशिष्ट्यज्ञानाद्व्यङ्ग्यार्थनिश्चयः ॥६४॥**

अत्र प्रतिवेशिन्यभिसरणप्रवृत्तिप्रकरणज्ञानवतां प्रकृतवाक्यार्थेन तदभिसरणनिषेधो व्यज्यते। यथा वा—

सुव्वइ समाअमिस्सइ तुज्झ पिओ अज्ज पहरमेत्तेण ।
एमेअ किंति चिट्ठसि तासहि सज्जेहि करणिज्जम् ॥
(श्रूयते समागमिष्यति तव प्रियोऽद्य प्रहरमात्रेण ।
एवमेव किमिति तिष्ठसि तस्मात्सखि सज्जय करणीयम् ॥)

---

१. Pr. om. रिरं°

अत्राप्यभिसरणप्रवृत्तिप्रकरणज्ञानवतां प्रकृतवाक्यार्थेनाभिसरणप्रवृत्तायानिवारणं व्यज्यते।

देशवैशिष्ट्याद[१]ाह–

**सख्यो दूरं गता गन्तुमक्षमाहमिह स्थिता।**
**इत्यत्र देशवैशिष्ट्यज्ञानेन व्यङ्ग्यधीर्मता ॥६५॥**

अत्रेहेति देशवैशिष्ट्यज्ञानवतां विजनोऽयं देशः ततः संकेतयोग्य इति व्यज्यते। यथा वा–

**अन्यत्र यूयं कुसुमापचायं कुरुध्वमत्रास्मि करोमि सख्यः।**
**नाहं विदूरं भ्रमितुं समर्था प्रसीदतायं रचितोऽञ्जलिर्वः ॥**

अत्र अस्मीत्यहमर्थेअव्ययम्। सख्यः निवारिताः। अहमेकैवात्र स्थितेति समाश्वस्तां सखीं प्रति कस्याश्चिदुक्तिरियम्। अत्र वाच्यार्थः साधारणसहचरीमात्रविषयो व्यङ्ग्यस्त्व-साधारणसहकारीविषयः। तथा च देशविशेषवैशिष्ट्यावगमात् प्राधान्येन प्रच्छन्नकामुको निःशङ्कं भुज्यतामिति वा प्रच्छन्नकामुकोऽत्र प्रेषणीय इति वा व्यज्यते।

कालवैशिष्ट्यादाह–

**गृहकृत्यव्यापृताया विश्रमोऽद्येव मे सखि।**
**इत्यादौ कालवैशिष्ट्यज्ञानात् व्यङ्ग्यार्थनिर्णयः ॥६६॥**

अत्राद्येति कालवैशिष्ट्यावगमादयं सायं समय एव। संकेतयोग्यः तत्प्रच्छन्नकामुको झटिति प्रेषणीय इति व्यज्यते।

यथा वा–

**गुरुअणपरवसपिअ किं भणामि तुह मंदभाइणी अअहं।**
**अज्ज पवासं वच्चसि वच्च स अं चे अ मुणासि करणिज्जं ॥**
**(गुरुजनपरवशप्रिय किं भणामि त्वां मन्दभागिनी चाहम्।**
**अद्य प्रवासं व्रजसि व्रज स्वयमेव जानासि करणीयम् ॥)**

अत्र गुरुजनपरवशेति विपरीतलक्षणा। ततश्च गुरुजनपारवश्याभावेऽप्यद्य व्रजसि,[२] आहूते न स्नेहतेति व्यज्यते। 'प्रिये' इत्यनेन ममैव त्वं प्रियो, न तु तवाहं प्रियेति किं भणामीत्युपालम्भाप्रयोजकत्वं, मन्दभागिनीत्येवमुदासीनेऽपि त्वय्यनुरक्ताहमसमीक्ष्य-कारिणीति व्रजसि व्रजेति कोपातिशयः स्वयमेवेति स्वस्य मरणोत्साहश्च व्यज्यते। अत्राद्यपद- प्रतिपाद्य मधुसमयवैशिष्ट्यावगमात् यदि मधुसमये व्रजसि, तदहं क्षणमपि न जीवामीति व्यज्यते।

---

१. M. adDso. ज्ञानात् after °वैशिष्ट्य

२. Pr. गच्छसि for व्रजसि

प्रस्तावदेशकालादेः इत्यादिपदात् चेष्टादेः ग्रहणम्। तत्र चेष्टाया यथा–

**द्वारोपान्तनिरन्तरे मयि तया सौन्दर्यसारश्रिया**
**प्रोल्लास्योरुयुगं परस्परसमासक्तं[1] समासादितम् ।**
**आनीतं पुरतः शिरोंऽशुकमधः क्षिप्ते चले लोचने**
**वाचस्तत्र निवारितं प्रसरणं संकोचिते दोर्लते ॥**

द्वारसमीपे मयि निरन्तरे व्यवधानरहिते सति संनिहित इति यावत् लावण्यसारलक्ष्म्या तयोरुद्वयं विसार्य पश्चान्मिथःश्लिष्टं कृतम्। अनेनोरुभ्यां गाढ़निपीडनं करिष्यमाणं व्यज्यते। यद्वा कदलीसदृशोरुसमाश्लेषेण कदलीनैबिड्यवान् प्रदेशः संकेतस्थानमिति व्यज्यते। शिरः प्रावरणीकृतं वासः पुरत आनीतं शिरोंऽशुकेन मुखं किंचिदावृतमिति यावत्। अत्र चन्द्रसदृशस्य मुखस्यावरणेन चन्द्रास्तमयः संकेतकाल इति व्यज्यते। चले लोचने अधः[2] क्षितौ निक्षिप्ते भूमिमवलोकितवतीति यावत्। अत्र चकोरसदृशयोः नयनयोः अधः क्षेपरूपया चेष्टया चन्द्रस्तमयानन्तरमेव नागन्तव्यं, किं तु नियतिचटुलाः चकोरा यदा निराशाभूमौ प्रतिष्ठिता भवन्ति, तदानीमेवागन्तव्यमिति व्यज्यते। वाचः तच्च पूर्वं निरङ्कुशमपि प्रसरणं निवारितम्। अत्र तदापि जनकलकलोपशमे सति आगन्तव्यमिति व्यज्यते। 'दोर्लते सङ्कोचिते' इत्यनेनागतस्य तवालिङ्गनमेव पारितोषिकं ददामीति व्यज्यते। तथानुभाव- रूपाभिराभिश्चेष्टाभिः प्रच्छन्नकामुकविषयोऽनुरागोऽपि व्यङ्ग्य इति ध्येयम्।

ननु द्वितीयोल्लासे एवार्थानां व्यञ्जकत्वमुदाहृतमिति पुनरिहोदाहरणं पौनरुक्त्यग्रस्तमिति चेत्, न। तत्र सामान्यत उदाहरणेऽपि वक्त्रादिवैशिष्ट्येन विशिष्या-नुदाहरणादाकाङ्क्षाशान्त्यभावेन नैराकाङ्क्ष्यप्रतिपत्तये पुनरिहोदाहरणम्। न च तत्रैव विशिष्याप्युदाहृतमिति वाच्यम्। तत्र शब्दव्यञ्जकत्वस्यैव प्रकृतत्वेन अत्रैव प्राप्तावसरतया अर्थव्यञ्जकत्वस्य सप्रपञ्चमुदाहरणौचित्यादित्युक्तं प्राक् स्मर्तव्यम्।

ननु वक्त्रादिवैशिष्ट्यस्य प्रत्येकं व्यञ्जकत्वेऽपि क्वचित् द्वयोः त्रयाणां वार्थसमाजे द्वित्रादीनामपि संहत्य किं व्यञ्जकत्वमस्ति न वा इत्याकाङ्क्षायां शिष्याणां निराकाङ्क्षप्रतिपत्तये प्राप्तावसरतया तेषां मिथो योगेऽपि संहत्य व्यञ्जकत्वमस्तीत्याह–

**वक्त्रादीनां मिथोयोगेऽप्यर्थव्यञ्जकतेष्यते**
**शेते श्वश्रूरिहात्राहं रात्र्यन्धाद्यैव लोकय ।**
**शय्यायामावयोर्मोहात्त्वं वैदेशिक मा पत**
**वक्तृबोद्धव्यदेशानां वैशिष्ट्याव्द्यङ्ग्यधीरिह ॥६७॥**

---

१. M. °युक्तं for °सक्तं

२. Pr. क्षिप्ते for क्षितौ निक्षिप्ते

अत्र श्वश्रूशय्यासाधारण्येन स्वशय्यायाम् उपदर्शयन्त्या परस्योद्भेदो निवार्यते। अत्र प्रसिद्धातिचारयोः वक्तृबोद्धव्ययोः अत्रेति देशस्य च वैशिष्ट्यावगमात् प्रकृतवाक्यार्थेन मदीयशय्यायाम् आगन्तव्यमिति व्यज्यते। यथा वा–

**दृष्टिं हे प्रतिवेशिनि ! क्षणमिहाप्यस्मद्गृहे दास्यसि**
**प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति ।**
**एकाकिन्यपि यामि सत्वरमितः स्रोतस्तमालाकुलं**
**नीरंध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः ॥**

हे प्रतिवेशिनि समीपगृहमेधिनि अस्मद्गृहेऽपि क्षणमात्रं दृष्टिं कुरु। अस्य शिशोः पिता मम पतिरिति यावत् विरसानि कूपजलानि प्रायेण नियमेन न पास्यति। अतः एकाकिन्यपि अहं स्रोतोभिः प्रवाहैः तमालैश्चाकुलं तद्वनं गच्छामि। तत्र नीरन्ध्रा निबिडा जरठच्छेदाः चिरकालच्छिन्ना नलानां तृणविशेषाणां ग्रन्थयः तनुमालिखन्तु नाम, नदीजलाहरणस्यावश्यकत्वात् एवंविधबहूपप्लवे सत्यपि यामीति यावत्। अत्र प्रसिद्धातिचाराया वक्त्र्याः क्षणमिति कालस्य एकाकिनीति वाच्यस्य तद्वनमिति देशस्य 'नीरन्ध्रास्तनुम्' इत्यादि नानापदात्मकवाक्यस्य च वैशिष्ट्यावगमात् संकेतकालदेशजिज्ञासुं कामुकं प्रति इदानीमेव तस्मिन् वने समागन्तव्यम्। तत्र नलग्रन्थिलिखने न अन्यथासिद्धिसंभवात् नखक्षताधिकरणपूर्वकं स्वैरमुपभोगः कर्तुं शक्यत इति च व्यज्यते। एवं लक्ष्यव्यङ्ग्ययोः अपि अर्थयोः व्यञ्जकत्वमुदाहार्यम्।...... तत्र लक्ष्यस्य यथा वा–

**तत्समागच्छ सहसा हालिकस्य निवेशनम् ।**
**तत्र दृष्टि विषा कापि फणिन्यास्त इति श्रुतम् ॥**

अत्र हालिकबालिकायां फणिनीति साध्यवसानलक्षणा। ततश्च तस्याः सर्वथा परिहरणीयत्वं व्यङ्ग्यम्। तादृशव्यङ्ग्यप्रतीतौ च मातुः वक्त्र्याः पुत्रस्य बोधयितव्यस्य तदभिसरणप्रवृत्तिप्रस्तावस्य च वैशिष्ट्यावगमः सहकारीति ध्येयम्। व्यङ्ग्यस्य व्यञ्जकता यथा–

**फलानि दिश भव्यानि निवेश्य मणिबन्धने[१] ।**
**बिम्बोष्ठि चुम्बनैरेवमालि लालय मा शुकम् ॥**

अत्र बिम्बफलभ्रान्त्या शुकः तवाधरं खण्डयिष्यतीति व्यज्यते। ततश्च 'कस्सवण होइ रोसो' इत्यत्र वक्ष्यमाणरीत्या पत्युरन्यथाप्रतीतिः भविष्यति इत्यादिकम् अनेकधा व्यङ्ग्यम् उज्जृम्भते। अत्रापि सख्या वक्त्र्या नायिकाया बोद्धव्याया 'बिम्बोष्ठी'ति वाच्यस्य च वैशिष्ट्यावगमो हेतुरिति ध्येयम्।

---

१. M. °पञ्जरे for °बन्धने

ननु अत्र शब्दार्थयोः व्यञ्जकत्वमविशिष्टं तत् कथमत्र अर्थमात्रस्य व्यञ्जकता इत्युच्यत इत्यत आह—

**शब्दप्रमाणवेद्योऽर्थोप्यनक्त्यर्थान्तरं यतः ।**
**अर्थस्य व्यञ्जकत्वे तच्छब्दस्य सहकारिता ।।६८।।**

यद्यपि शब्दबोध्य एवार्थो व्यञ्जकः तथापि अत्र शब्दस्य पर्यायसहत्वेनार्थस्य प्राधान्यात् तथा व्यपदेशः। शब्दस्य तु अवच्छेदकत्वेन अप्राधान्यात् न तेन व्यपदेशः। प्रधानेन व्यपदेशा भवन्तीति न्यायादिति ध्येयम्।

इतिश्री दन्तिद्योतिदिवाप्रदीपाङ्कसत्यमङ्गलरत्नखेटश्रीनिवासदीक्षिततनयस्य कामाक्षीगर्भसंभवस्य श्रीमदर्धनारीश्वरदीक्षितगुरुचरणसहजतालब्ध विद्यावैशद्यस्य श्रीराज चूडामणिदीक्षितस्य कृतिषु काव्यदर्पणे तृतीय उल्लासः।

# चतुर्थ उल्लासः

यद्यपि निर्दुष्टसगुणालंकारशब्दार्थयुगलं काव्यमित्युक्तलक्षणे काव्ये विशेष्यभूतयोः शब्दार्थयोः निरूपणे कृते तद्विशेषणज्ञानार्थं गुणालंकारयोः निर्दुष्टस्य प्रतियोगिज्ञानाधीनत्वेन तत्प्रतियोगितया दोषाणां च निरूपणमुचितम्। तथापि तत्तदवान्तरभेदविशिष्टतया धर्मिणि काव्ये साकल्येन निरूपित एव धर्मस्वरूपजिज्ञासोदयात् तद्धर्मभूतनिर्दुष्टत्वप्रतियोगिनो दोषाः तद्धर्मभूता गुणा अलङ्काराश्च निरूपणीया इति प्रथमं काव्यभेदनिरूपणमेवोचितम्। तत्रापि प्राधान्यात् उत्तमकाव्यस्य तद्भेद एव प्रथमं निरूपणार्हः। किं च रसहानिकरत्वं दोषत्वं साक्षाद्रसधर्मत्वं गुणत्वम् अङ्गद्वारेण रसोपकारकत्वमलंकारत्वमिति दोषादीनां रसनिरूपणाधीननिरूपणत्वेन प्रथमं रसस्यैव स्वरूपं निरूपणीयम् इत्यभिप्रेत्य प्रथमं ध्वनिकाव्यं विभजते।

**ध्वनिर्हि लक्षणामूलाभिधामूलविभेदतः ।**
**सामान्यतो द्विधा प्रोक्तो ध्वन्यध्वन्यैर्मनीषिभिः ॥६९॥**

**तत्राद्ये लक्षणामूले वाच्यं स्यादविवक्षितम् ।**
**विवक्षितं चान्यपरमभिधामूलकध्वनौ ॥७०॥**

ध्वनिकाव्यं लक्षणामूलम्, अभिधामूलं चेति सामान्यतो द्विविधम्। तत्र लक्षणामूलध्वनौ वाच्यमविवक्षितं भवति। तं च अविवक्षितवाच्यमित्याचक्षते। अभिधामूलध्वनौ तु वाच्यं विवक्षितमपि व्यङ्ग्यनिष्ठं भवति। तं च विवक्षितवाच्यमित्याहुः— यद्यपि अत्राभिधामूलध्वनिरेव प्रथममुद्देशार्हः। तथापि सूचीकटाहन्यायेन लक्षणामूलमेव प्रथमं निरूपयितुं तदुद्देशस्य प्राथम्यमिति ध्येयम्। तत्र प्रथमोद्दिष्टं लक्षणामूलमेव लक्षयति—

"तत्राद्यो लक्षणामूलो गूढव्यंग्याभिधानकः।"

लक्षणामूलत्वे सति गूढं यव्द्यङ्ग्यं तत्प्रधानो यः सोऽविवक्षितवाच्यध्वनिः। अत्राभिधामूलेऽतिव्याप्तिनिरासाय[1] लक्षणामूल इति। 'अगूढमपरस्याङ्गम्' इति वक्ष्यमाणयोः अगूढापराङ्गयोः गुणीभूतव्यङ्ग्ययोः तन्निरासाय गूढव्यङ्ग्यप्रधानक इत्युक्तम्[2]।
अथ तमेवाविवक्षितवाच्यं विभजते—

---

१. M. °वारणाय for निरासाय
२. M. om °उक्तम्

**अर्थान्तरे संक्रमिते वाच्येऽत्यन्ततिरस्कृते[1] ।**
**द्विविधो लक्षणामूलः सामान्येन समीरितः ।।७१।।**

लक्षणामूलो ध्वनिः अर्थान्तरसंक्रमितवाच्यात्यन्ततिरस्कृतवाच्यभेदेन सामान्यतो द्विविधः।

**वाच्यस्यार्थान्तरत्वेन परिणामो यदा भवेत् ।**
**अर्थान्तरे संक्रमितवाच्यमाहुस्तदा ध्वनिम् ।।७२।।**

यदा वाच्यार्थोऽनुपयुज्यमानोऽर्थान्तरत्वेन परिणतः तदार्थान्तरसंक्रमितवाच्यो नामा ध्वनिः। यथा 'श्रुणु मे वचनम्' इत्यत्र तथानुक्त्वापि अधोक्षजे भक्तिं कुरु इति कथनसंभवेन श्रुण्वित्यनुपयुक्तम् आकाङ्क्षाविरहात्। अतो योग्यताविरहवत् आकाङ्क्षाविरहे अन्वयानुपपत्तेः[2] श्रद्धापूर्वकश्रवणविशेषरूपतया परिणमति तथा 'श्रुणु इत्यनेनैव वचनस्यानुक्तसिद्धत्वात् वचनमित्येतत् अपि अनुपयुज्यमानं वचन-विशेषात्मकोपदेशरूपतया परिणमति[3]। ततश्च मदुपदेशं श्रद्धापूर्वकं श्रुणु इति लभ्यते। तेन मद्वचनमवश्यमनुष्ठेयमिति लभ्यते। यथा वा–

**त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति ।**
**आत्मीयां मतिमादाय स्थितिमत्र विधेहि तत् ।।**

'अत्रास्मीति' अहमर्थेऽव्ययम्। अहं त्वां वदामि। विद्वत्समाजः सभायामास्ते तदात्मीयां मतिमादाय त्वयात्र स्थातव्यमिति नटीं प्रति सूत्रधारवाक्ये त्वामहं वदामीत्यनुक्त्वापि कथनसंभवात् वदामि इत्यनुपयुक्तं वचनविशेषात्मकोपदेशरूपतया परिणमति[4]। तथा 'त्वाम्' इत्यस्यापि अर्थादेव सिद्धेः त्वामित्यपि अनुपयुज्यमानं तस्या नित्यं सावधानतां लक्षयति। तथाहमित्यपि 'वच्मि' इत्यनेनैव सिद्धत्वात् अनुपयुज्यमानं तस्याल्पकार्येषु अनियोक्तृत्वं लक्षयति। 'तथात्मीया'मिति गुरूपदेशं विनापि अतिगहनेष्वपि अर्थेषु अकुण्ठितप्रसरता लक्ष्यते। 'मतिमिति' नाट्यशास्त्रपरिशीलनशालिमतिः लक्ष्यते। ततश्च 'त्वामस्मि वच्मि' इत्येतदल्पकार्येषु अनियोजकोऽहं स्वतःसावधानामपि त्वामुपदिशामीति परिणमति। तेन मद्वचनम् अवश्यमनुष्ठेयमिति व्यज्यते। आत्मीयां मतिमित्येतच्चातिगहनेष्वपि अर्थेषु अकुण्ठितप्रसरं नाट्यशास्त्रपरिशीलनशालिनीं मतिमिति परिणमति। तेन तादृशमत्यादानेनैव विद्वज्जनानुरञ्जनं भवेत् नान्यथेति व्यज्यते। अत्र मूर्तद्रव्यस्यैवादानयोग्यत्वात् मतौ तदभावेन आदानपदमत्र[5] अत्यन्ततिरस्कृतवाच्यं सत्प्राप्तिं

---

१. M. °तिरस्कृतः for °तिरस्कृते
२. M. अन्यथानुपपत्तेः for अन्वयानुपपत्तेः
३. M. परिणमते for परिणमति
४. M. परिणमते for परिणमति
५. M. आदायपद° for आदानपद°

लक्षयति। तेन च प्राप्तस्य त्यागायोगात् सर्वथा सावधानतयैव स्थातव्यमिति व्यज्यत इत्याहुः। इयं चाजहत्स्वार्था। न च 'छत्रिणो गच्छन्ति' इत्यत्र न परिणामः। तत्कथमियमजहत्स्वार्थेत्युच्यत इति वाच्यम्। वाच्यस्यार्थान्तरत्वेन परिणामो नाम वाच्यतावच्छेदकात् अन्येन प्रकारेण पदजन्योपस्थितिविषयत्वम्। तच्च छत्रिणामपि छत्र्यच्छत्रिसाधारणेन एकसार्थगन्तृत्वेनैव उपस्थितेः अस्तीति ध्येयम्। इदमुभयं च वाक्यस्यार्थान्तरसंक्रमितत्वे उदाहरणम्। पदस्य तथात्वेऽग्रे उदाहरिष्यते। एवम् उत्तरत्रापि ध्येयम्[1]। अथात्यन्ततिरस्कृतवाच्यं लक्ष्यति–

**वाच्यार्थे त्वन्वयायोग्ये स्यादत्यन्ततिरस्कृतम् ।**
**प्रिय त्वय्येव दाक्षिण्यं पुण्यैर्लब्धोऽसि किं परम् ।।७३।।**

यत्र वाच्यार्थस्य अर्थान्तरपरिणत्यापि[2] अन्वयायोग्यत्वम्। तत्रात्यन्ततिरस्कृतवाच्यो नाम ध्वनिः। यथा 'प्रिय त्वय्येव' इत्यत्र शठे दक्षिणनायकत्वस्य आयोगात् विपरीतलक्षणया तदभावः प्रतिपाद्यते। तथा पुण्यपदेनापि तद्विरोधी लक्ष्यते। तेन चैवं शाठ्यकारिण्यपि त्वयि मया सान्त्वमेवोच्यते। तदितः परं वा नैवं शाठ्यमनुष्ठेयमिति व्यज्यते। यथा वा–

**उपकृतं बहु यत्र किमुच्यते सुजनता प्रथिता भवता परम् ।**
**विदधदीदृशमेव सदा सखे सुखितमास्स्व ततः शरदां शतम् ।।**

इदमत्यन्तापकारिणं प्रति कस्यचिद्धीरोदात्तस्य वचनम्। बहूपकृतमुपकारः कृतो यत्रोपकारे बहु वक्ष्यामीति विस्तरसंरम्भेण यत्रेति फणतिः। 'किमुच्यत' इति वक्तुः धीरोदात्ततया आक्षेपालंकार इत्युपक्रान्तस्य वचनस्य निषेधः। भवता सुजनता परं सौजन्यमेव प्रथिता पृथक्कृता। हे सखे ! तत ईदृशमुपकारमेव सदा वितन्वन् संवत्सराणां शतं सुखितं यथा भवति तथाऽऽस्स्वेत्यत्र विरोधिलक्षणयोपकारेणानुपकारः सौजन्येन दौर्जन्यं विधानेनाविधानं सख्येन शात्रवं सौख्येन दुःखिता संवत्सरशतावस्थानेन तद्वैपरीत्यं च लक्षयते। तेन चैवमपकारिण्यपि मया सान्त्वमेवोच्यते इति स्वस्य महाशयत्वमेवमपकारे कृतेऽपि मया सोढ़मतो ऽपकर्तुः तव सपदि विपदुत्पत्स्यत इति वा व्यज्यते। अत्र विरोधिन्युपकारबाधान्मुख्यार्थगन्धोऽपि नेति जहल्लक्षणा। यद्यपि सारोपसाध्यवसानमूलाश्च केचिदविवक्षितवाच्यभेदाः संभवन्ति तथापि तेषामपि अर्थान्तरसंक्रमितात्यन्ततिरस्कृत-वाच्ययोरेव यथायथमन्तर्भावसंभवात् न पृथगुक्ता इति ध्येयम्।

एवं लक्षणामूलध्वनिमभिधायाभिधामूलध्वनिं निरूपयति–

---

१. M. om. ध्येयम्

२. Pr. परिणत्वापि for °परिणत्यपि

**यस्तु वाच्यविवक्षायां गूढव्यङ्ग्यप्रधानकः ।**
**स विज्ञेयोऽभिधामूलो द्विविधश्चैष कथ्यते ॥**
**असंलक्ष्यक्रमव्यङ्ग्यलक्ष्यव्यङ्ग्यक्रमात्मना ॥७४॥**

यत्र वाच्यस्य विवक्षितत्वे सति गूढ़व्यङ्ग्यप्राधान्यं तत्राभिधामूलो ध्वनिः। अत्र वाच्यसिद्ध्यङ्गादिगुणी भूतवयङ्ग्ये अतिव्याप्तिवारणाय व्यङ्ग्यप्रधानक इति। अगूढ़रूपगुणी-भूतव्यङ्ग्ये तद्वारणाय गूढ़ेति। लक्षणामूलध्वनौ तद्वारणाय वाच्यविवक्षायामित्युक्तम्।

ननु अत्र वाच्यस्य विवक्षितत्वं न वक्तुमिष्टत्वम्। अविवक्षितवाच्येऽपि गतत्वात् तत्रापि पदात् वाच्यं वाच्याल्लक्ष्यमुपतिष्ठत इति वाच्येऽपि विवक्षा सत्त्वात् नापि स्वमात्रविश्रान्ततात्पर्यकत्वं व्यङ्ग्यप्रधानत्वेनासंभवादिति चेन्न। आकाङ्क्षा, योग्यतावत्त्वमेव वाच्यस्य विवक्षितत्वम्। 'त्वामस्मि वच्मि' इत्यादावनुपयोगात् वाच्यस्य नाकाङ्क्षा, उपकृतं बह्वित्यत्र न योग्यतेति भवति। 'वाच्यविवक्षायामित्यनेन लक्षणामूलध्वनिव्युदास इति ध्येयम्[1]। अयं चाभिधामूलोध्वनिः असंलक्ष्यक्रमव्यङ्ग्यलक्ष्यव्यङ्ग्यक्रमभेदेन द्विविधः। लक्ष्यव्यङ्ग्यक्रम एव संलक्ष्यक्रव्यङ्ग्य इत्यप्युच्यते। अत्र रसस्य प्राधान्यमाविष्कर्तुं प्रथममसंलक्ष्यक्रव्यङ्ग्यस्य निर्देश इति केचित्। अन्ये तु सूचीकटाहन्यायादस्य प्राङ्निर्देशः। न चैकस्यैव श्रृङ्गरस्यानेके भेदा इति वक्ष्यमाणत्वेन तदभिव्यञ्जकानामसंलक्ष्यक्रम-व्यङ्ग्यानामपि अनेकविधत्वमविशिष्टम् इति वाच्यम्। तथापि असंलक्ष्यक्रमव्यङ्ग्यत्वेन रूपेण[2] एकस्य वक्ष्यमाणत्वात्। न चैवमपि असंलक्ष्यक्रमस्य लक्ष्यक्रमाभावरूपतया तन्निरूपणाधीन निरूपणत्वेन प्राङ्निर्देशो न युक्त इति वाच्यम्। अलक्ष्यक्रमत्वं हि न लक्ष्यक्रमाभावः। किं तु नीलपीतयोरिव तयोः[3] परस्परविरहव्याप्यत्वमेव। न तु प्रतियोग्यनुयोगिभाव इत्याहुः।

ननु प्रथमं शब्दस्य श्रवणं ततो विभावादिप्रतीतिरिति क्रमस्य लक्ष्यत्वात् अलक्ष्यक्रमत्वमत्र कथमिति चेत्? सत्यम्। तथापि विभावादिप्रतीतेः रसाभिव्यक्तेश्च क्रमो न लक्ष्यत इति अलक्ष्यक्रमत्वम्। न च शब्दश्रवणानन्तरं विभावादय एव प्रतीयन्ते। न तु तदतिरिक्तो रसोऽभिव्यज्यत इति वाच्यम्। तत्र विभावादिप्रतीतिवत् रसाभिव्यक्तेरपि अपह्नोतुमशक्यत्वात्। तथा हि—

**शिथिलशिथिलं न्यस्य स्वैरं धनुःशिखरे**
**शिरोनयनसलिलैः कुर्वन्मौर्वीलतामपरामिव ।**
**अहह विकलश्श्रावं श्रावं घनस्तनितध्वनिं**
**किमपि किमपि ध्यायन् आर्यो न याति न तिष्ठति ॥**

---

१. M. om. ध्येयम्
२. M. om. रूपेण
३. M. om. तयोः

अत्र ये घनस्तनितादय उद्दीपनविभावा ये च शिथिलशिरोन्यासनयनसलिलवैकल्य-निरुद्देशध्यानगतिस्थित्यादयोऽनुभावाः, ये च तदभिव्यक्ताः चिन्तावेगदैन्यादयो व्यभिचारिणः त एवात्र नानुभूयन्ते, किं तु विप्रलम्भश्रृङ्गाररसोऽपि अभिव्यज्यत एवेति सहृदयहृदयमेव प्रमाणम्। न च तथापि विभावादिप्रतीते रसाभिव्यक्तेश्च यौगपद्यात् क्रमो न विद्यत इति अविद्यमानक्रम इत्येव वक्तुमुचितम् न तु अलक्ष्यक्रमव्यङ्ग्य इति क्रमस्यैवाभावादिति वाच्यम्। निर्हेतुकरसाभिव्यक्तौ सर्वदा तदभिव्यक्तिप्रसङ्गः। शब्दश्रवणमात्रस्य हेतुत्वेऽपि शब्दश्रवणानन्तरं सर्वत्र तदभिव्यक्त्यापत्तिः विभावादिव्यञ्जकशब्दस्य हेतुत्वे च विभावादीनामेव लाघवात् तत्र हेतुत्वमित्यस्ति क्रमः। स[1] तु व्युत्पन्नतमायाः प्रतिपत्तृप्रतीतेः तीव्रप्रवृत्तितया शतपत्रपत्रशतभेदनक्रमवद्गर्जितश्रवणघनानुमितिक्रमवच्च न संलक्ष्यत इत्यसंलक्ष्यक्रमव्यङ्ग्य इत्येव वक्तुमुचितमित्याहुः।

तत्र प्रथमोद्दिष्टमसंलक्ष्यक्रमव्यङ्ग्यं लक्ष्यति—

**रसभावतदाभासभावशान्त्यादयो यदा ।**
**प्राधान्येन स्फुरन्त्येषोऽलक्ष्यव्यङ्ग्यक्रमस्तदा ॥७५॥**

रसाः शृंङ्गारादयः, भावा देवादिविषया रतिः, निर्वेदादयो व्यभिचारिणश्च, तदाभासो रसाभासो भावाभासश्च, भावानां निर्वेदादीनां शान्तिः। आदिपदग्राह्या भावोदयभावसंधिभाव-शबलता वा यदा प्राधान्येन व्यज्यन्ते तदानीमसंलक्ष्यक्रमव्यङ्ग्यध्वनिः। अत्र तदाभासशान्त्यादय इति वक्तुं शक्यत्वेऽपि भावशान्त्यादय इति मध्ये भावपदनिवेशो रसशान्त्यादिप्रतिषेधार्थः। तथा हि रसस्य हि न शान्त्युदयौ संभवतः[2]। तस्य नित्यत्वेन वक्ष्यमाणत्वात्। नापि संधिशबलते संभवतः। स्थायिभावस्य विभावाद्यसंवलने रसतया अनभिव्यक्तेः, तत्संवलने तु रसतापर्यवसानेन विगलितवेद्यान्तरत्वादित्याहुः। केचित्तु भावशब्दस्य मध्ये ग्रहणं व्यभिचारिभावानामेवात्र भावशब्दप्रतिपाद्यत्वमिति द्योतयितुमित्याहुः।

ननु रसादीनां व्यङ्ग्यत्वे रसवत्प्रेयऊर्जस्विसमाहितादयोऽलंकारा एव। ते च गुणीभूतव्यङ्ग्यप्रस्ताव एव वक्तुमुचिताः, न तु ध्वनिप्रस्ताव इत्यत आह—

भिन्ना रसाद्यलंकारादलंकार्या इमे स्थिताः

इमे प्राधान्येनाभिव्यज्यमाना रसादयः। तथा च रसादीनां यत्राप्राधान्यं तत्र रसवदादयोऽलंकाराः। तेच गुणीभूतव्यङ्ग्यप्रस्ताव एव वक्ष्यन्ते। यत्र तु तेषां प्राधान्यं तत्रालंकारा एव अत्र इति। इह तदभिधानं युक्तम्। रसभावादिध्वनीनामुदाहरणं तु रसनिरूपणप्रस्तावे स्फुटतरं लक्ष्यत इति नेह प्रपञ्चितमिति ध्येयम्। यदा रसादयो व्यज्यन्ते, तदानीम् असंलक्ष्यक्रमव्यङ्ग्य इत्युक्तम्। तत्र प्रसङ्गात् रसादिस्वरूपं लिलक्षयिषुरादौ रसस्वरूपमाह—

---

१. Pr. न for स

२. M. om. संभवतः

**कारणान्यथ कार्याणि सहकारीणि यानि च ।**
**रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ।।७६।।**

**विभावा अनुभावास्तत्कथ्यन्ते व्यभिचारिणः ।**
**व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रसः स्मृतः ।।७७।।**

लोके हि यौवनोद्भिन्नचित्तवृत्तेर्यूनः सुदृशश्च मिथो दर्शनेन श्रवणेन वा प्रीतिरुत्पद्यते। ततश्च तदीयलावण्यालंकारादिभिः तदर्थैः[1] उद्यानमन्दसमीरणचन्द्रादिभिः उद्दीपिता सा प्रीतिरुत्कण्ठापरनामधेयाभिलाषाकारेण परिणमते। तथाविधां च प्रीतिं रतिमाचक्षते। ततश्च मिथः सङ्गत्युपायं जिज्ञासमानयोः यूनोः चिन्ताग्लानिशङ्काविषयादयः प्रादुर्भवन्ति। तदनु च प्रीत्या चिन्तादिभिश्च तदुभयव्यञ्जिकाः चेष्टा जायन्ते। तदनन्तरं स्वयं दूतीप्रेषणेन वा सङ्गमे जाते सा प्रीतिः उत्तरोत्तरमुज्जृम्भते। चिन्तादयः पुनरपगच्छन्तीति स्थितिः। एवं रसान्तरेष्वपि उन्नेयम्[2]। तथा च लोके काव्यनाट्यव्यतिरिक्तनायिकानायकव्यवहारस्थले स्थायी यो रत्यादिः तस्य यानि कारणानि नायिकानायकरूपाणि तदीयलावण्यालंकरणोद्यान-मन्दसमीरणादीनि च यानि च रत्यादेः चिन्तादेश्च कार्याणि कटाक्षभुजाक्षेपस्तम्भ-प्रलयरोमाञ्चादीनि। यानि च रत्यादेः सह[3]कारीणि परिपोषहेतुभूतानि निर्वेदचिन्तादीनि तानीमानि कारणादीनि नाट्ये अभिनयप्रधानेन व्यापारेण साक्षात्कारयोग्ये काव्ये गुणालंकारादिविशिष्टे श्राव्ये संदर्भविशेषे च यदि स्युः, तदा कारणानि विभावा इति कथ्यन्ते। विशेषेणरत्यादयोऽमीभिः भाव्यन्त इति व्युत्पत्तेः। यानि तु कार्याणि तान्यनुभावा इत्युच्यन्ते। रत्यादिकं चानुभावयन्त्यनुमापयन्तीति व्युत्पत्तेः। यानि तु सहकारिकारणानि, तानि व्यभिचारिण इति कथ्यन्ते। विविधमाभिमुख्येन चरन्तीति व्युत्पत्तेः। एतैरुक्तरूपैः विभावाद्यैः व्यक्तो विशेषेणोक्तः पानकरसन्यायेन मिश्रणेनैवास्वादनीयतां प्राप्तः स्थायी चिन्तादिवदनपायितया स्वायीभावो रत्यादिको रस इति रसतत्वविद्भिः स्मृतः। उक्तं हि भरतेन—

**"विभावानुभावव्यभिचारिसंयोगात् रसनिष्पत्तिः"**

इति। अत्र च सूत्रे संयोगपदं निष्पत्तिपदं चान्यथान्यथा तद्व्याख्यातारो व्याचक्षते। तत्र भट्टलोल्लटप्रभृतयः- द्विविधो विभावः आलम्बनविभावः, उद्दीपनविभावश्चेति। तत्र यानालम्ब्य विषयीकृत्य रत्यादयो जायन्ते, ते नायिकानायकादय आलम्बनविभावाः, तदीयलावण्यादयः चन्द्रसमीरणादयश्च जातं रत्यादिकं उद्दीपयन्ति, अभिलाषाद्याकारेण परिणमयन्तीति व्युत्पत्तेः उद्दीपनविभावाः, ताभ्यामूभाभ्यां रत्यादिको भावो जायते। यद्यपि

---

१. Pr. तटस्थैः for तदर्थैः

२. M. उन्नेया for उन्नेयम्

३. Pr. स्पृहा for सह

उद्दीपनानां न रत्यादिजनकत्वं, तथापि विशेषाकारपरिणामजनकत्वात्[१] तेषामपि कारणत्वमिति ध्येयम्। अनुभावाः कटाक्षभुजाक्षेपादयः स्तम्भप्रलयरोमाञ्चस्वेदवेपथुवैवर्ण्या वैस्वर्यादयश्च तैरनुभावैः कार्यरूपैः[२] अप्रत्यक्षोऽपि रत्यादिभावः प्रतीतियोग्यतां नीयते। व्यभिचारिभिः वक्ष्यमाणनिर्वेदादित्रयस्त्रिंश[३]द्भावैः उपचीयते। एवं च स्थायिविभावयोः कार्यकारणभावः स्थाय्यनुभावयोः ज्ञाप्यज्ञापकभावः स्थायिव्यभिचारिणोः पोष्यपोषकभावश्च संबन्धः संयोगशब्दार्थः। उत्पत्तिः, ज्ञप्तिः, पुष्ठिश्च निष्पत्तिशब्दार्थः। ततश्च विभावैर्जनितोऽनुभावैः प्रतीतो व्यभिचारिभिः पुष्टो रत्यादिभावो मुख्यो रसः स च वस्तुतः सीतादिगोचरो रामादावेव वर्तते। स एव रसः काव्येषु विभावादिप्रतिपादकैः पदैः अभिधाख्यया मुख्ययैव[४] वृत्त्या सहृदयैः प्रतीयमानो रस इत्युच्यते। यथा च रसप्रतीतिः काव्येष्वभिधयैव तथा पञ्चमोल्लासे भट्टलोल्लटमतोपन्यासप्रस्तावे वक्ष्यते। नाट्ये तु रामादावनुकार्य एव स्थितो रत्यादिको भावो[५] रामाद्यनुकर्तरि नटे रामताद्रूप्यारोपात्तत्रासन्नपि सामाजिकैः प्रतीयमानो रस इत्युच्यते। तथा च विभावादिजन्यो रसो रामादावनुकार्यजीवाथुना तु न कुत्रापि रसो जन्यते। किं तु नटे केवलं सामाजिकैरारोप्यत इति आहुः।

श्रीशङ्कुकादयस्तु भवतु तावत्काव्येषु अभिधयैव रसप्रतीतिः। नाट्ये तु किंचिद्भेद-सहिष्णोरभेदस्यैव ताद्रूप्यत्वेन भेदावगाहिन्याः ताद्रूप्यप्रतीते रसप्रतीतिविरोधितया तत्प्रतीत्यङ्गत्वकथनमपि साहसम्। किं च संयोगनिष्पत्तिपदयोः अर्थत्रयपरताकल्पनं चायुक्तम्। तस्मादेवं व्याख्येयम्। लोके हि चतुर्विधा प्रतीतिः सम्यङ्मिथ्यासंशय-सादृश्यप्रतीतिभेदात्। तत्र 'राम एवायम्' इति रामत्वायोगव्यवच्छेदिका या प्रतीतिः, या चायमेव राम इत्यन्ययोगव्यवच्छेदिका, या च रामो भवत्येव इत्यत्यन्तायोगव्यवच्छेदिका या च न रामोऽयमिति रामभेदावगाहिनीप्रतीतिः[६] ताः सर्वाः सम्यक्प्रतीतयः। न रामोऽयमिति बाधशिरस्का तु रामोऽयमिति धीः मिथ्याप्रतीतिः। अयं रामो न वेति धीस्तु संशयः, रामसदृशोऽयमिति प्रतीतिः सादृश्यधीः। एताभ्यः चतुर्विधाभ्यः प्रतीतिभ्यो विलक्षणा रामोऽयमिति निर्गलितावधारणरूपा प्रतीतिः अनुकर्तरि नटे जायते। यथा चित्रतुरगे तुरग एवायमित्यादिप्रतीतिविलक्षण तुरगोऽयमिति प्रतीतिः तद्वत्। न च प्रतीतेः सम्यक्त्वं मिथ्यात्वं चेति द्वैविध्यमेव। तत्कथं तदुभयविलक्षणाप्रतीतिः उच्यते। कथं च नटे रामत्वप्रतीतिः मिथ्या प्रतीतिविलक्षणा चेति वाच्यम्। सत्यम्। व्यवच्छेदादिविषयत्वमिति सम्यक्त्वं बाधशिरस्कत्वं मिथ्यात्वमभिमतमित्युक्तरूपनटविषयकप्रतीतेः व्यवच्छेदादि-

---

१. M. °हेतुत्वात् for °जनकत्वात्
२. M. कार्यभूतैः for कार्यरूपैः
३. M. om. °त्रिंशत्°
४. M. om. मुख्ययैव
५. M. om. भावो
६. M. om. प्रतीतिः

विषयत्वाभावात् बाधाशिरस्कत्वाभावाच्च तदुभयवैलक्षण्यमविरुद्धम्। न च रामभेदावगाहिप्रतीते रसप्रतीत्यनङ्गत्वेन तद्वैलक्षण्यावश्यंभावेऽपि सावधारणप्रतीति-वैलक्षण्यकथनमसङ्गतमिति[१] वाच्यम्। अतिरिक्तस्य व्यवच्छेदभासेन तादृशप्रतीतीनामपि विगलितवेद्यान्तररसप्रतीत्यनङ्गतया तद्वैलक्षण्यस्यापि रसप्रतीत्यनुकूलप्रतीतावश्यं वाच्यत्वात्। एवं च तादृशप्रतीत्या[२] नटे विषयीकृते सति तेनैव नटेन यदा कारणकार्य-सहकारिणोऽभिनयेन प्रकाश्यन्ते तदा कारणादयो विभावानुभावव्यभिचारिपदव्यपदेश्या भवन्ति।

ननु कथं नटेन विभावप्रकाशनं, कथं वा तेन तत्कार्यस्वेदादिप्रकटनं तस्मिंस्तत् कारणविभावाद्यभावादिति चेन्न।

**सेयं ममाङ्गेषु सुधारसच्छटा**
**सुपूरककर्पूरशलाकिका दृशोः ।**
**मनोरथश्रीर्मनसः शरीरिणी**
**प्राणेश्वरी लोचनगोचरं गता ॥**

अत्र सेयमिति यद्विरहात्तादृशानि दुःखानि मया अनुभूतानीति प्रत्याय्यते। ममाङ्गेषु इति बहुवचनेन दर्शनमात्रेण सर्वावयवसंतापनिरासक्षमनिरतिशयनिर्वृतिजनकत्वम्। सुपूरा सुखेन दृशि पूरयितुं शक्या। तेन कर्पूरशलाकिकायाः पृथुलस्निग्धशीतलत्वादयः, प्रत्याय्यन्ते। तादृशकर्पूरशलाकिका भेदारोपणेन नायिकाया लोचनानन्दकन्दलनक्षमत्वं प्रत्याय्यते। मनसो ये मनोरथाश्चुम्बनालिङ्गनादिविषया इच्छाविशेषाः तेषां शरीरिणी श्रीः अक्षय्यसंपत्, अत्र मनोरथानां मनोमात्रधर्मत्वेऽपि मनस इति ग्रहणं तद्विषयकमनोरथैः मनसः सर्वदापि अयोगव्यवच्छेदार्थम्। अनेन निरन्तरमनोरथविषयता प्रत्याय्यते[३]। प्राणेश्वरीत्यनेन प्राणानां प्रत्यासत्तिकरत्वं व्यज्यत[४] इति ध्येयम्। एतादृशानां संभोगश्रृङ्गारविषयाणामालम्बनविभाव-विषयाणां काव्यानामनुसन्धानबलात्, तथा—

**दैवादहमत्र तया चपलायतनेत्रया नियुक्तश्च ।**
**अविरलविलोलजलदः कालः समुपागतश्चायम् ॥**

अत्र चपल[५]दीर्घलोचनया तयाहमत्र दैवात् दुरदृष्टवशात् वियुक्तश्च निबिडवलमान-बलाहकोऽयं[६] कालश्च समुपागत इति चकाराभ्यां वियोगजलदकालसमागमक्रियायोः

---

१. M. om. °कथन°
२. M. एतादृश for तादृश
३. M. om. प्रत्याय्यते
४. M. प्रत्याय्यत for व्यज्यत
५. Pr. चकुल for चपल
६. M. °वलाह° for °बलाह°

यौगपद्याद्गुरुत्तरोऽनर्थः प्रत्याय्यते। एतादृशानां विप्रलम्भश्रृङ्गारविषयाणामुद्दीपनविभावविषयाणां काव्यानामनुसंधानात् निपुणतमसूत्रधारशिक्षागृहीतार्थगुणनिकासध्रीचीनाद्विभावानां तादृश्या गुणनिकयैव स्वस्मिन् स्थाय्यभावेऽपि तत्कार्याणां रोमाञ्चादीनां च नटेन प्रकाशनमुपपन्नम्। एवं च काव्यानुसन्धानाद्विभावस्य प्रत्यक्षात् रोमाञ्चादीनां रोमाञ्चादिलिङ्गाद्व्यभिचारिणां चोपस्थितौ तत्प्रभवसंस्कारजन्यतावद्गोचरस्मृतिः ततस्तत्सहकृतेन व्याप्तिस्मृतिमता मनसा पक्षीभूतनटवृत्तितया सामाजिकैः वस्तुतः तत्रासन्नेवारत्यादिको ना वोऽनुमीयते। न च विभावादीनां नटे कृत्रिमत्वात्कथं रत्याद्यनुमितिरिति वाच्यम्। न हि स्वरूपसन्तस्ते स्थायिनमनुमापयितुमीशते। किं तु ज्ञाताः तज्ज्ञानं च भ्रमरूपविशेषादर्शनदशायामिहापि न विरुद्धम्। नटे रामत्वारोपेण भ्रमस्य सुश्लिष्टत्वात्। न चैवं स्थायिनोऽनुमेयत्वे वह्नयादिवत् चमत्कारकारिता न स्यादिति वाच्यम्। चमत्कार[१]कारित्वं तदभावो वा नानुमेयत्व निबन्धनम्। किं तु वस्तुस्वभावायत्तम्। अत एव अनुमीयमानापि कामिनी हृदयाह्लादाय प्रभवति। ततश्चानुमीयमानस्यापि रत्यादेरानन्दजनने प्रकर्षकाष्ठागतं चमत्कारकारित्वमविरुद्धम्। अनुमानं तु 'रामोऽयं सीतालम्बनप्रीतिप्रकर्षविशेषाश्रयः तद्विभावादिमत्त्वात् व्यतिरेकेणाहमिह। यदा तु स्वकान्ताविषयकप्रीतिप्रकर्षाश्रय इति साध्यम् तदाहमिवेत्यन्वयीति द्रष्टव्यम्। अयमत्र निष्कर्षः— चतुर्विधप्रतीतिविलक्षणया 'रामोऽयमिति प्रतीत्या विषयीक्रियमाणेन नटेन काव्यानुसन्धानात् शिक्षाबलाच्चाभिनीतैर्विभावादिभिः तस्मिन्नविद्यमानोऽपि रत्यादिरनुमीयमानः सामाजिकैश्चर्व्यमाणो रस इति। ततश्च सूत्रगतं संयोगपदं व्याप्तिरूप-संबन्धपरं निष्पत्तिपदं चानुमितिरूपसामाजिकचर्वणपरमित्याहुः।

भट्टनायकास्तु तटस्थी[२]भूतनटगतत्वेन रत्याद्यनुमितौ चमत्कारो न स्यात्। यदि च वस्तुसौन्दर्यबलाद्यथातथाप्युपस्थितौ चमत्कारः तदा श्रृङ्गारादिपदादपि तदुपस्थितौ चमत्कारः स्यात्। किं च रसस्य पूर्वमनुपस्थितेः व्यतिरेकव्याप्तिग्रहस्यापि असंभवात् नानुमितिसंभवः। न च रामोऽयं सीतालम्बनरत्या[३]श्रयः तद्विषयकविभावादिमत्त्वादिति रत्याश्रयत्वमेव साध्यं, रतिश्चोपस्थितैवेति न व्याप्तिग्रहानुपपत्तिः लिङ्गोपहितलैङ्गिकभानाभ्युपगमेन विभावादिरत्याद्यु-भयविषयत्वेनानुमिते रसविषयत्वपर्यवसानमिति वाच्यम्। एवमपि रसास्वादनस्य धारावाहनरूपता न स्यात्। सिद्धसाधनेन पक्षतावच्छेदकावच्छेदेनानुमित्यन्तरानुदया-वश्यंभावात्। न चान्तरानुमित्सया पुनः पक्षतासंभव इति वाच्यम्। रसस्य विगलितवेद्यान्तरतया तदास्वादे मध्ये तदनुदयात्। न च तर्हि नटे तादृशरत्याद्यनुमित्यनन्तरं सामाजिकात्मनि रस उत्पद्यत इति वाच्यम्। सामाजिके तज्जनकविभावादिसामग्रीविरहात्। अत एव सामाजिकात्मनि रसोऽभिव्यज्यत इत्यप्यपास्तम्। तत्र तदभिव्यञ्जकविभावादिसामग्रीविरहात्।

---

१. M. om. °कार°

२. M. om. °भूत°

३. M. °प्रतीत्याश्रयः for रत्याश्रयः

किं तु विभावानुभावादीनां रामाद्यपेक्षया पूर्वमसाधारणानां सहृदयेषु यत्साधारणीकरणं तदनुकूलोऽभिधालक्षणाभ्यां भिन्नः। काव्ये नाट्ये च भावकत्वाख्यो व्यापारोऽवश्य-मङ्गीकर्तव्यः। इतरथा रामाद्यसाधारणानां विभावादीनां साधारण्येन प्रतीतिः न स्यात्। तेन च व्यापारेण साधारणीक्रियमाणः स्थायी रत्यादिको रजस्तमोऽनभिभूतसत्त्वाख्यगुणोत्कर्षात् प्रकाशमानो य आनन्दः तदात्मिकायाः संविदो या विगलितवेद्यान्तरता तत्तुल्येन भोगाख्येन व्यापारेण भुज्यमानो रस इत्युच्यते। तदयं निष्कर्षः। काव्ये नाट्ये चाभिधालक्षणाद्द्वयभिन्नेन भावकत्वाख्यव्यापारेण साधारणीकृतो भोगाख्येन व्यापारान्तरेण सहृदयैः भुज्यमानो रत्यादिकः स्थायी रस इति। ततश्च सूत्रे संयोगपदं साधारणीकरणपरं निष्पत्तिपदं भोगपरमित्याहुः। श्रीमदभिनवगुप्ताचार्यपादास्तु वक्ष्यमाणरीत्या विभावादिसाधारणकरण-भोगयोः उपपत्तौ अतिरिक्तव्यापारद्वयकल्पनमयुक्तम्। किं चास्मिन् पक्षे रसो विभावादिभिः जन्यते, ज्ञाप्यते, अभिव्यज्यते वा नाट्यौ दूष्यत्वात्। नान्त्यः। अभिव्यक्तेः त्वयैव दूषितत्वात्। तस्मादेवं व्याख्येयम्। सर्वेषां हि श्रोतॄणां प्रेक्षकाणां वा नित्यसुखात्मको रत्यादिकः स्थायी वासनारूपेणात्मनि तिष्ठाति। ततश्च ये काव्यनाट्यव्यतिरिक्तस्थले नायिकानायकादिभिः कारणैः तच्चेष्टादिभिः कार्यैः तदनुमितैः चिन्तौत्सुक्यादिभिः सहकारिभिश्च स्थायीभूतरत्याद्यनुमाने पुनः पुनः शीलनेन प्रज्ञातिशयवन्तः तादृशानां सामाजिकानां काव्येषु संदृब्धैः[1] नाट्येष्वभिनीतैः वा कारणैर्वासनात्मना स्थितस्य रत्यादेः स्थायिनो विभावनमङ्कुरदशार्पणं क्रियते, तादृशैः कार्यैः अनुभावनमनुभवविषययोग्यता क्रियते। सहकारिभिः व्यभिचारिणं विशेषेणाभिमुख्येन चारणं ज्ञानं सुप्रकटत्वं क्रियते। अत एव काव्ये नाट्ये च कारणादयो विभावादिशब्दैः व्यपदिश्यन्ते। ते च विभावादयः काव्येषु नाट्येषु[2] च साधारण्येनैव प्रतीयन्ते। न तु ममैवैते शत्रोरेवैते तटस्थस्यैवेते इति संबन्धि-विशेषस्वीकारेण। नापि ममैवेते न शत्रोरेवैते न तटस्थैवैते इति संबन्धिविशेषपरिहारेण वा प्रतीयन्ते। तथा हि—

**पुष्पोद्भेदमवाप्य केलिशयनादुत्थाय दूरस्थया**
**कान्तेन स्फुरिताधरेण निभृतं[3] भ्रूसंज्ञया याचिते ।**
**आच्छाद्य स्मितपूर्णगण्डफलकं चेलाञ्चलेनाननं**
**मन्दान्दोलितकूण्डलस्तबकया तन्व्या विधूतं शिरः ॥**

इत्यादि काव्येषु य एते नायिकादय आलम्बन विभावा ये च पुष्पोद्भेदादय उद्दीपनविभावा ये चाधरस्फुरणादयोऽनुभावा ये च तदभिव्याञ्जितौत्सुक्यादयो व्याभिचारिणञ्च

१. M. संदृश्यैः for संदृब्धैः
२. M. काव्यनाट्ययोः for काव्येषु नाट्येषु
३. Pr. नधृतं for निभृतं

नह्यैते[१] ममैवैत इत्यासंबन्धिविशेषपरिहारं नियमं वा पुरस्कृत्य प्रतीयन्ते। किं तु साधारण्ये-नैव। ततश्च काव्ये शब्देन नाट्येऽभिनयेन विभावादीनां साधारण्येन उपस्थितौ तद्बलात् तत्काले सामाजिकानामहमिति परिमिता प्रमातृता विगलति, वेद्यान्तरसंपर्कशून्यः साधारणरूपः प्रमातृभावश्चोन्मिषति। तथोन्मिषितप्रमातृभावैश्च सामाजिकैः स्वस्वात्मनि सूक्ष्मरूपेणावस्थितो ज्ञानानन्दस्वरूपो रत्यादिः स्थायी विभावादिप्रतीतिसंवलनेन समाविर्भूतः साधारण्येन गोचरीक्रियते। न चान्यस्य विभावादेः साधारण्यात् कथमन्यस्य स्थायिनः। साधारण्यमिति वाच्यम्। व्याप्यसाधारण्याद्व्यापकसाधारण्यवदुपपत्तेः। न च साधारण्ये तत्प्रतीतौ समानमिति वाच्यम्। सहृदयहृदयसंवादस्यैव मानत्वात्। न च ज्ञानाभिन्नस्य स्थायिनः कथं ज्ञानगोचरता विषयविषयिभावस्य भेदगर्भत्वादिति वाच्यम्। ज्ञानाभिन्नस्यापि आत्मन इव स्थायिनोऽपि प्रकाशमानत्वाविरोधेन विषयत्वोपचारात्। न चैतादृशस्थायिनि किं मानमिति वाच्यम्। चर्वणैव[२] मानम्[३]। न चैवं अभिव्यक्तः स्थायी सर्वदा चर्व्येतेति वाच्यम्। विभावादिज्ञानसंवलनदशायामेव तस्याभिव्यक्त्यभ्युप गमेन तज्ज्ञानविरहदशायां तस्य तिरोभावाभ्युपगमात्। न चैवं विभावादीनां तदभिव्यक्तिहेतुत्वे स्थायिनः ते पृथगनुभूयेरन्। ततश्च रसस्यासंलक्ष्यक्रमव्यङ्ग्यत्वविरोधो विभावसंवलिततयैव स्थाय्यनुभवस्वीकारे च विभावादीनां व्यञ्जकत्वानुपपत्तिरिति वाच्यम्। यद्यपि विभावादयः प्रथमं शब्देनाभिनयेन वा प्रत्येकं ज्ञायन्ते। पश्चाच्च यथा पानकरसे शर्करामाधुर्यं लिकुचफलरसाम्लताकर्पूरादिगत-सौरभादिकं चानपह्नुतमिथश्चमत्कारातिशयमनुभूयन्ते तथा ते विभावादयः स्थायिना संवलिता अनपह्नतमिथश्चमत्कारमनुभूयन्त इति अस्ति क्रमः तथापि यथा स्तनितश्रवणव्याप्तिस्मरण- परामर्शधनानुमितीनां क्रमासत्त्वेऽपि व्युत्पन्नमतीनां झटित्यनुमित्युदयात्क्रमो न लक्ष्यते, तथात्रापि विभावादिप्रतीतीनां विभावादिसंवलितस्थाय्यनुभवस्य च[४] झटित्यात् क्रमो न लक्ष्यत इत्यसंलक्ष्यक्रमत्वं रसस्य न विरुद्धम्। एवं पानकरसन्यायेन विभावादिसंवलिततया चर्व्यमाणः स्थायी नटे रामादिप्रतीतिदाढ़र्यात् पुर इव परिस्फुरन्[५] यथा यथा चर्वणा- धारावाहिकतया प्रकृते तथा तथा हृदयं प्रविशन्निव सर्वाङ्गमभिव्याप्यालिङ्गन्निवस्वव्यति-रिक्तं वस्त्वन्तरं तिरोदधदिवाखण्डाद्वयब्रह्मानन्दमनुभावयन्निव अलौकिकचमत्काराविष्कारकारी श्रृङ्गारादिको रस इत्युच्यते। न चैवं करुणादिरसस्थायिनां नित्यदुःखात्मकत्वमप्यभ्युपगन्तव्यं स्यादिति वाच्यम्। तत्रापि नित्यसुखस्यैव स्थायित्वात्। अत एव तत्र प्रवृत्तिः। तत्रापि विभावाद्युक्तसामाग्रया सुखाभिव्यक्तेः अनुभवसिद्धत्वाच्च। न चैवमेक एव रसः स्यात्। सुखात्मकस्य स्थायिनः एकत्वावादिति वाच्यम्। विभावादिभेदेन भेदव्यवस्थितेः

१. Pr. नहिते for नह्यैते
२. M. चर्वणाय एव for चर्वणैव
३. M. मानत्वात् for मानम्
४. M. om. च
५. M. om. परि°

न चैवं करुणादौ अश्रुप्रभृत्यनुपपत्तिः इति वाच्यम्। लोके हि स्वरूपतो यस्माद्यदुत्पत्तिः तस्मादेव ज्ञायमानात् तदुत्पत्तिः वस्तुस्वाभाव्यादिति अविरोधः तदयं निष्कर्षः- सामाजिकेषु नित्यसुखात्मकः सूक्ष्मरूपेण स्थितः स्थायीशब्देनाभिनयेन वा विभावादिषु प्रत्येकं प्रतीयमानेषु अङ्कुराद्यवस्थां प्राप्तशब्दादिना साधारणतयैव प्रतीतैः तैः विभावादिभिः अभिव्यक्ततया स्वयमपि साधारणतयैव पानकरसन्यायेन विभावादिसंवलिततया चर्व्यमाणश्चमत्कारैकघनश्रृङ्गारादिको रस इति।

ननु विभावाद्यन्वयव्यतिरेकानुविधायिनो रसस्य तत्कार्यतैव युक्तेति चेन्न। तथा सति विभावादिनाशेऽपि तस्य सद्भावप्रसङ्गात्। न चास्य द्वित्वादिवन्निमित्तनाशनाश्यतेति वाच्यम्। तत्रापि संख्याया नित्यतयापेक्षाबुद्धेः व्यञ्जकत्वमात्रत्वाभ्युपगमान्नित्यसुखातिरिक्तस्य रसस्यानङ्गीकारेण तस्य कार्यत्वायोगाश्च। न च तर्हि ज्ञाप्योऽस्त्विति वाच्यम्। सूक्ष्मरूपेण स्थितस्य स्थायिनो रसात्मकतयाभिव्यक्तौ विभावादेरुपयोगेन पूर्वं सिद्धस्य तस्य वह्न्यादिवदभावेन ज्ञाप्यत्वानुपपत्तेः। न चैवं सिद्धस्यैव घटादेः दीपादिव्यङ्ग्यतेति प्रागसिद्धस्य तस्य कथं विभावादि व्यङ्ग्यतेति वाच्यम्। विभावादिसंवलिततया चर्वणैव तस्य। व्यक्तिं तु अलौकिकस्यैव व्यङ्ग्यत्वस्य इह स्वीकारात् चर्वणीयतया रसस्य दुरपह्नवत्त्वात्। न चमत्कारकत्वज्ञापकत्वाभ्यामन्यदिदं व्यञ्जकत्वं, न क्वापि दृष्टचरमिति वाच्यम्। अन्यत्रादर्शनेऽपि रसस्वरूपस्य कार्यत्वज्ञाप्यत्वानुपपत्तेः। रसप्रतीतेश्च सर्वानुभवसिद्धतया दुरपह्नवत्वेनात्रैव तथाविधव्यञ्जकत्वकल्पनेऽप्यदोषात्। प्रत्युतान्यत्रादर्शनस्यालौकिकत्वसिद्धेर्भूषणत्वात्। न च तर्हि रसस्य कार्यत्वव्यवहारानुपपत्तिरिति वाच्यम्। चर्व्यमाणतया रसस्याभिव्यक्तिनिष्पत्त्या कार्यत्वव्यवहारोपपत्तेः।[१] इयं च रसप्रतीतिः प्रत्यक्षादिप्रमितेः विलक्षणैव तस्या घटपटादिबाह्यपदार्थविषयतया अलौकिकत्वात् अस्याश्चान्तरनित्यसुखप्रकाशरूपत्वात् धायेत परिमिततया स्वात्मभिन्नतया[२] जगदध्यक्षयन्ति, योगिनः तज्ज्ञानादपि इयं विलक्षणा तादृशयोगिज्ञानस्य ताटस्थ्येनैव[३] जगदवभासकत्वात्। अस्याश्च स्थाय्यभिन्नतयैव विभावादिविषयत्वादेवमपरिमिताद्द्वितीयात्ममात्रपर्यवसितयोगिज्ञानादपि विलक्षणेयं, तादृशयोगिज्ञानस्य वेद्यसंस्पर्शरहितत्वात् अस्याश्च विभावादिपरामप्रधानत्वात्। अतः लोकविलक्षणेयं रसप्रतीतिः। एवं च एतादृशालौकिकप्रतीतौ प्रकाशमानत्वेन रसस्य ज्ञाप्यत्वव्यवहारोऽपि औपचारिक एव न च तस्य मुख्यमेव ज्ञाप्यत्वमास्तामिति वाच्यम्। किं तत्ज्ञापकं निर्विकल्पकं सविकल्पकं वा ? नाद्यः। रसप्रतीतेः विभावादिसंवलनावगाहितया निर्विकल्पकत्वानुपपत्तेः। नान्त्यः। सविकल्पकविषयत्वे रसस्य सविकल्पकान्तरविषयघटादिवच्चर्वणैकसारता लोकोत्तरानन्दरूपता

---

१. M. °व्यवच्छेदयोगोपपत्तेः for °व्यवहारोपपत्तेः

२. M. स्वाभिन्नतया for स्वात्मभिन्नतया

३. M. योगिनैव for ताटस्थ्येनैव

स्वसंवेदनमात्रसिद्धता च न स्यात्। न चैवमितरनिषेधस्येतरविधिनान्तरीयकतया रसप्रतीतेः निर्विकल्पकभिन्नतया सविकल्पकत्वं, सविकल्पकभिन्नतया निर्विकल्पकत्वं च इत्युभयात्मकत्वं विरुद्धमापद्येतेति वाच्यम्। उभयात्मकत्वमपि पूर्ववल्लोकोत्तरतामेव तस्याभिव्यनक्ति न विरोधम्। वस्तुतः स्वप्रकाशात्मस्वरूपसंविदः[1] तृतीयकोटेरपि सत्त्वात् उभयभेदेऽपि नोभयात्मकत्वमित्यनवद्यम्। ततश्च सूत्रगतं संयोगपदं संवलनपरम्। निष्पत्तिपदं च अभिव्यक्तिपरम्। यद्यपि काव्ये नाट्येऽपि विभावाद्यनुसंधानवशात् सामाजिकानां सुखविशेषो जन्यते। स एव रस इत्यापि वक्तुं शक्यम्। तथापि परमप्रेमास्पदत्वेनात्मनः सुखात्मकत्वम् अवश्यं वाच्यम्। ततश्च तदतिरिक्तजन्यसुखकल्पनायां गौरवात् विभावादिसंवलिततया अभिव्यक्तमात्मस्वरूपं[2] सुखमेव रस इत्युक्तम् इत्याहुः।

ननु सूत्रे विभावादीनो मिलितानां निर्देशो न युक्तः[3]। प्रत्येकमेव तेषां रसाभिव्यक्तिसमर्थत्वात्। अतः विभावैर्वा व्यभिचारिभिर्वा संयोगात् रसनिष्पत्तिः इत्येव वक्तव्यमिति चेन्न। तेषामेकैकस्य अनेकरससाधारणतया नैकान्तिकत्वेन मिलितानामेव रसाभिव्यञ्जकत्वात्। तथा हि—व्याघ्रादयो हि भयानकस्येव वीराद्भुतरौद्राणामपि विभावाः। कश्चित्किल व्याघ्रादिकं हिंस्रमालोक्य कातर्याद्बिभेति। कश्चित्पुनः विक्रमादुत्सहते। अन्यः, कुतूहलेन विस्मयते। इतरः क्रुध्यतीति[4] विभावानामनैकान्त्यम् तत्राश्रुपातादयः श्रृङ्गारस्य इव करुणभयानकयोरपि अनुभावाः। तथा हि — यथा कश्चिद्रतिमनुभवन्नानन्देनाश्रु मुञ्चति। तथापरपरदुःखेन शोचन् अश्रुमुञ्चति। तथान्यः सर्पादिदंशात् भीतोऽश्रुमुञ्चतीति अनुभवानामनैकान्त्यम्। तथा चिन्तादयः श्रृङ्गारस्येव वीरकरुणभयानकानाम्। तथा हि— यथा विप्रलम्भे न चिन्ता, तथा उत्साहेन शोकेन भयेनापीति व्यभिचारिणामनैकान्त्यम्। ततश्च विभावादीनां प्रत्येकमनेकरससाधारण्यात् नैकान्त्यम्। ततश्च विभावादीनां प्रत्येकमनेकरससाधारण्यान्नेकैकमात्रदेकस्यापि रसस्याभिव्यक्तिरिति मिलिता निर्दिष्टाः।

ननु मिलितानामपि यत्र साधारण्यं यथा शान्तश्रृङ्गारयोः तत्र हि एकस्या एव कामिन्याःकुपणत्वेन च कान्तात्वेन च परिव्राट्कामुकयोः प्रतीतिविषयत्वात् उभयरस-विभावत्वमश्रुपातस्योभयानुभावत्वं चिन्ताया उभयव्यभिचारित्वं च। तत्र किं विनिगमकमिति चेत् उच्यते। तत्र केषांचित् साधारण्येऽपि असाधारणमन्यं व्यभिचारिणमनुभावं चादाय रसविशेषाभिव्यक्तिः इत्याहुः।

ननु विभावादीनां प्रत्येकमपि रसाभिव्यञ्जकता दृश्यते। तथाहि—

**वियदलिमलिनाम्बुगर्भमेघं मधुकरकोकिलकूजितैर्दिशां श्रीः ।**
**धरणीरभिनवाङ्कुराङ्किटङ्का प्रणतिपरे दयिते प्रसीदमुग्धे ॥**

---

१. M. °संविदि for संविदः

२. M. °मात्रस्वरूपं for °मात्मस्वरूपं

३. M. व्यक्तः for युक्तः

४. M. °त्रस्यतीति for क्रुध्यतीति

इयं रथारूढमानतया प्रसादकालानभिज्ञां कामपि मुग्धां प्रति प्रसादं नेतुकामायाः सख्या उक्तिः। मुग्धे अवसरानभिज्ञे प्रसीदायमेव प्रसादावसरः। कुतः ? नभो मधुप-श्यामलजलगर्भमेघदन्तुरितं मेघस्य विशेषणद्वयेनोद्दीपकताधिक्यं द्योत्यते तथा भ्रमराणां कोकिलानां च कूजितैर्दिशां श्रीः शोभातिशयो जृम्भते। वसन्त इव वर्षास्वपि कोकिलरतं कविसंमतमेवेति न कालविरोध इति ध्येयम्। भूमिरपि अभिनवाङ्कुरव्याजपाषाणदारवती। ततश्च वियति दिक्षु दिवि वा चक्षुषी अपि निधातुं न शक्यते। दूरेतरां प्राणधारणकथेति व्यज्यते। यदि च प्राणागन्तुनाममानोन्नतं[१] प्रियं न द्रष्टुमपि उत्सह इति मन्यसे तदपि नास्ति। यतोऽयं प्रणतिपद इति। अत्र केवलं दयित इत्यालम्बनविभवो वियदित्यादिनोद्दीपनविभावश्च निबद्धः। न तु अनुभावव्यभिचारिणौ पुष्कला चात्र रसाभिव्यक्तिः। अतः अत्र विभावमात्रस्य रसाभिव्यञ्जकता दृश्यते। तथा—

**परिमृदितमृणालम्लानमङ्गं प्रवृत्तिः**
**कथमपि परिवारप्रार्थनाभिः क्रियासु ।**
**कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मीम्**
**अभिनवकरिदन्तच्छेदपाण्डुः कपोलः ॥**

शरीरमविरतसन्तापवशेन परितो मृदितबिसवत् म्लानम् अनेन वैवर्ण्यरूपोऽनुभावो व्यज्यते। आहाराद्युचितक्रियास्वपि परिवारप्रार्थनाभिरेव प्रवृत्तिः। न तु स्वत इति प्रवृत्त्यभावेन स्तम्भरूपः प्रलयरूपो वा अनुभावो व्यज्यते[२]। व्यभिचारिणामान्तरत्वेनाप्रत्यक्षत्वात्। क्रियामान्द्यस्य च प्रत्यक्षतया व्यभिचार्यन्तर्भावासंभवेनानुभावान्तरत्वं वा इत्याहुः—सद्यः कृतदन्तिदन्तखण्डधवलो गण्डो निष्कलङ्कहिमकरशोभां कलयतीति अनेनापि वैवर्ण्यं निबद्धम्। एवमत्रानुभावमात्रनिबन्धनेऽपि रसाभिव्यक्तिरविकला। तथा—

**दूरादुत्सुकमागते विवलितं संभाषिणि स्फारितं**
**संश्लिष्यत्यरुणं गृहीतवसने संकुञ्चितभ्रूलतम् ।**
**मानिन्याश्चरणानतिव्यतिकरे बाष्पांबुपूर्णं क्षणात् ।**
**चक्षुर्जातमहो प्रपञ्चतुरं जातागसि प्रेयसि ॥**

दूरे प्रिये दृष्टे सति उत्सुकं यद्यपि औत्सुक्यं चेतनधर्मः तथापि तदभिव्यञ्जक-व्यापारवत् जातमिति यावत्। अत्रौत्सुक्यं स्फुटम्। आगते विवलितमिति लज्जा। संभाषिणि स्फारितमुत्फुल्लमिति हर्षः। आश्लिष्यत्यरुणमिति कोपः। भ्रूसंकोचनेनासूया बाष्पाम्बुपूर्णतया प्रसाद इति व्यभिचारिणामेवात्र निबन्धनम्। यद्यपि प्रसादो न व्यभिचारिषु परिगणितः तथापि तेन स्वहेतु भूता मतिः उपलक्ष्यते। शास्त्रार्थानुसंधानेनार्थनिर्धारणा हि मतिः। अत्रापि

---

१. M. °मानोऽन्तरं for °मानोन्नतं

२. Pr. द्योतते for व्यज्यते

प्रसादान्तो[१] मान इति मदनशास्त्रानुसंधानेन प्रियश्चरणानतो यतः ततः प्रसाद एवोचित इत्यर्थनिर्धारणावश्यंभावादित्याहुः । एवं चात्र व्यभिचारिणामेव व्यञ्जकत्वं दृश्यते। ततः कथं मिलितानामेव व्यञ्जकतेति सूत्रकारोक्तं सङ्गच्छत इति चेत्, सत्यम्। तथापि एतेषां विभावादीनां रसान्तरसाधारण्याभावेनासाधारणत्वात् स्वानुकूलेतरद्वयाक्षेपेणैव रसव्यञ्जकता। न तु प्रत्येकं रसप्रतीतेः विभावादित्रितयसंवलितस्थायिविषयत्वस्वाभाव्यात्।

ननु एवं कार्योन्नेयधर्माणां यथाकार्यमुन्न्यनाद्रसप्रतीत्यनुरोधेनानुपात्ता अपि विभावादयो अनुमित्याक्षेपेणैवोपनीता रसचर्वणाविषया इत्युक्तं स्यात्। ततश्च कष्टकल्पनया[२] व्यक्तिरित्यग्रे वक्ष्यमाणो दोषः प्रसज्येतेति चेत्, न। यत्र हि अनुभावविभावयोः उपात्तयोः अपि प्रणिधानगम्यत्वं, तत्र प्रतीतिविलम्बनेन दोषस्य वक्ष्यमाणत्वात्। अत्र चानुमितेः आक्षेपस्य वा संभृतसामग्रीत्वेन प्रतीत्यविलम्बादित्याहुः। अन्ये तु विभावादीनामसाधारण्ये प्रत्येकतेव व्यञ्जकत्वसंभवादितराक्षेपकल्पना न युक्ता। व्यञ्जकाननुगमस्य व्यङ्ग्यभेदानापादकत्वेनादोषत्वात्। अत एव सूर्यालोकदीपप्रकाशादिव्यञ्जकभेदेऽपि न व्यङ्ग्यघटादिभेदो रसाभिव्यक्तिषु तु तृणारणिमण्यादिजन्यवह्निष्विव वैजात्यकल्पनं न दोषावहमिहत्याहुः - रससामान्यलक्षणं तु रसत्वमेव। न च तत्र मानाभावः रसपदशक्यतावच्छेदकत्वेन तत्सिद्धेः। तच्च बाधकाभावात् जातिरखण्डउपाधिर्वैत्याहुः। अथ प्राप्तावसरतया रसं विभजते—

**शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।**
**बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्यरसाः स्मृता ॥७८॥**

अत्राष्टौ रसा इति वाच्ये यन्नाट्यग्रहणं तत्काव्येष्वपरोऽपि रसोऽस्तीति द्योतयितुम्। तथा च नाट्येऽभिनयेन चमत्कारकारिणोऽष्टावेव रसाः शान्ताभिनयस्य तु न चमत्कारित्वम्। अतः स काव्य एवोपनिबद्धः स्वदत इति तात्पर्यम्। शान्तो रसो नाट्येऽपीत्यन्ये-तत्र शृङ्गारं लक्ष्यति—

**स्थायी रतिर्यत्र मतः स शृङ्गाररसः स्मृतः ॥७९॥**

रतिः नाम यूनोरन्योन्यविषया[३] प्रीतिः एक एव नित्यः सुखविशेषः सर्वेषु रसेषु स्थायीति पक्षे तत्तद्विभावादिभिः अङ्कुरादिदशा नीयमानं नित्यं सुखमेव रतिहासादि संज्ञां लभते। तत्तद्विभावादिसंवलिततय चर्व्यमाणं तु तदेव शृङ्गारहास्यादिरससंज्ञां लभत इति ध्येयम्। तमेव शृङ्गारं विभजते—

सम्भोग विप्रलम्भात्मा शृङ्गारो द्विविधो भवेत् तत्र संभोगं विभजते।

---

१. M. प्रणामन्तो for प्रसादान्तो

२. M. क्लिष्ट° for कष्ट°

३. Pr. °विषयी for °विषया

संभोगोऽत्रालोकनादिभेदाद्यद्यप्यनेकधा ।
तथापि कामिनीकान्तारब्धभेदाद्द्विधा मतः ॥८०॥
यथा यथा किरत्येषा कटाक्ष विशिखान् प्रिये ।
तथा तथा वहत्येष सान्द्ररोमाञ्चकञ्चुकम् ॥८१॥

तत्र संभोगो यद्यपि नायिकानायकयोः परस्परालोकनसंभाषणलिङ्गनचुम्बनादिभेदादनेकविधः संभवति तथापि तदवान्तरभेदानामानन्त्यात्परिगणयितुमशक्यतया सामान्यतो नायिकारब्धो नायकारब्धश्चेति द्विविधः। तत्र यथा यथेत्यर्थे नायिकारब्धः तथा तथेत्यर्थे नायकारब्धश्च संभोगो द्रष्टव्यः। तत्र नायिकारब्धे नायकआलम्बनविभावः। कटाक्षवीक्षणमनुभावः। तदनुमितमौत्सुक्यं व्यभिचारि। नायकारब्धे तु नायिकालम्बनविभावः रोमाञ्चोऽनुभावः। तदनुमितमौत्सुक्यं[२] व्यभिचारीति द्रष्टव्यम्[३]। यथा वा—

शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनैः
निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।
विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥

अत्र वासगृहं शून्यं विलोक्य शयनाच्छनैः किंचिदुत्थाय प्रेयस्यनुरागशोधनाय कपटनिद्रामुपागतस्य पत्युर्मुखं सुचिरं निरीक्ष्य विस्रब्धं परिचुम्ब्य जातपुलकां पत्युर्गण्डस्थलीमालोक्य, नम्रमुखी बाला हसता प्रियेण चिरं चुम्बितेति वाच्यार्थकक्ष्या शब्दार्थानुशासनमात्रविदां गोचरः। शून्यवासगृहविलोकनमुत्थानस्य उत्थानं मुखनिर्वर्णनस्य तच्च परिचुम्बनस्य तच्च पुलकोद्गमस्य तदवलोकनं च लज्जायाः सा च मुखावनतेः सा च प्रियचुम्बनस्य कारणभावमालम्बत इत्यर्थवैचित्र्यकक्ष्या त्वालंकारिकाणां गोचरः। ध्वन्यध्वनीनां तु संभोगश्रृङ्गारः चर्वणैकपथमध्यास्ते। तथा हि— शून्यमिति विजनतया चुम्बनयोग्यता वासगृहमिति स्रक्चन्दनादिसामग्रीसमग्रतया उद्दीपकता विलोक्येति विलोकनस्य पौनः पुन्यलक्षणो विशेषः। तेन च मौग्ध्यातिशयः किंचिदुत्थायेति पूर्वकायमात्रेण शय्यानत्यागः, तेन च नायकोरुसंदानितोरुकाण्डता, शनैरिति मिथः संदानितोरुसंक्षोभेण पत्युः उत्थानभीरुता उपागतस्येति व्याजनिद्रायाः तदानीमेव प्राप्ततया च व्याजनिद्रापक्रम[४]समय एव तथा चुम्बितुमुपक्रान्तमिति तस्या अनुरागातिशयः सुचिरमिति सुचिरनिर्वर्णनेऽपि व्याजनिद्रानिश्चया[५]भावात् तस्या मौग्ध्यातिशयः तस्य व्याजनिद्रागोपननैपुण्यं च पत्युरिति

१. M. om. °रस°
२. M. °अभिलाषा for °औत्सुक्यं
३. M. om. द्रष्टव्यम्।
४. M. om. पक्रम
५. M. °निश्चलभावात् for °निश्चयाभावात्

वोढृत्वमात्रं न तु पूर्वं उपभोक्तृत्वं विस्रब्धमित्यविमृश्यकारितायाः पराकाष्ठा परिचुम्ब्येति चुम्बनस्य परितः स्वाच्छन्द्येन प्रवृत्तिर्जातपुलकामिति पुलकानामवशादाविर्भावः आलोक्येति ईषदवलोकनमात्रेण इत्ययमर्थो नम्रमुखी न तु नमितमुखीत्ययमर्थः। तेन च लज्जातिशयादस्या मुखानमनेऽपि न स्वातन्त्र्यं, तत्तु लज्जयैव स्वयं नतमित्यर्थः। पत्युरिति प्राङ्निर्दिश्य प्रियेणेति प्रतिनिर्देशात् तदानीं तस्याधिकप्रेमविषयत्वं, हसतेति तदनुरागपरिज्ञानेन तस्य हर्षातिशयो बालेति चुम्बनचौर्याचातुर्यं चिरमिति यावता समयेन लज्जामवधूय संभोग-प्रस्तावाङ्गीकारः तावत्कालं चुम्बितेति व्यज्यते। अत्र विस्रब्धपरिचुम्बनान्तं श्रृङ्गारस्य नायिकारब्धत्वं प्रियेण हसतेत्यादौ नायकारब्धत्वं च तेन संभोगश्रृङ्गारद्वयमपि इहाभिव्यज्यते। अत्र नायकविषयकरतेः नायक एवालम्बनविभावः। शून्यवासगृहादिकमुद्दीपनविभावः। किंचिदुत्थानादिकमनुभावः। तदनुमितौत्सुक्यादयो व्यभिचारिणः। नायकविषयकरतेः[1] नायिकैवालम्बनविभावः। हासोऽनुभावः। तदनुमितहर्षादयो व्यभिचारिण इति ध्येयम्। अत्र संभोगस्य द्वयोरब्धत्वेऽपि[2] प्राधान्येन नायिकारब्धत्वान्नायिकारब्धस्यैवेदमुदाहरणमिति केचित्[3]। तन्मते नायिकारब्धे यथा—

> **त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं**
> **लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि ।**
> **शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो**
> **निर्यातः शनकैरलीकवचनोपन्यासमालीजनः ॥**

हे मुग्धाक्षि त्वं कञ्चुलिकया निचोलेन विनैव न तु विनापि। मनोहारिणीं[4] लक्ष्मीं धत्स इति अभिधायिनि प्रियतमे तद्वीटिकां निचोलबन्धनग्रन्थिं संस्पृशति सति रिंसाविर्भावेन शय्योपान्ते निविष्टा सस्मिता च या सखी नायिका तस्या नेत्रोत्सवेन नेत्रोल्लासेनानन्दित अलीजनोऽलीकवचनोपन्यासम्—

> **दशत्यसौ परभृतः सहकारस्य मञ्जरीम् ।**
> **तमहं वारयिष्यामि युवाभ्यां स्वैरमास्यताम् ॥**

इत्यादिरलीको मिथ्याभूतो वचनोपन्यासो यत्र क्रियायां सा यथा भवति तथा शनकैरेकैकशो युगपद्गमनस्य शङ्कावहत्वात् निर्यात इत्यत्र नायिकाविषयकरतेः नायिकालम्बन[5] तद्वीटिकास्पर्शनादिकमनुभावः। अभिधायिनि संस्पृशीति अभिधान-

---

१. M. om. °विषयक
२. M. द्विधा for द्वया
३. M. कश्चित् for केचित्
४. M. om. from मनोहारिणीं लक्ष्मीं to अभिधायिनि प्रियतमे
५. M. add विभावः after नायिकालम्बन

संस्पर्शनयोः एककालत्वप्रतीतेः तदनुमितकालाक्षमत्वलक्षणमौत्सुक्यं व्यभिचारीति संभोगो व्यज्यते। . . . . . विप्रलम्भं विभजते—

**अभिलाषवियोगेर्ष्याविप्रवासैश्च शापतः ।**
**समुत्पन्नो विप्रलंभः पञ्चधा परिकीर्तितः ।।८२।।**

तत्राभिलाषहेतुकं लक्षयति—

**प्रागसंगत्योर्यूनोरनुरागेऽपि जाग्रति ।**
**अयोगः पारतन्त्राद्यैर्विप्रलम्भोऽभिलाषजः ।।**
**भूयोऽपि किं नु पश्यामि प्रियं मन्मथमन्मथम् ।।८३।।**

पूर्वसङ्गतिविधुरयोः नायकयोः अनुरागे समग्रेऽपि पारतन्त्र्यात् दैवाद्वा कुतोऽपि हेतोरसङ्गमोऽभिलाषहेतुको विप्रलम्भः। अयं च पूर्ववत् द्विधा नायिकारब्धो नायकारब्धश्चेति। तत्राद्यस्य भूयोऽपीत्युदाहरणम्। द्वितीयो यथा—

**प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढ़रागोदयाः**
**तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि**
**यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधीक्षणात्**
**आशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ।।**

अभिलाषहेतुके विप्रलम्भे चक्षुः प्रीतिमनः सङ्गसङ्कल्पाद्या दशावस्था भवन्तीति वक्ष्यते। तत्र सङ्कल्पदशामापन्नस्य माधवस्य इयमाशंसा। मुग्धदृशोऽनतिप्रौढ़यौवनतया मुग्धा विलासचेष्टानभिज्ञा दृग्यस्याः तस्याः मालत्या निसर्गमधुराः स्वभावसुन्दराः ताः ता वाङ्मनसागोचराः चेष्टाविलासविशेषा मयि प्रेम्णार्द्रा अनुकूल्यशालिनः किं भवेयुः ? प्रेम च दर्शनाद्वा श्रवणाद्वाविर्भूता पीतिः। तदुक्तम्—'संदर्शनादि जनिता प्रीतिः प्रेम निगद्यत' इति। तथा प्रणयस्पृशश्च किं भवेयुः ? प्रणयश्च प्रकृष्टं प्रेमैव। तदाह—'प्रेम नीतं प्रकर्षं चेत्तदा प्रणय उच्यत' इति। तथा परिचयादुद्गाढ़रागोदयाश्च किं भवेयुः ? प्रणय एव 'नित्यानुरञ्जनक्षमो राग' इत्युच्यते। तदुक्तम्—'रागोऽभिधीयते गाढः प्रणयो रञ्जनक्षम' इति। यासु चेष्टा—स्वाशंसा परिकल्पितास्वपि मनोरथमात्रविषयास्वपि मनसो बाह्येन्द्रियप्रवृत्तिविरोधी लयो निर्व्यापारता क्षणाद्भवति।

ननु इयमवस्था मूर्छासाधारणीत्यत उक्तमानन्दसान्द्र इति। अयमभिलाष-विप्रलम्भश्रृङ्गारः—

**चक्षु प्रीतिर्मनः सङ्गः सङ्कल्पोऽथ प्रजागरः ।**
**अरतिः संज्वरः कार्श्यं लज्जात्यागो भ्रमो मृतिः ।**
**दशावस्था भवन्त्येता विप्रलम्भेऽभिलाषजे ।।८४।।**

तत्र चक्षुः प्रीतिं लक्षयति—

चक्षुः प्रीतिस्तु कथिता तदेकालोकने रतिः ।
पश्यन्त्यनिमिषं कान्तमासीच्चित्रार्पितेव सा ॥८५॥

यथा वा—

चित्रे भवन्तं लिखितं चिराय निध्याय निध्याय नितम्बवत्याः ।
प्राप्तादृगाकार इवानिमेषभावेऽपि मीनप्रतिमानमुद्राम् ॥

इयं चक्षुः प्रीतिः श्रवणप्रीतेरपि उपलक्षणम् यथा—

सखीजनानां सरसोक्तिगुम्फेष्वनुत्तराया हरिणेक्षणायाः ।
त्वद्वर्णनाकर्णनसौमनस्यमकुण्ठतायां श्रवसः प्रमाणम् ॥

मनः सङ्गस्तु मनसस्तदेकायत्तता सदा ।
नपुंसकमिति ज्ञात्वा तां प्रति प्रेषितं मनः ।
तत्तु तत्रैव रमते हताः पाणिनिना वयम् ॥

यथा वा—

चिराय चिन्तोपथिदूतिकामुखात्समेत्य सङ्केतगृहं मनो विभोः ।
असौ परावेक्षणशङ्कयाबला बहिर्निर्गन्तुं चकमे बलादपि ॥

अथ सङ्कल्पः—

सततं तद्गतां चिन्तां सङ्कल्पं सप्रचक्षते ।
दुर्लभा वल्लभा नूनं रागोऽपि मम कोऽप्यसौ ।
नेत्रे च दूतीं निपुणां न जाने भवितव्यता ॥८६॥

यथा वा—

चिन्ता मृषा दूतिकयैव चेतश्चोरेण योगं तु लभंलभेय ।
आभिः किमित्याहितबुद्धिरिद्धा सखीरशेषाः समुपेक्षते सा ॥

अथ प्रजागरः—[1]

प्रजागरसुचिन्ताभिर्निद्राक्षतिरहर्निशम् ।
निमेषणं कथाशून्यं निशि नीलोत्पलश्रियम् ।
अपनिद्रं दिवाम्भोज शोभामेति तदीक्षणम् ॥८७॥

---

१. M. om. अथ प्रजागरः

यथा वा—

तन्तन्यमाने तनुमध्यमायाः सङ्कल्पतस्तावकसंप्रयोगे ।
कृतस्य किं कल्पनयेति मन्ये स्वप्नोऽपि साप्नोति कदापि चैनाम् ॥

अथारतिः—

अरतिस्तु भवेद्द्वेषो हृद्येष्वपि च वस्तुषु ।
चन्द्रं कलयते तन्वी चक्रवाकीव पावकम् ॥८८॥

यथा वा—

निमीलयत्यक्षि निशाधिनाथं तमीचरं वीक्ष्य तलोदरी सा ।
समीरणात्त्रस्यति जीवितेशसमीपतो हस्तसमागतात्किम् ॥

अथ संज्वरः—

संज्वरः तनुसन्तापभरः स्मरशरोद्भवः ।
तापस्तन्व्यायदिरनिश्चन्दनादपि शीतलः ॥८९॥

चन्द्रातमालेपचमत्कृतोऽपि चन्द्रोपलः चन्दनपङ्कलिप्तः ।
तदङ्गसङ्गाद्गततत्क्षणेन तप्तायसोरीतिमुरीकरोति ॥९०॥

अथ कार्श्यम्—

कार्श्यं तु स्मरसन्तापविहिता तनुता तनोः ।
ऊर्मिकां कङ्कणं तच्च तनुतेऽङ्गदमद्य सा ॥९१॥

यथा वा—

आक्रम्य तारुण्यबलेन कार्श्यमादौ सुदत्स्याः किल मध्यदेशम् ।
सा[१]द्य संप्रत्यतनुप्रतापमखण्डमाक्रामति चाङ्गदेशम् ॥

अथ लज्जात्यागः—

लज्जात्यागस्तु कन्दर्पसन्तापेन त्रपाक्षतिः ।
स्वप्नेऽद्य तेन पृष्टापि भूया नावोचमुत्तरम् ।
किं नु कुप्येत मय्येष इति पृच्छति सा सखीम् ॥९२॥

---

M. om. from अथ संज्वरः to अथ कार्श्यम्

१. Pr. अनाद्य for आसाद्य

यथा वा—

**भवत्प्रसङ्गे रहसि प्रसक्ते साक्षेपमैक्षिष्ट सखीः पुरा या ।**
**सैव स्वयं गायति सांप्रतं तु यशोऽनिशंते यदुवंशकेतोः ।।**
**भ्रमः स्याद्यथाज्ञानं त्वन्मयं वेत्ति सा जगत् ।।**

यथा वा—

**हरिः समेतीत्यभिगम्य कीरं विधुर्विभातीत्यवलोक्य चन्द्रम् ।**
**पद्मानुरागी स्फुरताति भानुं प्रेक्ष्य भ्रमं गोपयते निजं सा ।।**
**मृतिस्तु मरणोद्योगः पश्यन्तीन्दुं ससाहसा ।।**

साक्षान्मरणस्याशोभनत्वात्तदुद्योग एव मृतिः। प्रत्युज्जीवनसंभावनायां मरणमपि केचिन्निबध्नन्ति। तदयुक्तम्। अन्यतरमरणेऽपि अन्यतरजीवने का तत्र स्नेहगणना तदुभयमृतौ न समागम इत्याहुः—

यथा वा—

**दत्ते चक्षुर्मुकुलितरणत्कोकिले बालचूते**
**मार्गे गात्रं क्षिपति वकुलामोदगर्भस्य वायोः ।**
**दाहप्रेम्णा सरसबिसिनी पत्र मात्रान्तरीयः**
**ताम्यन्मूर्तिः श्रयति बहुशो मृत्यवे चन्द्रपादान् ।।**

एतादृशावस्थाः वक्ष्यमाणविप्रलम्भश्रृङ्गरान्तरेषु अपि एवमुदाहर्यम्।

अथं विरहं लक्षयति—

**यूनोः कुतोऽपि विश्लेषो युक्तयोर्विरहो मतः ।**
**नास्ति किं तत्र चन्द्रोयं यन्नाद्यापि समागतः ।।९६।।**

प्रथमं परस्परानुरागेण संयुक्तयोः मानप्रवासशापातिरिक्तात्कुतोऽपि हेतोः विश्लेषो विरहः।

यथा वा—

**अन्यत्र व्रजतीति का खलु कथा नाप्यस्य तादृक् सुहृत्**
**यो मां नेच्छति नागतश्च हहहा कोऽयं विधेः प्रक्रमः ।**
**इत्यल्पेतरकल्पनाकबलितस्वान्ता निशान्तान्तरे**
**बाला वृत्तविवर्तनव्यतिकरा नाप्नोति निद्रां निशि ।।**

अन्यत्र विपक्षरमणीगृहे गच्छतीति का कथा तच्छङ्कैव नास्ति। तर्हि सुहृदो गृहे विलम्बित इत्यादि न शङ्का युक्ता। यो मां नेच्छति तादृगस्य सुहृदपि नास्ति। इयमेव सुहृदो मय्यनिच्छा। यत्प्रियं स्वगृहेऽवस्थाप्य क्षणमपि मां विरहयतीति। तथापि नागतः। तस्मात् विधेरेवायमपराध इत्यनल्पविकल्पनानिरन्तरहृदया गृहान्तरेव प्रवृत्तविलुण्ठनातिशया बाला

निशि निद्रां नाप्नोतीत्यत्र 'चिरयत्यधिकं कान्ते विरहोत्कण्ठिता मता' इत्युक्तलक्षण-विरहोत्कण्ठिताविषयतया अत्र विप्रलम्भस्य विरहहेतुकत्वं ज्ञेयम्। अत्र नायिकागतरतेः नायक आलम्बनविवर्तनादिरनुभावः चिन्तादिः व्यभिचारीति ध्येयम्। अत्र केचिद्रतिप्रलापादिः करुणोऽपि विरह एवान्तर्भवति, न च करुणो न श्रृङ्गारः तस्य शोकस्थायिकत्वादिति वाच्यम्। पत्युः पुनर्जीवनेन तत्रान्यतरस्यापि रतेरनपायात् तत्प्रकृतिकस्य श्रृङ्गारस्यैवौचित्यात् तथाभूतस्थले त्वजप्रलापादौ करुणरसस्य सौलभ्यात्। कादम्बरीप्रलापादिस्तु तस्याः पूर्वमसंयोगादभिलाषजविप्रलम्भ एवान्तर्भवतीत्याहुः।

ईर्ष्याहेतुमाह–

**ईर्ष्याहेतुर्विप्रलम्भो विश्लेषः सागसि प्रिये ।**
**धन्याहं त्वत्प्रिया नाम प्रापितास्मि शठाद्य यत् ।।९४।।**

प्रिये गोत्रस्खलनान्यासंभोगादिना कृतापराधे सति यो विश्लेषः स ईर्ष्याहेतुको विप्रलम्भः। यथा-धन्याहमितीयं गोत्रस्खलनात् कृतापराधं शठं प्रति नायिकोक्तिः। यथा वा–

**सा पत्युः प्रथमापराधसमये सख्योपदेशं विना,**
**नो जानाति सविभ्रमाङ्गवलना वक्रोक्तिसंसूचनम् ।**
**स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्राम्बुजा,[1]**
**बाला केवलमेव रोदति लुठल्लोलालकैरश्रुभिः ।।**

सख्या कृतमुपदेशं विना सविभ्रमं सव्याजमङ्गानां वलनं पराङ्मुखीकरणं वक्रोक्तीनां सोल्लुण्ठोक्तीनां सूचनं च न जानाति। किं तु स्वच्छैरञ्जनकालुष्यरहितैः तेन[2] मानात्प्रसाधनवैमुख्यं व्यज्यते। अच्छेतिमानकृतेन क्षणविप्रलम्भेनापि वैवर्ण्यं जातमिति व्यज्यते। कपोलमूलं कर्ण जाहप्रान्तदेशः[3] तत्र गतिलतै इत्यनेन विप्रलम्भकृततापासहतया स्थातुमशक्त्या[4] शय्यायामेव लुठतीति व्यज्यते। अन्यथा बाष्पाणां कपोलमूलगलनासंभवात्। अत एव लुठल्लोलाकैरश्रुभिः पर्यस्ते परितोऽस्ते विरुद्धे न तु प्रान्तमात्रे नेत्राम्बुजे यस्याः सा बाला मानोपायानभिज्ञा केवलं रोदिति। अत्र नायिकाविप्रलम्भस्य नायक आलम्बनम्, अश्रुपातादयोऽनुभावाः, मानो व्यभिचारीति ध्येयम्। अत्र यद्यपि स्त्रीणामीर्ष्याकृतो मानः कार्योऽन्यासङ्गिनि प्रिये' इत्युक्तया मानस्य नायिकाकर्तुकतैव। तथापि तत्र 'प्रणयमानः स्यात्कोपोपहतयो द्वयोः' इत्युक्त्या प्रणयान्नायककर्तुकतापि मानस्य क्वचिद्भवति यथा–

---

१. M. °नेत्रोत्पचा for नेत्राम्बुजा
२. M. अनेन for तेन
३. M. °प्रदेशः for °प्रान्तदेशः
४. M. om. °अशक्त्या

अस्मिन्नेव लतागृहे त्वमभवस्त्वन्मार्गदत्तेक्षणा
सा हंसैः कृतकौतुका चिरमभूद्गोदावरी सैकते ।
आयान्त्या परिदुर्मनायितमिव त्वां वीक्ष्य बद्धस्तया
कातर्यादरविन्दकुड्मलनिभो मुग्धः प्रणामाञ्जलिः[1] ॥

इदं हि सैकतलतागृहे चिरादागतं श्वश्रूप्रतिबन्धादिना विलम्ब्य समायन्तीं नायिकां प्रति कृतप्रणयकोपं नायकं प्रति दूतीवचनम्। अत्र नायककृतो मान एव। एवमुभयकृतो मानो यथा—

हृदि मम रमणीया काचिदित्यर्थवाक्ये
त्वमिव न जगतीति स्तोतुकामस्य पत्युः ।
सुतसुरधितकोपं सोऽपि चास्थानमानात्
इति समजनि यूनोरेकशय्यावियोगः ॥

अथ प्रवासहेतुकं लक्षयति—

प्रवासजो विप्रलम्भः प्रिये देशान्तरोन्मुखे ।
यामीति दयितेनोक्ते कामिन्याः कनकाङ्गदम् ।
जिज्ञासितुं जीवनाडीं करमूलं किमाश्रितम् ॥९५॥

प्रिये देशान्तरोन्मुखेऽपि प्रवासजो विप्रलम्भः। किमुत देशान्तरस्थित इति कैमुत्यद्योतनायात्रोन्मुख इत्युक्तम्। यथा वा—

प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतम्
धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः ।
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता
गन्तव्ये सति जीवित प्रियसुहृत्सार्थः किमु त्यज्यते ॥

नायके प्रयाणोन्मुखे सति तत्क्षणसञ्जातकार्श्यादिकायाः कस्याश्चित् जीवितं प्रति सोपालम्भोक्तिरियम्[2]। हे जीवितप्रियतमे न तु प्रियमात्रे गन्तुं निश्चितचेतसि चेतस्येव निश्चयं कृतवति न पुनर्मां प्रति यामीत्युक्तवति वलयैः प्रस्थानं कृतं न तु क्रियते। तेन शरीर[3]सादो व्यज्यते। प्रियसखैः सर्वैः विदित्वैव जीवितं जहाति। ततश्च जीविते निर्गच्छति नियमेन सह निर्गमनादस्राणामश्रूणां जीवितं प्रति प्रियसखत्वं, ततश्च त्वनि गच्छति यैः नियमेन निर्गम्यते, तेषु अस्रेषु गतेष्वपि त्वं न गच्छसि धिक्ते निर्लज्जतामिति व्यज्यते। गतं न[4] तु गम्यते तेन

---

१. Pr. प्रणयाञ्जलिः for प्रणामाञ्जलिः

२. M. om °इयम्

३. M. om. °शरीर°

४. M. नानुगम्यते for गतं न तु गम्यते।

प्रियतमस्य गमननिश्चयक्षण एव। यथा क्षणान्तरे लेशोऽपि न निर्गच्छति तथा निःशेषमस्रै र्युगपद्गतमिति व्यज्यते। तथा च बाह्येन्द्रियसादः। तथा धृत्या क्षणमपि न स्थितमिति अन्तःकरणधर्माणां चित्तेन प्रियतमस्य पुरोगन्तुमुद्योगः कृत इत्यन्तः करणस्य च सादो व्यज्यते। एवं सर्वैर्वलयादिभिःसमं युगपत्प्रस्थितं तत् वलयादिरूपः प्रियसुहृत्सार्थः तेषामेकशरीरसहवासात् प्रियसुहृत्वं किमु[१] त्यज्यते, तान्विहाय एकाकितया गमने को हेतुः ? आगमनञ्च नास्त्येव इत्याह-गन्तव्ये सतीति-धिक् त्वां निर्लज्जं यः प्रियतमे गन्तुमुद्यते न गच्छसीति भावः। अत्र प्रवासहेतुको विप्रलम्भः।

अथ शापहेतुं लक्षयति—

**मुन्यादिकोपतोऽश्लेषो विप्रलम्भस्तु शापजः ।**
**माद्रीं दृष्ट्वा रहःशापमपि स्मृत्वा स विव्यथे ।।९६।।**

मुनिदेवस्वाम्यादिकोपजोऽसंभोगः शापहेतुको विप्रलम्भः। यथा पाण्डोः[२] माद्रीसन्निधाने शापवशात् असंप्रयोगेण विप्रलम्भः। यथा वा—

**त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-**
**मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।**
**अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे**
**क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः ।।**

धातुरागैः गैरिकैः शिलायां प्रणयकुपितामालिख्य ममात्मानं त्वच्चरणानतं लिखितुं यावदिच्छामि तावन्मुहुरभिवृद्धैः अश्रुभिः मे दृष्टिः आच्छाद्यते। तस्मिन्नालेख्येऽपि क्रूरः सर्वप्रकारेण दुःखकारी कृतान्तो मन्मथो दैवं वा आवयोः सङ्गमं न सहत इत्यत्र "शापेनास्तङ्गमितमहिमा वर्षभोग्येण भर्तुः" इत्युपक्रमवशेन शापहेतुकता। यद्यप्ययं प्रवासस्यैव भेदः संभवति, तथापि किञ्चिद्भेदमवलम्ब्य पृथगुक्तिः, अन्यथा विश्लेषत्वेन संभोगभिन्नानामैक्यापत्तेः पाण्डोःशापहेतुको विप्रलम्भस्तु प्रवासासङ्कीर्ण इत्याहुः। अथ हास्यं लक्षयति—

**हासः स्थायी भवेद्यस्य स हास्यरस इष्यते ।**
**विकटास्थिमयी माला वस्त्रं चर्माङ्गदं फणी ।**
**उचितोऽहं वरो गौर्या इतीशः सस्मितोऽभवत् ।।९७।।**

यथा वा—

**आकुञ्च्य पाणिमशुचिं मम मूर्ध्नि वेश्या मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे।**
**तारस्वनं प्रहितथूत्कमदात्प्रहारं हाहा हतोऽहमिति रोदिति विष्णुशर्मा।।**

---

१. Pr. किमुत्सृज्यते for किमु त्यज्यते

२. Pr. om. माद्रीसन्निधाने . . . . . असंप्रयोगेण विप्रलम्भः

विष्णुशर्माभिधानः कश्चन श्रोत्रियो हाहा हतोऽहमिति रोदिति। कुतः ? अशुचिं पाणिमाकुञ्च्य आकुञ्चिताङ्गुलिचतुष्टयीघटिताङ्गुष्ठं कृत्वा वेश्या प्रतिपदं प्रोक्षितैः मन्त्रपूतानामम्भसां शीकरैः पवित्रे मम शिरसि[1] तारस्वनमुच्चस्वनं यथा भवति, तथा प्रहितथूत्कं कुञ्चितेनाधरोष्ठसंपुटेनासभ्यः थूत्कारोऽपि यथा भवति तथा प्रहारमदात् पञ्चाङ्गुलिप्रयोगं कृतवतीति यावत् इत्यत्र विष्णुशर्मा आलम्बनं, रोदनादिकमुद्दीपनम्, अवलोककानां हासादिकमनोभावो लज्जादिः व्यभिचारी। काव्यनिबद्धैः एतैः संवलिततया हासाख्यः स्थायी सहृदयैः चर्व्यमाणो हास्यो रस इति ध्येयम्। पूर्वोदाहरणे हास्यो न ग्राम्यः, आत्मस्थश्चात्र ग्राम्यः, परस्थश्चेति भेदः।

अथ करुणं लक्षयति—

**शोकः स्थायी भवेद्यस्य तमाहुः करुणं रसम्।**
**म्रिये प्रियेण चेदेष किं करोतु स्तनन्धयः।**
**न चेदसह्यं वैधव्यमिति मोहमियाय सा ॥९८॥**

अत्र प्रियमरणं विभावः, प्रलापोऽनुभावः, दैन्यविषादादयोव्यभिचारिणः शोकः स्थायी, एभिः काव्यनिबद्धैः अभिनीतैर्वा संवलिततया सहृदयैः करुणरसश्चर्व्यते। तथा वा—

**हा मातस्त्वरितासि कुत्र किमिदं हा देवताः क्वाशिषः**
**धिक् प्राणान् पतितोऽशनिर्हुतवहस्तेऽङ्गेषु दग्धे दृशौ।**
**इत्थं घर्घरमध्यरुद्धकरुणाः पौराङ्गनानां गिर-**
**श्चित्रस्थानपि रोदयन्ति शतधा कुर्वन्ति भित्तीरपि ॥**

प्रशमितां मातरं प्रति अनुशोचन्तीः पौराङ्गनाः प्रेक्ष्य शोचतः कस्यचिदुक्तिरियम्। हे मातः। कुत्र त्वरितासि ? हा देवताः किमिदं कृतम् ? ब्राह्मणानामाशिषः क्व गताः ? प्राणान् धिक्। ये मातरि गतेऽपि तिष्ठन्ति अकाण्ड एवाशनिः पतितः दुः खमेवाशनित्वेनाध्यवसीयते। हे मातर्यतस्तेऽङ्गेषु हुतवहः प्रज्वलति। दृशौ च ते दग्धे इत्थं बर्बरं यथा भवति, तथा। अत एव अर्थ[2] एव रुद्धा। अत[3] एव करुणाः शोकावहाः पौर स्त्रीणां प्रलापाः। चित्रगतानपि जनान् रोदयन्ति। चित्रभित्तीरपि शतधा कुर्वन्तीत्यत्र मृता माता आलम्बनविभावः, हुतवहप्रज्वलनादिकमुद्दीपनं, प्रलापादिकमनुभावः, तद्व्यञ्जिता दैन्यचिन्तादयोव्यभिचारिणः। शोकः स्थायी। एभिः[4] काव्ये निबद्धैः अभिनीतैर्वा संवलिततया सहृदयैः करुणरसश्चर्व्यते।

अथ रौद्रं लक्षयति—

---

१. M. om. मम शिरसि
२. M. om. अर्थ एव
३. M. om. अत एव
४. M. om. एभिः

क्रोधः स्थायी भवेद्यस्य स तु रौद्ररसः स्मृतः ।
कुठारोऽयं कठोरास्थिखण्डनोत्थखणात्कृतिः ।
भिद्यादङ्गानि भूपानां यैर्वृथा मे हतः पिता ।।९९।।

अत्र परशुरामगतः कोपः स्थायी। क्षत्रिया आलम्बनविभावाः। पितृहननमुद्दीपनम्। परुषभाषणादिरनुभावः। तदनुमिता औग्रयामर्षादयो व्यभिचारिणः। यथा वा—

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ।।

इदं हि[1] द्रोणवधक्रुद्धस्याश्वत्थाम्नो वचनम्। इदं द्रोणवधरूपं गुरु महत्पातकं यैर्मनुजपशुभिः पशुप्रायैः धृष्टद्युम्नादिभिः कृतं पशुवदविवेकी न चेत् को वा सन्यस्तशस्त्र-माचार्यं हन्यादिति भावः। यैः निर्मर्यादैरतिक्रान्तधर्मसेतुभिः नरकरिपुप्रभृतिभिरनुमतं वा। यैः भवद्भिः अन्यैः क्षत्रियैः दृष्टं वा ?

ननु 'अस्माकं धृष्टद्युम्ननिवारणे न सामर्थ्यम् अतः तूष्णीं दृष्टमिति नास्मास्वपराध इत्यत उक्तमुदायुधैरिति। तेन तन्निवारणसामर्थ्येऽपि उपेक्षितमिति युज्यते। तेषां भीमार्जुन-सहितानां नरकरिपुणा समं भवतामसृङ्मेदोमांसैर्दिशां बलिं करोमीत्यत्र धृष्टद्युम्नादय आलम्बनविभावाः,[2] गुरुवधादय उद्दीपनविभावाः, साटोपालापोऽनुभावः। उग्रतादयो व्यभिचारिणः, क्रोधः स्थायीति ध्येयम्।

वीररसं लक्षयति—

स्थाय्युत्साहो भवेद्यस्य स वीररस इष्यते ।
चापमानय सौमित्रे शरांश्चाशीविषोपमान् ।
सागरं शोषयिष्यामि पद्भ्यां यान्तु प्लवङ्गमाः ।।१००।।

अत्र सागर आलम्बनविभावः। ससंरम्भालापादिरनुभावः। तदनुमितगर्वादयो व्यभिचारिणः। उत्साहः स्थायी। यथा वा—

क्षुद्राः संत्रासमेनं विजहित हरयो भिन्नशक्रेभकुंभा
युष्मद्गात्रेषु लज्जां दधति परममी सायकास्संपतन्तः ।
सौमित्रे तिष्ठ पात्रं त्वमसि हि न रुषां नन्वहं मेघनाथः
किंचिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ।।

---

१. M. om. हि

२. M. om. °विभावाः

हे क्षुद्राः पराक्रमगन्धानभिज्ञाः हरयः कपयः एनं संत्रासं मुञ्चत। कुतः ? भिन्नैरावतकुम्भा मदीयाः शरा भवदङ्गेषु संपतन्तो लज्जां वहन्ति। अत्र युष्मदिति गात्रेषु इत्युक्त्या भवतां सर्वेषामखिलाङ्गानां युगपल्लक्ष्यत्वेऽपि इति व्यज्यते। सौमित्रे। सुमित्रा-[1] पुत्रेत्यतिबालत्वं तिष्ठ निर्भयमास्स्व कुतः मम रुषां त्वं न पात्रमसि। यतोऽयं मेघनादः यः शक्रमपि बद्धवानस्मि सोऽहमिति व्यज्यते।

ननु इति प्रसिद्धौ। ननु तर्हि कःते शौर्यस्य विषय इत्यत आह-रामं किंचिदन्वेषयामि, तस्य शूरंमन्यत्वात् शूरताभिमानमेव तस्य संभावयति-भ्रूभङ्गेति। अत्र राम आलम्बनविभावो, जलधिनियमनादिः उद्दीपनविभावो, रामान्वेषणादिरनुभावः। तदनुमिता गर्वादयो व्यभिचारिणः, उत्साहः स्थायी। अयं च वीररसो रणवीरो दयावीरो दानवीरश्चेतित्रिविधः। अत्र आद्य उदाहृतः। द्वितीयो यथा–

> **सिरामुखे स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति ।**
> **तृप्तिं न पश्यामि तदापि तावत्किं भक्षणात्त्वं विरतो गरुत्वम् ॥**

इयं हि नागानन्दे गरुडोपहारीकृतशङ्खचूडार्थं स्वदेहं गरुडाहारतया कृतवतो जीमूतवाहनस्य स्वधैर्यालोकन विस्मयस्तिमितं गरुत्मन्तं प्रत्युक्तिः।
दानवीरो यथा–

> **कर्णश्चेत्कवचं ददीत हरये शक्तिं गृहीत्वा स्वयं**
> **जन्मारभ्य समार्जिताय यशसे दत्तो निवासाञ्जलिः ।**
> **स्वामिन् जीवनदायिनोऽपि भुवने सन्त्येव तेषां पुनः**
> **प्रस्तावे कतमस्तवास्तु तनयो विक्रमे पण्डितः ॥**

अथ भयनकं लक्ष्यति–

> **स्थायीभावो भयं यस्य भयानक रसस्तु सः ।**
> **घनगर्जितमाकर्ण्य विशन्तो गिरिकन्दराः ।**
> **ताभ्यः प्रतिध्वनेर्भीता निवर्तन्ते मृगार्भकाः ॥१०१॥**

अत्र घनरवादिरालम्बनविभावो गिरिकन्दरप्रवेशादिः अनुभावः, तदनुमितवेगादिः व्यभिचारी, भय स्थायीभावः ।
यथा वा–

> **ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः**
> **पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।**
> **दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा**
> **पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥**

---

१. M. om. सुमित्रा°

अनुपतति पश्चादागच्छति स्यन्दने रथे ग्रीवाभङ्गेन कण्ठकाण्डविवलनेनाभिरामं यथा भवति तथा मुहुर्बद्धदृष्टिः शरः पश्चाद्भागे पतिष्यतीति भयात् पश्चाद्भागं सर्वमाधिक्येन पूर्वकायप्रविष्टं कुर्वन् अर्धचर्वितैः श्रमवशविवृतान्मुखादभ्रश्यद्भिः दर्भैः कीर्णसरणिरयं मृगः समधिकप्लुतिमत्तया नभस्यधिकं प्रयाति। भूमावल्पं प्रयातीत्यत्र स्यन्दन आलम्बनविभावः। तदनुपतनमुद्दीपनं पूर्वकायप्रवेशश्रमविवृतमुखत्वादयोऽनुभावाः। तदनुमिताः शङ्कात्रासादयो व्यभिचारिणः। एतैर्भयाख्यस्य स्थायिनः परिपोषाद्भयानकरसः। यद्यप्यत्र त्रासस्य व्यभिचारिणः स्वशब्देनोपादानमयुक्तम् तथापि अनुभावस्य पूर्वकायप्रवेशादेः क्लम[1]साधारण्यादत्र त्रासस्य स्वशब्दोपादानेऽप्यदोष इत्याहुः। अथ बीभत्सं लक्षयति—

**स्थायी जुगुप्सा यत्र स्यात् स बीभत्स रसस्स्मृतः ।**
**आन्त्रप्रोतकपालाली भूषणा रावभीषणा ।**
**पीतोच्छर्दितरक्ताक्तस्तना तिष्ठति ताटका ॥१०२॥**

अत्र ताटका आलम्बनविभावः। तदीयान्त्रप्रोतकपालभूषणादिः उद्दीपनविभावः। तदीक्षणजनितवक्त्रकूणनाङ्गसंहृत्यादयोऽनुभावाः। तदनुमिताः शङ्कादयो व्यभिचारिणः। एभिः परिपुष्टो जुगुप्साख्यः स्थायी बीभत्सरसः। यथा वा—

**उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसा-**
**न्यंसस्फिक्पृष्ठपिण्ड्याद्यवयवसुलभान्यग्रपूतीनि जग्ध्वा ।**
**आर्त्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का**
**दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥**

गजादीनां कृत्तिं चर्म प्रथममुत्कृत्योत्कृत्य पृथून्युत्सेधभूयांसि उपचयभूयिष्ठानि अंसयोः स्फिचोरूरुसंधिप्रदेशयोः पृष्ठपीठाद्यवयवेषु च सुलभानि उग्रपूतिनि दुस्सहपूतिगन्ध-मांसानि जग्धवा भक्षयित्वा स्नायून्यस्थिबन्धनसिरा आन्त्राणि सिरान्तराणि नेत्राणि चात्तानि भक्षितानि। येन स तथा प्रेतरङ्क प्रेतेषु पिशाचविशेषेषु दरिद्रः शिशुर्वा अङ्कस्थात्करङ्का-च्छारारादस्थिसंधिषु स्थपुटतया निम्नोन्नततया गतं स्थितं क्रव्यं मांसमव्यग्रमत्वरं प्रकटितदशनः सन्नत्ति भक्षयतीत्यत्र प्रेतरङ्कआलम्बनविभावः, तदीयं कृत्युत्कृन्त-नादिकमुद्दीपनं, तदवलोक जनितो माधवस्य मुखविकारादिरनुभावः, तदनुमितास्त्रासादयो व्यभिचारिणः। एभिः जुगुप्साख्यस्थायिनः परिपोषे बीभत्सरसश्चर्व्यते।

अद्भुतं लक्षयति—

यत्र स्थायी विस्मयः स्यादद्भुताख्यो रसः[3]स्मृतः ।
अनादिकिटिहंसाभ्यामप्यदृष्टाङ्घ्रिशेखरम् ।
अहो महो महदहं महयाम्यधिमानसम् ॥१०३॥

---

१. M. om. क्लम°

२. M. इति स्मृतः for रसस्स्मृतः

३. M. मतो रसः for रसःसमृतः

अयं चाद्भुतरसो दिव्यो मानुषश्चेति द्विविधः। तत्र दिव्यविभावकत्वे दिव्यो, मनुष्यविभावकत्वे तु मानुषः। तत्राद्य उदाहृतः— तत्र महेश्वर आलम्बनविभावः, तदनुस्मरण जनिता नेत्रविकासादयोऽनुभावाः, तदनुमिता हर्षादयो व्यभिचारिणः। एभिः विस्मयस्य परिपोषाददद्भुतरसश्चर्व्यते। मानुषो यथा—

**चित्रं महानेष बतावतारः क्व कान्तिरेषाऽभिनवैव भङ्गिः।**
**लोकोत्तरं धैर्यमहो प्रभावः काप्याकृतिर्नूतन एष सर्गः॥**

युद्धसन्नद्धं कुशमवेक्ष्य रामभद्रस्य वचनमिदम्। एष बालोऽपि महानिव भाति। चित्रमस्याविकारो बताश्चर्यमेषा कान्तिः क्व कुत आगता? भङ्गी अवस्थितिरभिनवैवाननुभूत-पूर्वा अस्य धैर्यं लोकोत्तरम्। अस्य प्रभावः प्रभुत्वमहो अस्याकृतिरवयवस्थानविशेषः कापि वाङ्मनसातीता, तस्मादस्यैष एतादृशः सर्गः सृष्टिः नूतन एव लोकसृष्टिविलक्षण[१] एव इत्यत्र कुश आलम्बनविभावः, तदीयमहत्त्वादयः उद्दीपनविभावाः। तदवलोकनजनिता रामस्य नेत्रविकासादयोऽनुभावाः। तदनुमितहर्षादयो व्यभिचारिणः। एभिः विस्मयस्य स्थायिनः परिपोषादद्भुतरसश्चर्व्यते . . . . . एषां स्थायीभावानां लक्षणमुच्यत इति प्रतिजानीते—

**रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।**
**जुगुप्सा विस्मयश्चेति स्थायिनां लक्ष्म कथ्यते॥१०४॥**

तत्र सामान्यलक्षणमाह—

**चिरं चित्तेऽवतिष्ठन्ते संबध्यन्तेऽनुबन्धिभिः।**
**रसत्वं प्रतिपद्यन्ते प्रवृद्धाः स्थायिनस्तु ते॥१०५॥**

ये चित्ते चिरं वासनात्मनावतिष्ठन्तेऽनुबन्धिभिः विभावादिभिः संबध्यन्ते ततः प्रवृद्धाः सन्तो रसत्वं प्रतिपद्यन्ते ते स्थायिन इत्युच्यन्ते। लक्षणान्तरमाह—

**विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः।**
**आत्मभावं नयत्यन्यान् स स्थायी लवणाकरः॥१०६॥**

विरुद्धैः स्थाय्यन्तरैः अविरुद्धैः व्यभिचारिभिः यो न विच्छिद्यते, अत एव मालतीपरिणयार्थं महामांसविक्रयप्रसङ्गेन श्मशानवाटीगतस्य माधवस्य प्रेतरङ्गादिदर्शनेन जुगुप्सायां समुद्भूतायामपि न रतेः विच्छेद इति द्रष्टव्यम्। अन्यान् विभावादीन् आत्मभावमात्मना सहास्वादविषयतां नयति स स्थायीत्याहुः। एतेषां प्राधान्यमाह—

**भावान्तरोपकार्यत्वात्प्रधानत्वेन ते मताः॥१०७॥**

---

१. M. om. लोक°

तैं स्थायिनो भावान्तैररनुभावैः व्यभिचारिभिश्च उपकार्यतया प्राधान्यं भजन्ते। तदुक्तम्–

**स्थायिनामेव भावानामुपकाराय सर्वदा ।**
**वर्तन्ते सात्विका भावा भावाश्च व्यभिचारिणः ॥१०८॥**

इति।
विशेषलक्षणानि रत्यादीनामह–

**मनोऽनुकूलेष्वर्थेषु सुखसंवेदनं रतिः ।**
**इष्टार्थस्य त्वसंप्राप्तौ सैवोत्कण्ठा निगद्यते ॥१०९॥**

इष्टार्थविषयकः सुखाकारो मानसिको वृत्तिविशेषो रतिः। सैव रतिः इष्टार्थस्यासंप्राप्तौ उत्कण्ठेत्युच्यते। हासं लक्षयति–

**हासो विकृतवेषादिदर्शनान्मानसी क्रिया ॥११०॥**

विकृतवेषवागादिदर्शनश्रवणादिना यश्चेतसो वृत्तिविशेषः स हासः ।
शोकं लक्षयति–

**शोकश्चित्तस्य वैधुर्यमभीष्टविरहादिभिः ॥१११॥**

इष्टविरहादनिष्टप्राप्त्या परदुःखदर्शनादिना वा यच्चित्तस्य वैधुर्यं शून्यता स शोकः। क्रोधं लक्ष्यति–

**प्रतिकूलेषु चित्तस्य वैरं सः क्रोध उच्यते ।**
**प्रतिकूलविषयकचित्तवैरं यत् स क्रोधः ॥११२॥**

उत्साहं लक्ष्याति–

**चित्तस्य स्थिरता सर्वकार्येषूत्साह इष्यते ॥११३॥**

महति संकटे प्राप्तेऽपि यच्चित्तस्य प्रारब्धकार्यनिर्वहणान्मुख्यं स उत्साहः।
भयं लक्षयति–

**भयं चित्तस्य वैक्लब्यं व्याघ्रादिजनितं विभुः ॥११४॥**

व्याघ्रादि हिंस्रदर्शनादिभयहेतूपनिपाते तत्परिहारापरिज्ञानेनेतिकर्तव्यतानभिज्ञता भयम्।
जुगुप्सां लक्षयति–

**जुगुप्सा निन्द्यताज्ञानं दोषसंदर्शनादिभिः ॥११५॥**

अर्थेषु दोषदर्शनादिना या निन्द्यताधीः सा जुगुप्सा।

विस्मयं लक्ष्यति—

**अपूर्वदर्शनाच्चित्तविस्तारो विस्मयो मतः ॥११६॥**

अपूर्ववस्तुदर्शनादिना आद्यः चित्तस्य विस्तारः स विस्मयः।

अनुभावान् लक्षयति—

**अनुभावा विभावादिजन्यास्तद्व्यञ्जिकाः क्रियाः ॥११७॥**

विभावैः व्यभिचारिभिश्च जन्या विभावानुभावव्यञ्जिका भुजाक्षेपकटाक्षविक्षेपादिकाः चेष्टा अनुभवाः। यद्यपि अनुभावभेदा एव स्तम्भप्रलयादयः तथापि—

**विभावैरभुभावैश्च सात्विकैर्व्यभिचारिभिः ।**
**आनीयमानः स्वादुत्वं स्थायी भावो रसः स्मृतः ॥११८॥**

इतिदशरूपके सात्विकानामनुभावात् भेदेन निर्देशात् तान् पृथङ्निर्दिशति—

**स्तम्भः प्रलयरोमाञ्चौ स्वेदो वैवर्ण्यवेपथू ।**
**अश्रुवैस्वर्यमित्यष्टौ सात्विकाः परिकीर्तिताः ॥११९॥**

तेषां सामान्यलक्षणमाह—

**सात्त्विकाः परदुःखादि भावनाभावितात्मजाः ॥१२०॥**

परगतसुखदुःखभावनाभावितात्मत्वं सत्त्वं ततो भवाः सात्त्विकाः। तत्र स्तम्भं लक्षयति—

**स्तम्भो रागादिसंभूतं निष्क्रियाङ्गत्वमुच्यते ।**
**कीलिता कामबाणैः किं निश्चलासीत्तमीक्ष्य सा ॥१२१॥**

यथा वा—

**चित्ते निधत्ते सुदती यदा त्वां निष्पन्दतामेति तदा नितान्तम् ।**
**कथं क्षमास्पन्दिमाशयस्थे विश्वंभराभारभृति त्वयीयम् ॥**

अथ प्रलयः—

**प्रलय सुखदुःखद्यैरन्तरिन्द्रियमूर्छनम् ।**
**हरिणाक्षी तमालक्ष्य मग्ना मोहमहार्णवे ॥१२२॥**

यथा वा—

**ध्यानावधानावसरागतत्वादालिङ्गनानन्दजमोहभाजः ।**
**परिस्फुरन्तः पुलकप्ररोहाः प्राणेषु तन्व्याः प्रतिभूभवन्ति ॥**

रोमाञ्चस्वेदौ लक्षयति—

रोमाञ्चः पुलकोद्भेदः स्वेदस्त्वङ्गाज्जलोद्गमः ।
पुलकैरुद्गिरन्त्यन्तः कामबाणान् प्रियागमे ।
स्मरराज्याभिषिक्तेव स्विन्नाङ्गी कामिनी बभौ ॥१२३॥

यथा वा—

स्वेदाम्बुसिक्ते हृदये सुदत्या रतीशिता संप्रति रागबीजम् ।
अङ्कूरयन् किं पुलकापदेशात्पुनः पुनः सिञ्चति बाष्पपूरैः ॥

अथ वैवर्ण्यम्—

वैवर्ण्यं रागरोषादेर्जनिताङ्गविवर्णता ।
आसीत्प्रियङ्गुश्यामापि शरकाण्डविपाण्डरा ॥१२४॥

यथा वा—

असावपूर्वस्मरधातुवादी सन्ताप्य सन्ताप्य रसानुबोधात् ।
सुवर्णमस्याः सुदृशः शरीरं दुर्वर्णमेवोदितमातनोति ॥

अथ वेपथुः—

रागभीत्यादिजनितं वेपथुर्गात्रकम्पनम् ।
कदलीव च कम्पे सा यामीति प्रेयसोदिता ॥१२५॥

यथा वा—

मध्येनभो मन्दसमीरमस्याः श्वासे सुधादीधितिधाम हासे ।
भुवं नितंबे च पुरा निधाय नेत्रे विधात्राद्य विधीयतेऽम्भः ॥

ततो वैस्वर्यम्—

भवेद्गद्गदभाषित्वं वैस्वर्यं प्रमदादिजम् ।
बाष्पोपरुद्धकण्ठा सा शठं नो वक्ति किञ्चन ॥१२६॥

यथा वा—

किमत्र चित्रं वदकीरवाणि विलासिनी साजनि विस्वरेति ।
इदं तु चित्रं यदुनाथ धत्ते सूक्तिस्तथा सा श्रुतिसङ्गतापि ॥

अथ व्यभिचारिणो निर्दिशति—

निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः ।
आलस्यं चैव दैन्यं च चिन्ता मोहो धृतिः स्मृतिः ॥१२७॥
व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्राऽपस्मार एव च ॥१२८॥

सुप्तं विबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥१२९॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥१३०॥

एषां सामान्यलक्षणमाह—

विशेषेणाभिमुख्येन स्थायिनं ज्ञापयन्ति ये ।
अनुभावादिहेतूंस्तान् वदन्ति व्यभिचारिणः ॥१३१॥

तत्र निर्वेद लक्षयति—

दुखेर्ष्यातत्त्वबोधादेः निर्वेदो निष्फलत्वधीः ।
फलं किमेतैः सखि मे पत्रैश्चण्डकरप्रियैः ॥१३२॥

यथा वा—

कृतं मृणालैः किसलैरलं मे प्रयोजनं किं प्रसवान्तरेण ।
हिताय नेयं हिमवालुकेति संयं निरुन्धे शिशिरोपचारान् ॥

अथ ग्लानिः—

बलस्यापचयो ग्लानिर्वैवर्ण्यारतिकारणम् ।
धराधरादपि गुरुं वेत्ति सा मणिकन्दुकम् ॥१३३॥

यथा वा—

आहार्यभावादिव हन्त हाराहूनाधुना दृप्तगजेन्द्रयाना ।
महीभृतं त्वां हृदये बिभर्ति मनोभवाज्ञां महिमा स एषः ॥

अथ[१] शङ्का—

अनिष्टाभ्यागमोत्प्रेक्षा शङ्का लज्जादिसंभवा ।
ज्ञास्यत्यन्य इतीश त्वां हृदा सा परिरंसया ।
सर्वाङ्गीणैस्तु पुलकैरथापि प्राप लक्ष्यताम् ॥१३४॥

यथा वा—

जानाति यावज्जसतेति शौरे परिस्फुरत्पाण्डिमगोपनायाः ।
अजानती मानसजाग्निदीप्तिं करोति मुग्धा घनसारमङ्गे ॥

अथासूया—

परोत्कर्षासहिष्णुत्वमसूया परिकीर्तिता ।
वीक्ष्य प्रियान्वितामस्यां बालासीदरुणेक्षणा ॥१३५॥

---

१. M. वाच for वक्ति

यथा वा–

महीयते माधवसङ्गतेयं वल्ली भवत्या पुषिताग्राङ्गी ।
आलोकयेत्यालिमुदीरयन्तीमालोकते माधवकुञ्चितभ्रूः ॥

माधवं प्रति रुक्मिणीदूतीवचनमिदम्। अत्र श्लेषमहिम्ना वल्लया माधवसङ्गतिं वदन्तीं मालीं प्रति रुक्मिण्या असूया नर्तितभ्रूरित्यनेन व्यज्यते।

अथमदः–

संमोहानन्दसंभेदो मदिरादिकृतो मदः ।
वदत्यसङ्गतार्थं सा प्रियचिन्तैकतत्परा ॥१३६॥

अथ श्रमः–

श्रमः खेदोध्वरत्यादिजातस्स्वेदादिकारणम् ।
मुहुस्तदागतिभ्रान्त्या खिद्यते सा गतागतैः ॥१३७॥

मदश्रमौ यथा वा–

हसत्यकाण्डे हरिणेक्षणा सा फूत्कृत्य रोदित्यथ साश्रुपूरा ।
गतागतैस्स्विद्यति केवलैस्त्वच्चिन्तासवास्वादनमत्तचिता ॥
अत्र पूर्वार्धे मद उत्तरार्धे श्रमश्च व्यज्यते ।

अथालस्यम्–

क्रियासु मान्द्यमालस्यं सुखदुःखमदादिभिः ।
का वार्ता गृहकृत्येषु त्यक्ताहारविधेस्तनोः ॥१३८॥

अथ दैन्यम्–

सत्त्वत्यागादनौद्धत्यं दैन्यं कार्पण्यसंभवम् ।
क्षणं पिधेहि शीतांशुं सखि ते शतशोऽञ्जलिः ॥१३९॥

आलस्यदैन्ये यथा वा–

अलीजनादेशमपारयन्ती कर्तुं कटाक्षैरुचितक्रियासु ।
त्वदन्तिकं प्रेषयितुं प्रियोक्तीर्ब्रवीति भूयः परिचारिकासु ॥
अत्र अर्धद्वये क्रमादालस्यदैन्ययोः व्यक्तिः ।

अथ चिन्ता–

इष्टानभिगमाद् ध्यानं चिन्ता शून्यत्वतापकृत् ।
किमप्युन्नमितैकभ्रूर्ध्यायति स्वयमेव सा ॥१४०॥

अथ मोहः–

मोहस्तुमूर्छनं भीतिर्दुःखावेशानुचिन्तनैः ।
निरीक्ष्येन्दुं रथाङ्गीव निरीहास्ते निशासु सा ॥१४१॥

चिन्तामोहौ यथा वा—

स्वयं किमप्यस्फुटमालपन्ती पृष्टा पुनर्न प्रतिवक्ति किंचित् ।
समाधिलीनेव ततः क्षणेन सा सामिसंमीलितलोचनास्ते ॥
अत्रापि क्रमाच्चिन्तामोहयोरर्धाभ्यामभिव्यक्तिः ।

अथ स्मृतिः—

स्मृतिः पूर्वानुभूतार्थविषयं ज्ञानमुच्यते ।
पुरा तथानुरक्तस्त्वं जातोऽद्य कथमीदृशः ॥१४२॥

अथ धृतिः—

धृतिश्चित्तस्य नैस्पृहयं ज्ञानानिषृागमादिभिः[1] ।
तदेकसक्तं मच्चित्तमसारं मनुतेऽखिलम् ॥१४३॥

स्मृतिधृती यथा वा—

कर्णातिथित्वं गमिता पुरा यत्कथा तथानन्दममन्दमायात् ।
कीर्तिं तदीयां सखि कीर्तय त्व गीर्भिः किमन्याभिरिति ब्रवीति ॥
अत्रापि अर्धाभ्यां स्मृतिधृती क्रमात् व्यज्येते ।

अथ व्रीडा –

चेतः संकोचनं व्रीडा स्तुतिरागादिसंभवम् ।
तमालोक्या भवत्तन्व्या मीलितं नयनद्वयम् ॥१४४॥

यथा वा—

आहूय लीलाशुकमादरेण बाहूपरि न्यस्य बहूपलाल्य ।
त्वदन्तिकं प्रेषयितुं कृतेच्छा न वाचिकं वक्ति न जोषमास्ते ॥

अथ चपलता—

भावप्रकाशनपरा चेष्टा चपलतोच्यते ।
हारं स्पृशत्युत्तरीयं स्रंसयत्येक्ष्य सा प्रियम् ॥१४५॥

यथा वा—

दृष्ट्वा तमग्रे तरुणी स्पृशन्ती कर्णान्तलोलानलकान् करेण ।
क्षणं प्रवाल श्रवणावतंसमायत्तवैतथ्यपदेऽभिषिक्तम् ॥

अथ हर्षः—

मनः प्रसादो हर्षः स्यादिष्टावाप्त्यादिसंभवः ।
दृष्टे प्रिये ऽभजत्तन्वी वर्षानीपलतोपमाम् ॥१४६॥

---

१. Pr. °भीषृप° for °निषृा°

अथ आवेगः—

इष्टानिष्टागमाज्जात आवेगश्चित्तविभ्रमः ।
निशम्य स्तनितं सद्यः सस्वजे मानिनी शठम् ॥१४७॥

हर्षावेगौ यथा वा—

पञ्चायुधाप्तो विधुरञ्जतीति चन्द्रं समुद्दिश्य सखीभिरुक्ते ।
सा किञ्चिदुत्फुल्लविलोचनाब्जा स्रस्तोत्तरीयाभरणोज्जिहीते ॥

इदं कृष्णं प्रति रुक्मिणीदूतीवचनम्। अत्र तृतीय चतुर्थपादाभ्यां क्रमेण हर्षावेगाभिव्यक्तिः।

अथ जड्यम्—

जाडयमप्रतिपत्तिः स्यादिष्टानिष्टागमादिभिः ।
प्रिये समागते तन्वी न किंचिद्बुधे क्षणम् ॥१४८॥

यथा वा—

संचारिकाप्रेषणसाहसिक्यं कन्याजनानां न कदापि भव्यम्
कामोऽपि मोहं कुरुते बतेति कर्तव्यमेषा न किमप्यवैति ।

अथ गर्वः—

आत्मोत्कर्षोत्थधिक्कारपूर्वो गर्वो बलादिजः ।
तुल्या मया किं सा धूर्तरूपेण तव या प्रिया ॥१४९॥

अत्र पत्नी निन्दापूर्वकमात्मोत्कर्ष[२]प्रतीतेः गर्वो व्यज्यते।

यथा वा—

तातस्ततेभ्यस्तरुणी मतल्ली श्रुत्वा तवात्मन्यनुरागशैलीम् ।
अन्यापनीनायककन्यकाभ्यो धन्याहमेवेत्यभिमन्यते सा ॥
विषादश्चेतसो भङ्ग उपायापायचिन्तनैः ।
गतस्तेनैव मे चेतो मदनो मां स मुञ्चति ।
दूतीमपि न पश्यामि किमत्र करवाण्यहम् ॥
अत्रो[३]पायचिन्तनेन मनसो भङ्गकथनाद्विषादो व्यज्यते ।

---

१. M. मयाद्या for मयी किं

२. Pr. °मात्रोत्कर्ष for °आत्मोत्कर्ष

३. M. °अपाय for उपाय

यथा वा—

श्रृणोमि चेत्तस्य गुणाननङ्ग गुणध्वनिर्मां बधिरीकरोति ।
पश्यामि चित्रे यदि पातकी मे बाष्पो विरोधीति बताकुला स ॥

अथौत्सुक्यम्—

कालाक्षमत्वमौत्सुक्यमभिलाषादिहेतुभि ।
नः परं प्रहरत्यद्य पञ्चबाणः क्षणोऽपि वा[१] ॥१५०॥

अत्र क्षणोऽपि प्रहरवदाचरतीत्यनेन कालाक्षमत्वप्रतिपादनादौत्सुक्यं व्यज्यते।

यथा वा—

दूती मनो वेगवती दुरापा दूरेतरां द्वारवती पुरी च ।
क्षणोऽपि हा कल्पशतायते मे करोमि किं वेति करोति चिन्ताम् ॥

अथ निद्रा—

बाह्येन्द्रियाणां वैकल्यं निद्रादुःखश्रमादिभिः ।
स्वप्ने दृष्ट्वा प्रियं बाहो प्रसारयति सा मुधा ॥१५१॥

अत्र स्वप्नदर्शनेन बाह्येन्द्रियव्यापारो परमप्रतीतेः निद्राव्यज्यते।

अथापस्मारः—

अपस्मारेतिभीत्यादेराकुलीभाव इष्यते ।
स्वप्ने प्रयान्तं त्वां मत्वा मा याहीत्याकुला भृशम् ॥१५२॥

अत्र भृशमाकुलीभावेनापस्मारो व्यज्यते। निद्रापस्मारौ यथा वा—

निमीलयत्यक्षि निशासु नैव निमेषमेषाथ निमीलयेच्चेत् ।
धनुर्धरं वीक्ष्य पुनस्सुमास्त्रं धावत्यविश्रान्तमितस्ततश्च ॥

अथ सुप्तम्—

सुप्तं तु सुखदुःखाद्यैरन्तरिन्द्रियमीलनम् ।
चिरं निद्रातिनिश्चिन्तं त्वदाश्लेषसुखादियम् ॥१५३॥

अत्र निश्चिन्तमित्यंतरिन्द्रियो परमप्रतीतेः सुप्तं व्यज्यते।

यथा वा—

कदा तदालिङ्गनजातमोदमुधासुधावारिधिमग्नचेताः ।
भुजान्तरे तस्य सुखं शयाना रुजां विनेष्ये ऽहमितीहते सा ॥

---

१. M. हा for वा

अथ विबोधः–

> विबोधश्चेतनावाप्तिर्जृम्भाक्षिपरिमुषिकृत्[१] ।
> चिरादुत्स्वप्नतां याता विद्धेवोन्मिषति[२] क्षणात् ।।१५४।।

अत्रेन्मीलतीति विबोधो व्यज्यते।

अथ क्रोधः–

> क्रोधः कृतापराधेषु स्थिरोऽमर्षत्वमश्नुते ।
> याहि याहि प्रिया यत्र कदर्थयसि किं वृथा ।।१५५।।

अत्रानुनेतर्यपि प्रिये कोपाविष्करणेन क्रोधस्य स्थैर्यादमर्षो व्यज्यते।

विबोधक्रौधौ यथा वा–

> राधा न चाहं रतिवल्लभा ते पथि स्खलन् किं पतितोऽसि यद्वा ।
> यावद्वृथा कुप्यति नासु याहीत्युशन्ती मिषतीयमर्थे ।।

अत्र पादत्रयेण क्रोधस्तुर्यपादेन विबोधश्च व्यज्यते।

अथावहित्था–

> अवहित्थाकारगुप्तिर्भवेल्लज्जादि संभवा ।
> निह्नोति सत्व[३]रागत्य निश्वासं कम्पितस्तनम् ।।१५६।।

अत्र सुरतश्रमजनितश्वासस्य सत्वरागत्या विह्ववेनावहित्था व्यज्यते। यथा वा–

> तमालमग्रे तरुणं समीक्ष्य तन्वी भवद्भावनया तदैव ।
> स्विन्नाखिलाङ्गी सवितुः करेण खिन्नाहमस्मीति स लज्जमाह ।

अथोग्रता–

> अपकरिषु पारुष्यमुग्रता तर्जनादिकृत् ।
> जितोऽसि मन्दकन्दर्प त्वज्जेतास्ति हृदि प्रियः ।।१५७।।

अत्रापकारिणिस्मरे पौरुष्यामुग्रता व्यज्यते।

अथ मतिः–

> विमृश्य युक्तिभिः शश्वदर्थनिर्धारणं मतिः ।
> और्वाग्निर्जृम्भते नेन्दुर्यतो दहति मामसौ ।।१५८।।

---

१. M. °मृषि

२. M. °उन्मीलति for उन्मिषति

३. M. यत्व° for सत्व°

अत्र स्वदाहकत्वयुक्त्या चन्द्रस्यौर्वत्वनिश्चयात् मतिः व्यज्यते।

यथा वा—

**विनिन्द्यते हन्त वृथा रसालस्समीपमीशोऽस्य समागतश्चेत् ।**
**निरन्तरं तन्मुरलीनिनादैरङ्गीकृत[1] स्यादयमित्यवैति ॥**

अत्र निरन्तरपल्लवितत्त्वाभावेन भगवतो रसालसमीपानागमननिर्धारणान्मतिः। शास्त्रावधारणं मतिरित्यन्ये ।

अथ व्याधिः—

**व्याधिः शरीरसंतापो विरहादिकृतो भवेत् ।**
**तस्याः शरीरसंतापो यद्यौर्वो हिमशीतलः ॥१५९**

अत्र शरीरतापेन व्याधिः व्यज्यते ।

यथा वा—

**कृताप्लवा सा हिमवालुकाभिः सवालुकायां हिमवापिकायाम् ।**
**[2]दशाननद्रोहि शरानिलार्चिर्दन्दह्यमानाब्धिदशां विधत्ते॥**

अथोन्मादः—

**उत्कण्ठाहर्षशोकादेरुन्मादश्चित्तविभ्रमः ।**
**आगतेयं प्रियतमेत्यालिङ्गति लतामसौ ॥१६०॥**

अत्र लतायां प्रियतमाभ्रान्त्युक्त्या उन्मादो व्यज्यते।

यथा वा—

**ब्रवीषि चेद्‌र्बर्हिणवल्लभं मे तदा समादाय तवैव पिच्छम् ।**
**कर्णावतंसं कलयेऽस्य नान्यद्यशस्तवास्मादिति याचते सा ॥**

अत्राचेतने प्रार्थनयोन्मादो व्यज्यते।

अथ मरणाम्—

**मरणं मरणोद्योगो विरहादिभवो मतः ।**
**चन्द्रमुद्वीक्षते बाला निजजीवितनिस्पृहा ॥१६१॥**

अत्र चन्द्रवीक्षणरूपमरणोद्योगेन मरणं व्यज्यते।

---

१. Pr. °रङ्कुरितः for °रङ्गीकृतः

२. Pr. वशानन for दशानन°

यथा वा—

**चन्द्रांशुलीलावनचन्दनादि वार्तासु चार्ता वरवर्णनीया ।**
**आरम्भ[1]भूमावनुलिप्तगात्री चन्द्रातपं संप्रति सेवते सा ॥**

अथ त्रासः—

**त्रासश्चित्तस्य संक्षोभ आकस्मिकभयादिभिः ।**
**मानिनी स्तनितं श्रुत्वा हठादालिङ्गति प्रियम् ॥१६२॥**

अत्र मानिन्या हठादालिङ्गनेनाकस्मिकभयप्रतीतेः त्रासो व्यज्यते। अपस्मारोऽतिभीत्यादेराकुलीभावस्त्रासत्वाकस्मिकभयादाकुलीभाव इति भेदः ।

यथा वा—

**आशङ्क्य भृङ्गारवमङ्गजातमौर्वीलताटं कृतमेव गुर्वीम् ।**
**ध्यानागतत्वत्परिरम्भणाय दीना मुधा सारयति स्वबाहो ॥**

अथ वितर्कः—

**सन्देहात्कल्पनानन्त्यं वितर्कः परिकीर्तितः ।**
**प्रेषयामि सखीं[2] यद्वा स्वयं यामि तदन्तिकम् ॥१६३॥**

अत्र सखीं प्रेषयामीत्यादिनानेकविकल्पकल्पनाद्वितर्को व्यज्यते ।

यथा वा—

**पश्याम्यलिश्यामलमालि कंचित् स्वप्नोऽनु नाप्नोमि सदैव निद्राम् ।**
**भ्रमो नु मोदेति कदापि बाधा मायैव मारस्य तदित्यवैति ॥**

एवं रसान्तरेष्वपि व्यभिचारिणो यथासंभवमुदाहार्याः । एवं काव्यनाट्यसाधारणानष्टौरसान्निरूप्य काव्यमात्रासाधारणं नवमं रसं निरूपयति—

**निर्वेदस्थायिकः काव्ये शान्तो ऽपि नवमो रसः ।**
**संसारे किमसारे ऽस्मिन् भक्तिं कुरु भवे[3] मनः ॥१६४॥**

यत्र तत्त्वज्ञानादिजनितनिष्फलत्वधीरूपो निर्वेदः स्थायी स शान्ताख्यो नवमो रसोऽपि काव्येष्वस्ति । अत एव व्यभिचारिषु हर्षौत्सुक्यादिषु विद्यमानेषु निर्वेदस्यामङ्गलप्रायत्वेन प्रथममनुपादेयत्वे ऽप्युपादानं व्यभिचारित्वेऽपि तस्य शान्तरसं प्रति स्थायित्वसूचनार्थम्। अन्ये तु सर्वचित्तवृत्तिप्रविलयरूपः शम एव तत्र स्थायी। अत एव- 'जुगुप्साविस्मयशमाः स्थायिभावाः प्रकीर्तिता' इत्युद्भटेनोक्तमित्याहुः ।

---

१. Pr. आराम for आरम्भ

२. Pr. सखीलयद्वा for सखी यद्वा

३. M. हरौ for भवे

'अभावरूपस्य तस्य चेतोवृत्तिरूपत्वाभावेन भावत्वायोगादित्यन्ये। न चात्र काव्यग्रहणं व्यर्थमिति वाच्यम् ।

'न यत्र दुःखं न सुखं न चिन्ता, न द्वेषरागौ न च काचिदिच्छा । रसस्तु शान्तः कथितो रसज्ञैः' इत्युक्ततया समस्तव्यापारप्रविलयलक्षणस्याभिनेतुमशक्यतया तस्य नाट्य रसत्वायोगात् इत्याहुः। तत्रापि वनप्रवेशविविक्तदेशसेवितादेः तदभिव्यञ्जकस्याभिनययोग्यतया नाट्यरसत्वमपि तस्यां विरुद्धमित्यन्ये। स च अनादिसिद्धरागद्वेषवासनानामयं न चर्वणीय इति कथमस्य रसतेति वाच्यम्। तर्हि वीतरागादिभिः श्रृङ्गारादीनामपि अचर्वणीयतया रसत्वं न स्यात् न चैवमपि भरतेन— तस्य विभावाद्यनुपेदशात् कथं रसत्वम्? इति वाच्यम्। तस्य विभावाद्यप्रतिपादनं परमपुरुषार्थतया लोकयात्रातिक्रान्तत्वात्। शक्यं च तत्र विचक्षणैः स्वयमुत्प्रेक्षितुम्। तथा हि आध्यात्मशास्त्राभ्याससत्पुरुषसेवादयो विभावाः, यमनियमादयो अनुभावाः[1], मतिस्मृतिधृतिचिन्तावितर्कादयो व्यभिचारिण इत्यहुः।
यथा वा—

> **अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा,**
> **मणौ वा लोष्टे वा कुसुमशयने वा दृषदि वा ।**
> **तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः**
> **क्वचित्पुण्ये ऽरण्ये शिव शिव शिवेति प्रलपतः ।।**

अत्र भुजङ्गहारसमदृक्तया परिकर्म निस्पृहता। पुष्पास्तरण शिलातलयोः समदृष्टितया भोगोपकरणनिस्पृहता। रिपुसुहृदोः समदृष्टितया पुत्रैषणाराहित्यं चेत्येषणात्रयराहित्यं च व्यज्यते। तेन च शान्तरसाभिव्यक्तिः सहृदयहृदयसाक्षिणी समेधत इति ध्येयम् ।

रसभावतदाभासादीनां व्यक्तावसंलक्ष्यक्रमव्यङ्ग्य इत्युक्तम्। तत्र रसो निरूपितः। इदानीं प्राप्तावसरतया भावं निरूपयति—

> **रतिर्देवादिविषया व्यञ्जिता भाव उच्यते ।**
> **श्यामादूर्वेव वामाङ्गे पाटला देवतावतात् ।।१६५।।**

आदिशब्देन मुनिपुत्रगुरुनृपमित्रादयो गृह्यन्ते।

ननु एवं पार्वत्याः परमेश्वरविषयिणी रतिरपि देवविषयत्वात् भावः स्यात् इति चेत् न। अत्र रतिशब्देन मन्मथानुद्दीपनीयप्रीतिविशेषस्यैव विवक्षितत्वात्। ततश्च पार्वत्याः परमेश्वरविषया रतिरभिव्यक्ता, मन्मथोद्दीप्यतया श्रृङ्गाररस एवेत्याहुः। यथा वा—

> **कण्ठकोणविनिविष्टमीशते कालकूटमापि मे महामृतम् ।**
> **अप्युपात्तममृतं भवद्वपुर्भेदवृत्ति यदि रोचते न मे ।।**

---

१. Pr. विभावाः for अनुभावाः

कालकूटमपि कण्ठकोणविनिविषृतया भवद्वपुरभिन्नवृत्तीति मे महामृतं परमप्रेमास्पदम्।

**दुःखान्यपि सुखायन्ते विषमप्यमृतायते ।**
**मोक्षायते च संसारो यत्र मार्गः स शङ्करः ॥**

इत्युक्तत्वादिति भावः। अमृतं पुनरुपात्तमप्यनायासलब्धमपि भवद्वपुषः सकाशात् भेदेन वर्तेत। यदि तदा तस्य मे रोचत इति भक्तस्य कस्यचिदुक्तिः । अत्र देवताविषया रतिः व्यज्यमाना भाव इत्युच्यते। मुनिविषया यथा—

**हरत्यघं संप्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः ।**
**शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥**

संप्रतीदानीम् अघं पापं हरति। न हि भूते भाविनि वा तादृशी प्रीतिः यादृशी वर्तमान इति रीत्या वर्तमानस्य प्रथमनिर्देशः, तदनन्तरं भूतापेक्षया भाविनि प्रीत्यतिशयादाह-एष्यतो भविष्यतः शुभस्य हेतुः नैतद्भवद्दर्शनमकृतपुण्यैर्लभ्यमित्याह—पूर्वमाचरितैः शुभैः कृतं संपादितं भवदीयदर्शनं शरीरिणां कालत्रितये ऽपि योग्यतां योगो ध्यानसंगतियुक्तिषु इत्युक्ततया अभीषृार्थसंपत्ति अर्हतां व्यनक्तीति नारदं प्रति श्रीकृष्णवाक्ये कृष्णस्य नारद विषया रतिः व्यज्यते। पुत्रविषया यथा—

**एह्येहि वत्स रघुनन्दन रामचन्द्र चुम्बामि मूर्धनि चिरं च परिष्वजामि ।**
**आरोप्य वा हृदि दिवानिशमुद्वहामि वन्देऽथवा चरणपुष्करकद्वयं ते ॥**

यद्यपि इयं महावीरचरिते रामभद्रं प्रति जनकस्योक्तिः तथापि जामातुरपि पुत्रप्रायत्वादत्र पुत्रविषया रतिः व्यज्यते। साक्षात्पुत्रविषया यथा—

**आलक्ष्यदन्तमुकुलाननिमित्तहासैरव्यक्तवर्णरमणीयवचः प्रवृत्तेन् ।**
**अङ्काश्रयप्रणयिनस्तनयान् वहन्तो धन्यास्तदङ्गरजसा मलिनी भवन्ति ॥**

गुरुविषया यथा—

**संसारार्त्या विधुरविधुरो ब्रह्म यत्तद्विचिन्वन्,**
**नानारूपं जगदिदमहं दृषृवानेव पूर्वम् ।**
**हस्ते न्यस्ते सति तव गुरो सांप्रतं मस्तके मे**
**ब्रह्मैवेदं सकलमभववन्नो जगन्नैव चाहम् ॥**

राज़विषया यथा—

**वीर श्रीरघुनाथभूप भवतो गाम्भीर्यतः तादृशात्**
**गाधीभूतमपांनिधिं न बुबुधे प्रालेयभूमीधरः ।**
**धैर्येणैष जितो नियङ्क्तुमिह यन्मन्ये निपत्य ह्रिया**
**श्वेतद्वीपति किं जडप्रकृतयो जानन्ति भावि स्थितम् ॥**

मित्र विषया यथा—

**रेरे कापुरुषापवादपटवः पथ्यं कटु श्रूयताम्**
**इत्थं हन्त पलायितुं किमु वयं पत्या प्रतिष्ठापिताः ।**
**अप्यन्यत्कपयः प्रियापरिभवप्रक्षालनाधूर्वहो**
**रामः क्रूरधनुर्धरो यदि वृथा वैक्लव्यमालम्ब्यते[१] ॥**

कापुरुषाणां कुत्सितपुरुषाणां योऽयमपवादः तद्ग्रहणे पटवो रेरे कपयोऽस्थानभीरवः कटुभूतमपि पथ्यं श्रूयताम्-वयमित्थं पलायितुं किं पत्या रामभद्रेण प्रतिष्ठापिताः वालिहननानन्तरं स्वस्वाधिकारे स्थापिताः। तस्मान्न युक्तं पलायनम्। किं च अन्यदप्युच्यते-रामः प्रियापहरणप्रक्षालनोद्युक्तो यदि वेदाः प्रमाणमिति वद सन्दिग्धे सन्दिग्धवद्वचनमिदम्। तथा च रामभद्र एव सर्वं कार्यं साधयिष्यति तद्वृथा वैक्लब्यमालम्ब्यते। न च तस्यासामर्थ्यमित्याह-क्रूरधनुर्धर इति। वालिहननसमुद्रशोषणादिना दृष्टसारता क्रूरशब्देन द्योत्यते। अत्र पलायमानान् कपीन् प्रति सुग्रीववाक्ये सुग्रीवस्य रामभद्रं प्रति मैत्रीरूपरतिभावो व्यज्यते। एवमन्यदपि उदाहार्यम्। एतेन नवैव रसा इत्यनुपपन्नं देवादिविषयाणां रतीनामपि अभिव्यक्तौ रसान्तरत्वावश्यंभावादित्यपास्तं वेदितव्यम्।

ननु एवमपि व्यभिचारिणां व्यङ्ग्यानां क्वान्तर्भाव इत्याकङ्क्षायामाह—

**एवं भावतया वेद्या व्यञ्जिता व्यभिचारिणः ।**
**क्षणोऽपि विरहे तन्व्याः कल्पकोटिशतायते ॥१६६॥**

देवादिविषयरतिवव्द्यञ्जिता व्यभिचारिणोऽपि भावा एव वेद्याः। उत्तरार्थमुदाहरणम्। तत्र कालाक्षमरूपमौत्सुक्यं व्यज्यते। यथा वा—

**जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया**
**मा मा संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता ततः ।**
**नो यावत्परिरभ्य चाटुकशतैराश्वासयामि प्रियां**
**भ्रातस्तावदहं शठेन विधिना निद्रा दरिद्रीकृतः ॥**

इदं विरहातुरस्य वयस्यं प्रति वचनम्। अत्र जान इति वाक्योपन्यासे ऽव्ययमित्येके। वक्ष्यमाणवाक्यार्थकर्मकमाख्यातमेव तदित्यन्ये। हे भ्रातः सखे। अद्य स्वप्ने प्रियतमा कोपपराङ्मुखी मया दृष्टा। ततो मयि स्प्रष्टुमुद्युक्ते सति पाणिना मा मा स्पृशेति रुदती सती गन्तुं प्रवृत्ता च दृष्टा। तथा गच्छन्तीं प्रियां परिरभ्य चाटुकशतैर्यावन्नाश्वासयामि, तावदेवाहं शठेन विधिना निर्निद्रः कृत इति। अत्र झडिति निद्राविघातकं विधिं प्रति असूया व्यज्यते।

---

१. M. °आलम्बते for आलम्ब्यते

ननु

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालिप्यते मे
क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः ॥

इत्यत्र विप्रलम्भश्रृङ्गारो व्यज्यत इत्युक्तम्। इह त्वसूयाख्यव्यभिचारिभावाभि-व्यक्तिरित्युच्यते। कः पुनरनयोर्विशेष इति चेत्सत्यम्। रसध्वन्यसूयाख्यभावध्वन्योरेक-व्यञ्जकानुप्रवेशलक्षणसंकरस्वीकारेणोभयसामञ्जस्यात्। वैपरीत्येनोदाहरणानुयोगस्या-शोकवनिकानि देशतुल्यत्वादित्येके। विप्रलम्भश्रृङ्गारस्य स्वप्नवृत्तान्तात्मकस्य प्रबोधेन बाधितत्वात् व्यभिचारिभावस्यैवेह साम्राज्यमित्यप्यन्ये। अथ रसाभासानाह—

रसाभासस्तु रत्यादेरनौचित्यप्रवर्तने ।
स्मृत्वा दन्दह्यते चेतो दृशाप्यस्पृशतीं सतीम् ॥१६१॥

यत्र रत्यादेः अनौचित्येन प्रवृत्तिः तत्र रसाभासः। यथा—'स्मृत्वा' इत्यत्राननुरक्तायां रतेः प्रवृत्तेः अनौचित्यप्रवृत्ततया रसाभासः। यत्र परस्परानुरागः तत्र रसः। यत्र तु अन्यतरानुराग एव तत्र न रसः किं तु रसवदाभासमानत्वात् रसाभास एवेति ध्येयम्। यथा वा—

ब्रह्मन्नध्ययनस्य नैष समयस्तूष्णीं बहिः स्थीयताम्
स्वल्पं जल्प बृहस्पते जडमते नैषा सभा वज्रिणः ।
वीणां संहर नारद स्तुतिकथालापैरलं तुम्बुरो
सीतायल्लकफल्लविद्धहृदयः स्वस्थो न लङ्केश्वरः ॥

आयल्लको विरहः स एव फल्लस्तेन विद्धहृदयः। अत्र सीतायामनौचित्येन रावणस्य रतिः प्रवृत्तेत्याभासः। एवम् एकस्या युगपदनेकेषु रतिप्रवृत्तिरपि आभास एव। यथा—

स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे विलेभेयः,
प्राणान् रणमुखमखेयं मृगयसे ।
सुलग्ने को जातः शशिमुखि यमालिङ्गसि बलात्
तपः श्रीः कस्यैषा मदननगरि ध्ययायसि तु यम् ॥

हे। वामाक्षि! कं स्तुमो येन विना क्षणमपि रमसे को वा रणमुखयज्ञे प्राणान् विलेभे विमुक्तवान्, को वा रणाभिमुखमरणजनितपुण्यविभवेन जात इति यावत्। यं त्वं मृगयसे को वा सुलग्ने जातोऽयं त्वमेव बलादालिङ्गसि कस्य वैषा तपः श्रीः यं तु ध्यायसीत्येकस्या अनेकविषयकरागप्रतीते रसाभासः। न च वेश्याया अनेकविषयकरागेऽपि नानौचित्यमिति नात्र रसाभासतेति वाच्यम्। तस्या अपि युगपदनेकानुरागस्यानौचित्यात्।

उत्तमप्रकृतिरुज्वलवेषात्मक इति श्रृङ्गारलक्षणाद्वेश्याविषयत्वे श्रृङ्गारस्य सुतरामसत्त्वाच्च। न च स्तुतिविषयत्वादि नानविधव्यापारवानेक एव नायकः कुतो न स्यादिति वाच्यम्। 'ध्यायसि तु यम्' इत्यत्र तु शब्दोपादानेनान्यव्यवच्छेदलाभात् भिन्नपरत्वस्य व्यक्तत्वात्। 'मदननगरीति' संबोधनेनानेकोपभोग्यत्वप्रतीतेश्चेत्याहुः। यद्यपि काव्यश्रवणनाट्यदर्शनाभ्यां विभावादीनां साधारण्येन ज्ञाने सति सामाजिकानां स्वीयस्थाय्यभिव्यक्तिरित्यलौकिको रसः स्वतो नाभासः तथापि साधारण्यप्रतीतिप्रयोजककाव्यवर्णनादि विषये तत्रानौचित्यप्रतिसन्धानात् तव्द्यङ्ग्ये रसेऽपि आभासत्वव्यवहार इति ध्येयम्। केचित्तु तिर्यगादिषु रसाभासमाचक्षते। तदयुक्तम्। तेष्वपि विभावादिसंभवात्। न च विभावादिज्ञानशून्याः तिर्यञ्चो रसभाजनं भवितुं नार्हन्तीति[1] वाच्यम्। विभावादिसद्भावो हि[2] रसप्रयोजको न विभावादिज्ञानम्। ततश्च

**ददौ सरः पङ्कजरेणुगन्धिगजाय गण्डूषजलं करेणुः ।**
**अर्धोपयुक्तेन बिसेन जायां संभावयामास रथाङ्गनामा ॥**

अत्र गजेनालम्बनविभावेन जनिता वसंतादिभिरुद्दीपनविभावैरुद्दीपिता सुरभिगण्डूषजलदानाद्यनुभावप्रकाशिता, हर्षादिभिः व्यभिचारिभिः उपचिता, करेणो रतिः श्रृङ्गाररसतां प्रतिपद्यते। एवं रथाङ्गरतिरपि। अत एव काव्यप्रकाशिकायां—'ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः' इति श्लोकेन भयानकरसस्तिर्यग्विषयतयोदाहृत इत्याहुः। अथ भावाभासं लक्षयति—

**भावाभासस्तु भावानामनौचित्यप्रवर्तने ।**
**कटाक्षयेत्किं सा बाला पुरा या मां निराकरोत् ॥१६८॥**

अत्राननुरक्तायाम् औत्सुक्यप्रतीतेः भावाभासता।
यथा वा—

**राकासुधाकरमुखी तरलायताक्षी**
**सा स्मेरयौवनतरङ्गित विभ्रमा स्यात् ।**
**तत्किं करोमि विद्धे कथमत्र मैत्रीं**
**तत्स्वीकृति व्यतिकरे क इवाभ्युपायः ॥**

अतिशैशव एव काञ्चिदवलोक्य कालान्तरे तां स्मरतः कस्यचिदुक्तिरियम्। अत्र यौवनं संभाव्य तत्सङ्गमे चिन्ताप्रवृत्तेः अनौचित्यमित्येके। स्वीकृत्युपायत्वेन मैत्रीमनुचिन्तयतीत्यनौचित्याच्चिन्ताया भावाभासतेत्यपरे। सेत्यनेन चा[3]ननुरक्ता

---

१. M. अर्हन्तीति for नार्हन्तीति

२. M. om हि

३. M. om च°

प्रतिसंहितेत्यनौचित्यं चिन्ताया इत्यन्ये। अत्र यद्यपि रसाभासताप्यस्ति तथापि व्यभिचार्याद्यसंवलनदशायां भावाभासतेति ध्येयम्। एवं रसान्तराणां भावान्तराणां चाभासा उदाहार्याः।

तत्र वीररसाभासो यथा–

**गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।**
**उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम् ॥१६९॥**

इत्यादिना लक्ष्मणोत्साहस्य दशरथे प्रवृत्तेः अनौचित्यप्रवृत्तिः। भावान्तरस्यं यथा–

**किं त्वामन्यत वैदेह पिता मे मिथिलाधिपः ।**
**राम जामातरं प्राप्य स्त्रियं पुरुषविग्रहम् ॥**

अत्र सीताया रामभद्रे वाक्पारुष्यरूपोग्रताप्रवृत्तेः अनौचित्यमित्याद्यूह्यम् अथ भावशान्तिमाह–

**भावशान्तिस्त्वभिव्यक्तेः प्रशमे व्यभिचारिणाम् ।**
**विनते विमते तस्या दृक्कोणं शोणिमात्यजत् ॥१७०॥**

यत्र निर्वेदादीनां व्यभिचारिणां प्रशमो व्यज्यते तत्र भावशन्तिः। उत्तरार्धे अमर्षरूपभावप्रशमाभिव्यक्तेः भावशान्तिः।

यथा वा–

**तस्याः सान्द्रविलेपनस्तनयुगप्रश्लेषमुद्राङ्कितं**
**किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते ।**
**इत्युक्ते क्व तदित्युदीर्य सहसा तत्संप्रमार्ष्टुं मया**
**साश्लिष्टा रभसेन तत्सुखवशात्तन्व्या च तद्विस्मृतम् ॥**

मानः कथमुपनीत इति पृष्वन्तं वयस्यं प्रतिनायकोक्तिरियम्। तस्याः सपत्न्याः सान्द्रविलेपनयोः आश्लेषेण स्तन युगमुद्राङ्कितं मुद्राङ्किततत्त्वसिद्धये सान्द्रविलेपनेति विशेषणमुक्तम्[१]। वक्षः पादानमनसंभ्रमच्छलेन किं गूह्यत इति मानिन्या भणिते तन्मुद्राङ्कनं क्वेत्युदीर्य सहसा निगूहनोपायान्तराभावेन साहसं केवलमवलम्ब्य तन्मुद्राङ्कनं संप्रमर्ष्टुं रभसेन किं भविष्यतीति भीत्या झटिति वा सा मानिनी समालिङ्गिता तत्सुखवशादालिङ्गनजन्यसुखपारवश्यात्तन्व्या च तन्मयाच्छलेन कृतं गोपनं विस्मृतमित्यन्यत्रामर्षस्य शान्तिः व्यज्यत इति भावशन्तिः। यद्यप्यत्र तत्सुखवशादिति

१. M. om °उक्तम्

२. M. °मित्यत्र° for °मित्यन्यत्र°

मोहोदयव्यक्तेः भावोदयस्यापीदमुदाहरणम् तथापि भावोदयस्य भावशान्त्यंङ्गतया प्राधान्याभावात् भावशन्तिः इहोदाहृता।
भावोदयमाह—

**भावोदयः स्यादुत्पत्तौ व्यङ्ग्यायां व्यभिचारिणम्।**
**किमिदं कुचयोरालीत्युक्ता मुग्धाभवन्नता ॥१७१॥**

यत्र व्यभिचारिभावानामुत्पत्तिः व्यज्यते तत्र भावोदयः। यथोत्तरार्धे कुचयोर्नखाङ्कनमवलोक्य सख्या कुचयोः किमिति स परिहासमुक्ताया मुग्धाया लज्जाख्यभावोदयव्यक्तेः भावोदयः। यथा वा—

**एकस्मिन् शयने विपक्षरमणीनामग्रहे मुग्धया**
**सद्यो मानपरिग्रहग्लपितया चाटूनि कुर्वन्नपि।**
**आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणं**
**मा भूत्सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः॥**

एकस्मिंश्छयन इत्यनेन सपत्नीनामग्रहणस्यात्यन्तानौचित्यं व्यज्यते। चाटुकरणसमयेऽवधीर्य स्वयं प्रसन्नतया मुग्धयेत्युक्तम्। कोपेन पराङ्मुखतया ग्लपितया मानवशेन म्लानतया आवेगात् मानोत्कर्षात्कालेनैवायं कोपः शमयितव्य इति तत्क्षणं तूष्णीं स्थितः। 'सामादौ तु परिक्षीणे स्यादुपेक्षावधीरण' मिति न्यायादिति भावः। वस्तुतो न स्वपिति किं तु मदाशयपरिज्ञानाय सुप्त इव च मा भूदिति वीक्षितः पुनः शब्दे प्रथमं किंचिद्वलित[1]ग्रीवं वीक्षितः। तथापि नायकेन तदाशयबोधनार्थं तदज्ञात्वेव स्थिते पुनरमन्दवलितग्रीवं वीक्षित इति द्योत्यते। ततश्चात्र कालाक्षमत्वलक्षणस्यौत्सुक्यस्योदयो व्यज्यत इति भावोदयः। यद्यप्यत्र कोपस्य शान्तेः भावशान्तितापि। तथापि भावोदयस्य प्राधान्यात् तदुदाहरणतेति ध्येयम्।

**भावसन्धिस्तु भावानां तुल्यानां व्यङ्ग्यता यदि।**
**सीताकपोलमुकुरे पश्यन्नुत्पुलकं मुखम्।**
**रक्षः कलकलं श्रृण्वन् जटां बध्नाति राघवः॥**

यत्र तुल्यबल[2]तया परस्परानुपमर्दकानां भावानां भावयोर्वा विरुद्धरसव्यभिचारिभूतयोः व्यङ्ग्यता तत्र भावसन्तिधः। यथा सीताकपोलेत्यत्र उत्पुलकमिति पुलकरूपानुभावेन श्रृङ्गाररसव्यभिचारिणोः हर्षस्य जटाबन्धनरूपानुभावेन वीररसव्यभिचारिणः आवेगामर्षादेश्च व्यञ्जनात् भावसन्धिः अत्र चोत्पुलकमित्यनेनैव रसद्वय व्यभिचारिणो हर्षामर्षादेः व्यञ्जनासंभवात् भावद्वयस्यैकव्यञ्जकानुप्रवेशेन भावसङ्कराख्यो अपरोऽपि प्रकारः संभवतीति ध्येयम्।

---

१. Pr. °किंचिच्चलित° for किचिंद्वलित°
२. M. om °बल

यथा वा—

उत्सिक्तस्य तपः पराक्रमनिधेरभ्यागमादेकतः
सत्संगप्रियता च वीररभसोन्मादश्च मां कर्षतः ।
वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलयन्
आनन्दी हरिचन्दनेन्दुशिशिरस्निग्धो रुणद्ध्यन्यतः ।।

भार्गवागमनं श्रुतवतोऽन्तः पुरगतस्य रामभद्रस्य वचनमिदम्। उत्सिक्तस्य दृप्तस्य तपसां पराक्रमाणां च निधेः भार्गवस्येति शेषः एकतो बहिर्वीराणांयोऽयंरभस अवेगस्तस्योन्माद उन्मथनमुन्मादप्रियतेति यावत् तपोनिधित्वात् सत्सङ्गप्रियताकर्षति उत्सिक्त्वे सति पराक्रमनिधित्वात् वीररभसोन्मादश्च बहिः कर्षतीति विभागः। आनन्दी आनन्दहेतुरन्यतोऽन्तः पुरे अत्र सत्सङ्गप्रियतेत्यनेन मुनिविषयकभावव्यभिचारिणो हर्षस्य वीररभसेत्यनेन वीररसव्यभिचारिण आवेगस्य वैदेहीत्यादिना श्रृङ्गाररसव्यभिचारिणो हर्षस्य च व्यञ्जनात् भावसन्धिः।

**पूर्वपूर्वोपमर्दे तु तेषां शबलता मता ।**
**फलं किं बन्धुसंक्षोभात्कातर्यं किं वदेज्जनः ।**
**का हानिः किं वदन्त्या मे द्रष्टव्या द्रौपदी कथम् ।।१७२।।**

यत्र भावानां पूर्वपूर्वोपमर्दकतया व्यक्तिः तत्र भावशबलता। यथा—'फलं किम्' इत्यादि। युद्धार्थं भीष्मादिषु बन्धुषु समुपस्थितेषु अर्जुनवाक्यमिदम्।

अरयो यां न पश्यन्ति बन्धुभिर्या न भुज्यते ।
किं तया वद राजेन्द्र विदेशगतया श्रिया ।।

इति न्यायेन बन्धूंत्संहृत्य[१] श्रिया मम किं फलम्? इति प्रथमपादेन निष्फलत्वधीरूपो निर्वेदो व्यज्यते। यदि बन्धुस्नेहादुपेक्षा क्रियेत तदा[२] जनः किं कातर्यं वदेत् ? किमिति जनापवादरूपानिषृोत्प्रेक्षणेन द्वितीयपादे शङ्का व्यज्यते। लोकापदेन मम किं हीयते ? ततो न बन्धुसंक्षोभः कार्य इति निर्धारणप्रतीतेः तृतीयपादेन मतिः व्यज्यते। बन्धुषु दया कृता चेत् यावत्सुयोधनादिवधं विमुक्तवेणी द्रौपदी कथं द्रष्टव्येति तुरीयपादेन चिन्ता व्यज्यते। ततश्च अत्र भावानां निर्वेदशङ्कामतिचिन्तानां पूर्ववोपमर्देन व्यक्तेः भावशबलता। यथा वा—

क्वाकार्यं शशलक्ष्मणः क्व नु कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुखम् ।

---

१. *M. adds* लब्धया *before* श्रिया

२. *M.* तथा *for* तदा

**किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा ।**
**चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं पास्यति ॥**

इदं शकुन्तलादर्शनोत्कण्ठितस्य दुष्यन्तस्य वाक्यम्। काव्यप्रकाशव्याख्याने इदं पद्यं विक्रमोर्वशीये चतुर्थेऽङ्के उर्वशीं दृष्ट्वा पुरूरवस उक्तिरियमिति निर्दिश्यते ('काव्यप्रकाशः बालबोधिनीटी का०पृ० १२६')

अत्र मुनिकन्यकाभिलाषरूपमिदमकार्यं क्व निरपवादं चन्द्रस्य कुलं क्वेति युक्तायुक्तविचारणात्मको वितर्कः, भूयोऽपि दृश्येतेति औत्सुक्यम्। दोषाणां प्रशमाय परिहाराय नोऽस्माकं श्रुतं शास्त्रश्रवणम्। अतः दोषावहत्वादभिलाषो न युक्त इति युक्त्यार्थनिर्धारणात् मतिः। कोपेऽपि तस्या मुखं कान्तमित्यनुभूतार्थस्मरणात् स्मृतिः। कृतधियः स्थिरबुद्धयः। अत एवापकल्मषाः सत्पुरुषाः किं वक्ष्यन्तीति सज्जननिन्दारूपानिषृागमोत्प्रेक्षणेन शङ्का। सा स्वप्नेऽपि दुर्लभेति कृपणतारूपं दैन्यम्। हे चेतः स्वास्थ्यं धैर्यमुपैहीति धृतिः। धन्यः को वा युवाधरं पास्यतीति चिन्ता च व्यज्यते। ततश्च पूर्वपूर्वोपमर्देन वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां व्यक्तेः भावशबलता।

ननु भावस्योदयवच्छान्तिवच्च मध्ये स्थितिरपि किमिति नोक्ता नोदाहृता चेति चेन्न। भावस्थितेः भावस्वरूपाव्यतिरेकात्, भावस्वरूपनिरूपणेनैव सा निरूपिता। 'जाने कोपपराङ्मुखीम्' इत्यादि तदुदाहरणेनैव सापि उदाहृतेति न पृथगुच्यत इति ध्येयम्। ननु उक्तोदाहरणेषु रसस्यापि संभवात् कथमेषां भावोदाहरणतेत्यत आह—

**मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन ।**
**यथैव राजानुगता भृत्याः परिणयोन्मुखाः ॥१७३॥**

ते भावशान्त्यादयो रसे मुख्येऽपि अङ्गित्वं प्राधान्यं प्राप्नुवन्ति। कदाचन तादृशचमत्कारे लब्धे न तु सर्वदा। न च कथमिदमुच्यते। रसोऽपि मुख्यो भावशान्त्यादयो ऽप्यङ्गिन इति। यस्मादेकतरप्राधान्यमन्यतरगुणीभावव्याप्तमिति वाच्यम्। यथा राजानुगतो विवाहप्रवृत्तो भृत्यो राजनि मुख्येऽपि कदाचित्प्राधान्यमुपलम्बते। तद्वदविरोधात्। ततश्च विभावादिसंवलनात् पूर्वं भावशान्त्यादीनां प्राधान्यं, तत्संवलने तु रसस्यैवेति तात्पर्यमित्यनवद्यम्।

एवमसंलक्ष्यक्रमव्यङ्ग्यं निरूप्य क्रमप्राप्तं संलक्ष्यक्रमव्यङ्ग्यनिरूपणं शिष्यावधानार्थं प्रतिजानीते।

**असंलक्ष्यक्रमव्यङ्ग्यः सप्रपञ्चमितीरितः ।**
**निरूप्यतेऽथ संलक्ष्यक्रमव्यङ्ग्यः प्रपञ्चतः ॥१७४॥**

तमेव लक्षयति—

**उक्तो बुधैः ससंलक्ष्यक्रमोऽनुरणनोपमः ॥**

घण्टा[1]वादनानन्दतरं प्रथमस्वनपृष्ठभावी यः स्वनस्तदनुरणनं तदुपमः तत्सदृशो वाच्यार्थप्रतीत्यव्यवहितप्रतीतिविषयव्यङ्ग्यक इति यावत्। तादृशः संलक्ष्यक्रमव्यङ्ग्य इति बुधैरुक्तः। अत्रानुरणनोपम इत्यविवक्षितवाच्याद्भेदः। तत्र बाधप्रतिसन्धानादिना वाच्यार्थप्रतीतिविच्छेदादत्र च तदभावादसंलक्ष्यक्रमस्यापि नानुरणनोपमत्वम्। तत्र विभावादिसंवलिततयैव प्रतीयमानत्वेन क्रमस्यालक्ष्यतयानुरणनौपम्याभावादित्याहुः। तमेव विभजते—

**शब्दार्थोभयशक्त्युत्थस्त्रिधायं कथितो ध्वनिः ॥**
**शक्तिः सामर्थ्यं तच्च प्रत्येकं संबध्यते ।**

ततश्चायं संलक्ष्यक्रमव्यङ्ग्यध्वनिः शब्दशक्त्युद्भवोऽर्थशक्त्युद्भव उभयशक्त्युद्भवश्चेति त्रिविधः।.... तत्राद्यं लक्षयति—

**स्यात्पर्यायासहिष्णुत्वे शब्दशक्त्युद्भवो ध्वनिः ॥१७५॥**

यत्र पर्यायपदान्तरप्रयोगासहिष्णुता तत्र शब्दशक्त्युद्भवः ।
शब्दशक्त्युद्भवं विभजते—

**अलंकृतेर्वस्तुनो वा प्राधान्याच्छब्दशक्तितः ।**
**यत्र व्यक्तिर्भवेत्सोऽयं शब्दशक्त्युद्भवो द्विधा ॥१७६॥**

अलंकारस्य वस्तुनो वा शब्दशक्त्या प्राधान्येन व्यङ्ग्यत्वे शब्दशक्त्युद्भवो द्विधा ....तत्र शब्दशक्त्यालंकारस्य व्यङ्ग्यतामुदाहरति—

**प्रतापवानिनो भाति भजन्नुदयमुच्चकैः ।**
**इत्यत्र शब्दशक्त्युत्थः स्याद्वाक्येऽलंकृतिध्वनिः ॥**

अत्र प्रतापवानिनो नृपतिरुदयमभिवृद्धिं भजन् भातीत्यभिधया प्राकरणिकार्थः प्रकाश्यते। व्यञ्जनया तु प्रतापवानातपवानिनः सूर्य उदयाचलं भजन् भातीत्यप्राकरणिकः, सूर्यविषयोऽर्थः प्रतिपाद्यते। तदनन्तरं च यथा सूर्य उदयाद्रिं, भजन्नातपवान् भाति, तथा राजाप्यभिवृद्धिं भजन् प्रतापशीलो भातीत्युपमालंकारो व्यज्यते। अत्र प्रतापादिपदैरातपादिवस्तुध्वनेः वाक्येनालंकारध्वनिः। न च वर्णनीयवृत्तान्ते वाच्ये सूर्यवृत्तान्तप्रतीतिरिहेति वस्तुमात्रध्वनिरेव नालंकारध्वनिरिति वाच्यम्। तथा सति कवेः असंबद्धाभिधायितातापान्न हि कश्चिदनुन्मत्तो नृपतिरभिवृद्धिं प्राप्य भातीति प्रस्तावे भानुरुदयाद्रिं प्राप्य भातीति ब्रूयात्। तस्मादसंबद्धाभिधायित्वं मा प्रसाङ्क्षीदित्युपमाध्वनौ कवेः तात्पर्यावश्यंभावात्। न 'चाब्जेन त्वन्मुखं तुल्यं हरिणाहितशक्तिना' इत्यादाविव श्लेषालंकारतचैव नानार्थपदोपादान-नैष्फल्यपरिहारात् नोपमाध्वनिरावश्यकः इति वाच्यम्। 'अब्जेन' इत्यत्रापि पद्मचन्द्रोभयसाम्योपादानेन मुखे कान्त्यतिशयस्य व्यङ्ग्यत्वाङ्गीकारावश्यंभावात्। प्राचां मते अभिधायाः प्रकरणात् नियन्त्रणेन प्रकृते श्लेषालंकारत्वासंभवाच्चेति दिक्।

यथा वा–

**उल्लास्य कालकरवालमहाम्बुवाहं**
**देवेन येन जरठोर्जितगर्जितेन ।**
**निर्वापितः सकल एव रणे रिपूणां**
**धाराजलैस्त्रिजगाति ज्वलितः प्रतापः ॥**

अत्र गम्भीरस्थिरक्ष्वेलितेन येन देवेन राज्ञा कालः श्यामलो यः करवालः खड्गस्तस्य यो महानम्बुवाहोऽम्बु वहतीति व्युत्पत्त्या धाराप्रदेशस्तमुल्लास्य प्रकटयित्वा धाराजलैर्धाराप्रदेशगलितैर्जलै रिपूणां ज्वलितः प्रतापो निर्वापितः प्रशमित इति प्राकरणिकार्थोऽभिधयाप्रकाश्यते। व्यञ्जनया तु श्रवणपरुषविकटस्तनितेन येन पर्जन्यदेवेन कालकरः श्यामलकान्तिः अथ च बालः प्रवृद्धद्युन्मुखो यो महाम्बुवाहः तमुल्लास्य धारारूपैः जलैः रिपूणां दावानलानां पर्जन्यनाश्यत्वेन तेषां तद्रिपुत्वं प्रतापः संतापः शमित इत्यप्राकरणिक पर्जन्यविषयोऽर्थः प्रतीयते। तदनन्तरं च यथा पर्जन्येन मेघमुद्भाव्य दावानलादितापः परिह्वियते। एवं राज्ञा खड्गमुत्कृष्य शत्रुप्रतापः परिह्वियत इत्युपमालंकारो व्यज्यते। अत्र करवालादिपदैः कान्त्यादिवस्तुध्वनेर्वाक्येनालंकारध्वनिः।

यथा वा–

**तिग्मरुचिरप्रतापो विधुरनिशाकृद्विभो मधुरलीलः ।**
**मतिमानतत्ववृत्तिः प्रतिपदपक्षाग्रणीर्विभाति भवान् ॥**

तिग्मः शत्रुषु तीक्ष्णो रुचिरः सुहृत् सुहृद्यश्च प्रतापो यस्य स तथा विधुराणां शत्रूणां निशां मृतिं करोतीति स तंथा। मधुरा मनोहारिणी लीला यस्य स तथा। मतिमानयोः बुद्धिचित्तसमुन्नत्योः तत्त्वे सारांशे वृत्तिः वर्तनं यस्य स तथा। प्रतिपदं पदे पदे पक्षस्य बलस्याग्रणीः निर्वोढ़ेति प्रकारिणिकार्थे ऽभिधया प्रतीयमाने पदभङ्गमवलम्ब्य तिग्मरुचिः चण्डभासुर प्रताप आतपशून्यो विधुश्चन्द्रोऽप्यनिशाकृदरजनिकरो मधुर्वसन्तोऽप्यलीलो मतिमानप्यतत्ववृत्तिरपरमार्थे प्रवृत्तिमान् प्रतिपत् प्रथमातिथिरप्यपक्षाग्रणीः पक्षस्यादिः न भवतीति विरोधाभासो व्यज्यते। न चात्र विरोधाभासो वाच्य एवास्त्विति वाच्यम्। ऐकपद्यप्रतिभासदशायां प्रकारणिकार्थ एवाभिधाया नियन्त्रणाव्द्यञ्जनयैव तत्प्रतीतेः वक्तव्यत्वात्। न चात्राप्राकृतादित्यादिप्रतीतेः प्रकृतोपयोगाभावाद्विरोधप्रतीत्यपेक्षैव नेति वाच्यम्। तथा सति तदनुकूलनानार्थ शब्दरचनाप्रयासानुपपत्तेः तिग्मरुचिरव्ययमप्रताप इति तिग्मरुच्यादिनिरूपणेन तद्भेदप्रतीत्यातिशयितप्रतापशालित्वाद्यभिव्यक्तेः फलत्व-कल्पनादिति ध्येयम्। अत्रापि वाक्येनालंकारध्वनिः।

यथा वा–

**अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद प्रभो ।**
**अहितः सहितः साधुयशोभिरसतामसि ॥**

अमितोऽनल्पः समितः संग्रामाज्जयेन प्राप्तैरुत्कर्षैः हर्षद प्रीतिप्रद असतां खलानामहितोऽननुकूलः साधुयशोभिः सहितोऽसीत्यर्थे प्रतीयमाने मितरहितोऽपि मितसहितो हितरहितोऽपि हितयुक्त इति विरोधाभासो व्यज्यते। अत्रापि विरोधप्रतिपादकानामपि शब्दानामभावात्तस्य व्यङ्ग्यत्वमत्र न पदभङ्ग इति पूर्वोदाहरणात् भेद इति ध्येयम्।
यथा वा–

**निरुपादानसंभारमभित्तावेव तन्वते ।**
**जगच्चित्रं नमस्तस्मै कलाश्लाध्याय शूलिने ।।**

अनुपादानसंहारं स्वव्यतिरिक्तस्य सर्वस्य सृज्यत्वे सहकारिकारणनिरपेक्षमेव। यद्यपि अविद्यापेक्षणमस्ति। तस्याः केवलमवच्छेदकत्वमतेनेदमुक्तम्। चित्रं विविधं जगदभिव्यक्तौ स्वव्यतिरिक्ताधिष्ठानान्तराभावादिति भावः। कला सर्वविषयकज्ञानशक्तिः चन्द्रकला वा अत्र कलापेक्षया शूलिनो व्यतिरेलंकारो व्यज्यते। अत्र चित्रकलादिब्दानां शिलष्टत्वेन पर्यायासहत्वात् शब्दशक्तिमूलत्वमिति ध्येयम्।

ननु उपमादीनां व्यङ्ग्यत्वे प्राधान्यावश्यंभावादलंकार्यत्वेन कथमलंकारता प्राधान्याप्राधान्ययोः विरोधादिति चेत् सत्यम्। अलंकारा एव उपमादयः। परं तु पूर्वप्रत्यभिज्ञाबलादलंकारत्वव्यपदेशो यथा कश्चिद्ब्राह्मणः श्रमणो बौद्धसन्यासी जातः तस्मिन् पूर्वप्रत्यभिज्ञया ब्राह्मण इति व्यपदेशः, तद्वदिति ध्येयम्। अथ शब्दशक्त्या वस्तुध्वनिमुदाहरति–

**अवनी च वनी च त्वद्विषां न विशति स्थितिम् ।**
**इत्यत्र शब्दशक्त्युत्थो वाक्ये वस्तुध्वनिर्भवेत् ।।**

अत्र भूमिररण्यानी च तवद्विषां वा संनिविशतीत्यभिधया प्रतीतावनी च वनी चेत्यनेन विरुद्धयोरपि त्वदनुवर्तनार्थमेककार्यकारित्वं दृश्यत इति वस्तु व्यज्यते। न चात्र विरोधालंकृतिध्वनिरेव कुतो नेति वाच्यम्। अवनीत्ववनीत्वयोः सामानाधिकरण्याभावात् विरोधस्य तस्मिन् सत्येवोद्भवात्
यथा वा–

**पन्थिअ ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे ।**
**उण्णअपओहरं पेक्खिऊण जइ वससि ता वससु ।।**
**पथिक ! नात्र स्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे ।**
**उन्नतपयोधरं प्रेक्ष्य यदि वससि तदा वस ।।**

इयं वर्षर्त्रौ रात्रौ निद्रार्थं शयनीयार्थिनं युवानं प्रति स्वैरिण्याः कस्याश्चिदुक्तिः। प्रस्तरस्थले पाषाणमयप्रदेशेऽस्मिन् ग्रामे मनाक्कदाचिदपि संस्तरः शयनीयं नास्ति। पाषाण एव सुखेन शयितुं शक्यत्वात् न शयनीयापेक्षेति भावः। उन्नतं वर्षोन्मुखं मेघं दृष्ट्वा यदि वासेच्छा तदा वसेत्यस्मिन्नर्थे अभिधया प्रतीयमाने व्यञ्जनेनारसिकजनबहुलेऽस्मिन्

ग्रामे संभोगयोग्यः कदाचिदपि न लभ्यते। मदीयमुन्नतं कुचं दृष्ट्वा यदि संभोगेच्छा तदास्स्वेति वस्तु प्रतिपाद्यते। अत्र पयोधरमिति पदद्वयश्लेष महिम्ना अस्य लाभात् वाक्ये शब्दशक्तिमूलता[1]। यद्वा पयोधरपदस्यैकपद्येऽपि तत्पदगतश्लेषमहिमसहकृतेन प्रकृतवाक्येनैवास्यार्थस्य लाभाद्वाक्ये शब्दशक्तिमूलता।

यथा वा–

**शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम् ।**
**यत्र प्रसीदसि पुनः स भात्युदारोऽनुदारश्च ।।**

हे ! नरेन्द्र। यस्मै त्वं कुप्यसि तं शनिः शनैश्चरोऽशनिर्वज्रं च निहन्ति। त्वत्कोपविषयस्य ग्रहपीडाऽशनिपातादिः दैविकी विपत्तिर्भवतीति यावत्। यस्मिन् पुनः प्रसीदसि स उदार औदार्यवान् अनुदारोऽनुकूलकलत्रश्च भातीत्यभिधया प्रतीयमाने शनिरशनिश्च इत्यनेन विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत इति वस्तु व्यज्यते। द्वितीयार्थं तु नोदाहरणम्। तत्र च शब्दस्याप्यर्थत्वे विरोधस्य वाच्यत्वात्। समुच्चयार्थत्वेऽपि विरोधालंकारस्यैव व्यङ्ग्यत्वेन वस्तुध्वनेरुदाहरणत्वायोगदिति ध्येयम्।

अर्थशक्तिमूलं विभजते–

**अर्थशक्त्युद्भवोऽन्यो यो लक्ष्यव्यङ्ग्यक्रमस्त्वसौ ।**
**अर्थस्य हि स्वतः सिद्‌ध्या कविप्रौढ़ोक्तिकल्पनात् ।।१७७।।**

**वक्तुः कविनिबद्धस्य प्रौढ़ोक्त्या कल्पनातथा ।**
**त्रैविध्यात्त्रिविधस्तत्र प्रथमं त्रिविधस्य च ।।१७८।।**

**वस्त्वलंकारभेदेन व्यङ्ग्यद्वैविध्यतः पुनः ।**
**षड्विधो द्विविधीभूय भवेद्द्वादशभेदवान् ।।१७९।।**

अर्थशक्त्युद्भवः संलक्ष्यक्रमव्यङ्ग्योऽर्थस्य स्वत एव बहिः प्रसिद्धत्वेन बहिः असत्त्वेऽपि कविप्रतिभामात्रकल्पितत्वेन कविकल्पितवक्तृप्रौढ़ोक्तिकल्पितत्वेन त्रैविध्यात्[2] प्रथमं त्रिविधः प्रकारः स्यात्। त्रिप्रकारस्याप्यर्थस्य प्रत्येकं वस्त्वलंकारात्मकतया द्वैविध्ये पुनः षड्विधः। एवं व्यञ्जकीभूतानामर्थानां षड्विधानामपि वस्त्वलंकारात्मकव्यङ्ग्य-द्वैविध्यात् द्वादशविधत्वम्। .... तत्र वस्तुना वस्तुध्वनिमुदाहरति–

**अविदूरे निशा याति किमित्यालि विलम्ब्यते ।।**
**इत्यादौ वस्तुना वस्तुध्वनिर्वाक्येऽर्थशक्तिजः ।**

---

१. अत्र पयोधर-स्रस्तर पदयोः परिवृत्त्यसहत्वात्
वाक्ये शब्दशक्तिमूलध्वनिः इति मम अभिप्रायः ।

२. M. ल

इयं समीपे समायान्तीमन्यामवेक्ष्य जारेण [१]चिरं रममाणां सखीं प्रति सख्याः कस्याश्चिदुक्तिः-अत्र अन्यापीयं ज्ञास्यति तदुपपतिः मुच्यतामिति वस्तु प्रकृतवाक्यार्थेन वस्तुना व्यज्यत इति वाक्ये वस्तुना वस्तुध्वनिः।
यथा वा–

**अलससि रमणी धुत्ताणमग्गिमो पुत्तधण समिद्धिमओ ।**
**इ अ फणि एण ण अंगी पप्फुल्लविलोअणा जा आ ।।**
**अलसशिरोमणिर्धूर्तानामग्रिमः पुत्रधनसमृद्धिमयः ।**
**इति भणितेन नताङ्गी प्रपुल्लविलोचना जाता ।।**

अत्रालसत्वेन ग्रामान्तरागमनं धूर्ताग्रिमत्वेन बहुप्रदत्वं रतिकलासु वैदग्ध्यं च धनसमृद्धिमयत्वेन बहुप्रदानयोग्यत्वं व्यज्यते। तदुपश्रुत्य यत्प्रपुल्लविलोचनत्वं तेन वस्तुना ममैतादृशः कामुको लब्ध इति वेश्यापुत्र्याहर्षाख्यं वस्तु व्यज्यते।
वस्तुनालंकारध्वनिमुदाहरति–

**अपुरश्चरणायासं राममन्त्रः फलत्यसौ ।**
**इत्यादावर्थशक्त्या स्याद्वस्तुनालंकृतिध्वनिः ।।**

अत्र प्रकृतवाक्यार्थे वस्तुना राममन्त्रस्य मन्त्रान्तरेभ्यो व्यतिरेकालंकारो व्यज्यते।
यथा वा–

**धन्यासि या कथमसि प्रियसङ्गमेऽपि विस्रब्धचाटुकशतानि रतान्तरेषु ।**
**नीवीं प्रति प्राणिहिते तु करे प्रियेण सख्यः शपामि यदि किंचिदपि स्मरामि।।**

इयं रात्रिकृतप्रियसङ्गमवृत्तान्तं कथयन्तीं सखीं प्रति कस्याश्चिदुक्तिः। अत्र या त्वं प्रियस्य प्रेमास्पदस्य न तु भर्तृमात्रस्य सङ्गमे तत्रापि रतान्तरेषु रतिप्रभेदेषु विस्रब्धानि चाटुकशतानि कथयसि-सा त्वं धन्यासि-अहं तु प्रेयसा नीवीं प्रति करे व्यापारिते तत्क्षण एव न किंचिदपि स्मरामि। हे सख्यो यदि स्मरामि तदा शपामीति वाक्यार्थेन वस्तुना त्वमधन्या रसपारवश्याभावात्। अहं तु धन्या [२]रसपारवश्यादिति सख्यपेक्षया व्यतिरेकालंकारो व्यज्यते। यद्यपि उपमानोपमेयतया प्रसिद्धयोरेव अन्यतरत्र व्यतिरेकप्रतीतौ व्यतिरेकालंकारः, तथापि सखीनायिकयोरपि उपमानोपमेयभावाविरोधादित्युदाहृतमिति।
अलंकारेण वस्तुध्वनिमुदाहरति–

**मन्वते वज्रनिर्घोषं त्वन्मौर्वीटङ्कृतिं द्विषः ।**
**इत्यलंकारतो वस्तुध्वनिर्वाक्येऽर्थशक्तितः ।।**

---

१. Pr. दूरं for चिरं

२. M. रसाब्धिमग्नचित्तकत्वात् for रसपारवश्यात्

अत्र भ्रान्तिमदलंकारेण प्रकृतवाक्यप्रतिपाद्येन त्वन्मौर्वीश्रवणादेव द्विषस्त्रस्ता भवन्तीति वस्तु व्यज्यते।
यथा वा—

**दर्पान्धगन्धगजकुम्भकवाटकूटसंक्रान्तिनिघ्नघनशोणितशोणरोचिः ।**
**वीरैर्व्यलोकियुधिरोषकषायकान्तिः कालीकटाक्ष इव यस्य करे कृपाणः॥**

दर्पान्धानां मत्तेभानां कुम्भा एव कवाटान्यतराणि तेषां कूटेषु समीपेषु या संक्रान्तिः अन्तः प्रवेशः तत्र विघ्नत्वेन आयत्तत्वेन घनैः शोणितैः अरुणा रुचिः यस्य स तथा तादृशावस्थायां कोपारुणशोभकालीकटाक्षप्रतिमः कृपाणो यस्य करे वीरैर्युधि व्यलोकीति योजनायां कालीकटाक्ष इवेत्युपमया सकलरिपुक्षयः क्षणात् करिष्यत इति वस्तु व्यज्यते। कालीकटाक्ष इव व्यलोकि व्यतकीर्ति योजनायां कालीकटाक्षत्वेन संभावनादुत्प्रेक्षयोक्तं वस्तु व्यज्यते।
अलंकारेणालंकारध्वनिमुदाहरति—

**मुञ्चत्ति जीवान्निशितैस्त्वद्बाणैः वैरिणः ।**
**इत्यलंकारतो वाक्ये विज्ञेयोऽलंकृतिध्वनिः ॥**

अत्र सहोक्त्यलंकारेण यस्मिन् क्षणे त्वद्बाणा मौर्वी मुञ्चन्ति तदैव द्विषोऽपि प्राणान् मुञ्चन्तीति कार्यकारणयौगपद्यरूपातिशयोक्तिः व्यज्यते।
यथा वा—

**गाढ़कान्तदशनक्षतव्यथासंकटादरिवधूजनस्य यः ।**
**ओष्ठविद्रुमदलान्यमोचयन्निर्दशन्युधि रुषा निजाधरम् ॥**

अत्र स्वाधरनिर्दंशनरूपकारणस्य दयितदन्तक्षतव्यथामोचनरूपकार्यस्य च भिन्नदेशत्वकथनात् विरोधमूला सङ्गतिः। क्षतव्यथाजनकादधरनिर्दंशनात्तदभाव-रूपकार्यजनन निबन्धनात् विरोधमूलस्तद्विजातीयकार्यसमर्थस्य तज्जनकत्वलक्षणचित्रा-लंकारो वा ताभ्यामधरनिर्दंशनसमकालमेव शत्रवो व्यापादिता इति कार्यकारणयोः तुल्यकालप्रतीतेः अतिशयोक्तिः मम क्षत्याप्यन्यस्यक्षतिः निवर्ततामिति राज्ञो बुद्धिरुत्प्रेक्षित इति उत्प्रेक्षा च व्यज्यते। यद्यप्यत्रोपमेयस्य उपमानतया संभावनरूपमुत्प्रेक्षालक्षणं न संघटते। तथापि—

**अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा ।**
**अन्यथोत्प्रेक्ष्यते यत्र तामुत्प्रेक्षां विदुर्बुधाः ॥**

इति उत्प्रेक्षालक्षणयोगात् उत्प्रेक्षात्वमविरुद्धमिति ध्येयम्। एषु चतुर्षूदाहरणेषु स्वतः संभविनोऽर्था व्यञ्जकाः।
अथ कविकल्पितेष्वर्थेषु वस्तुना वस्तुध्वनिमुदाहरति—

**वैरिस्त्रैणस्मितज्योत्स्नां निर्धुनीते भवन्महः ।**
**इत्यादौ कल्पितार्थेन वाक्ये वस्तुध्वनिर्मतः ॥**

अत्र कविकल्पितेन प्रतापकर्तुकरिपुस्त्रीस्मित निर्धूननरूपवस्तुना भवता रिपवो व्यापादिता इति वस्तु व्यज्यते।
यथा वा–

**कैलासस्य प्रथमशिखरे वेणुसंमूर्छनाभिः**
**श्रुत्वा कीर्तिं विबुधरमणी गीयमानां त्वदीयाम् ।**
**स्रस्तापाङ्गाः सरसबिसिनीकाण्डसञ्जातशङ्का**
**दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्जयन्ति ॥**

प्रथमशिखर इति दिङ्मातङ्गानां नेदिष्ठतासूचनार्थं वेणुशब्देन तेषां नादो लक्ष्यते। संमूर्छनासंभेदस्तानकल्पवेणुनादसंभेदोपलक्षिततया गीयमानामिति यावत्। यद्वा वेणुषु संमूर्छनाभिः व्याप्ताभिरुपलक्षितां वेणुप्रतिध्वनितामिति यावत्। कीर्तिं श्रुत्वा स्रस्तापाङ्गाः पतितकटाक्षाः श्रवणपुलिन इति पदमत्रापि काकाक्षिन्यायेन संबध्यते।

अत एव कीर्तौ बिसकाण्डशङ्कावन्तो दिग्गजाः श्रवणपुलिने श्रवणस्य पुलिनत्वनिरूपणं शङ्कितबिसकाण्डसंबन्धयोग्यताभिप्रायम्। हस्तमावर्तयन्तीति जातिस्वाभाव्यात् बिसगृध्नुता तेषामाविष्कृता। अत्र कविप्रौढोक्तिमात्रसिद्धेन ध्वलतमकीर्तिसंदर्शनजनितहस्तावर्जनरूपेण वस्तुना येषां विजयादिगुणप्रशंसारूपा कीर्तिः इत्यर्थावगमो नास्ति, तेषां तिरश्चमपि एवं बुद्धिजननेन चमत्कारकारिणी कीर्तिरिति वस्तु व्यज्यते। यद्यप्यत्र विसिनीकाण्डसंजातशङ्का इति भ्रान्तिमान् ससन्देहो वालंकारो व्यञ्जकः संभवति तथापि तदंशव्यतिरेकेणापि वाच्यार्थस्य प्रकृतव्यङ्ग्योपस्कारकत्वमस्त्येवेति वस्तुना वस्तुध्वनेः उदाहरणत्वमविरुद्धम्।
अथ वस्तुनालंकारध्वनिमुदाहरति–

**जयश्रीस्त्वां भजत्याजौ सेनाधूल्यन्धकारिते ।**
**अलंकारध्वनिर्वाक्ये कल्पितेनात्र वस्तुना ॥**

अत्र कविकल्पितेन जयश्रीभजनरूपार्थेन जयश्रियोऽभिसारिण्योपमा व्यज्यते।
यथा वा–

**केसेसु बलामोडिअ तेण अ समरम्मि[1] जअसिरी गहिआ ।**
**जह कन्दराहिँ विहुरा तस्स दिढं कंठ अम्मि संठविआ ॥**
**केशेषु बलात्कृत्य तेन च[2] समरे जयश्रीर्गृहीता ।**
**यथा कन्दराभिर्विधुरास्तस्य दृढं कण्ठे संस्थापिताः ॥**

---

१. Pr. तेण रणम्मि for तेण अ समरम्मि।
२. Pr. तेन रणे for तेन च समरे

समरे जयश्रीः तेन राज्ञा केशेषु बलात्कृत्य तथा गृहीता। शत्रुकेशग्रहणमेव जयश्रीकेशग्रहणत्वेनाध्यवसीयते यथा तस्य राज्ञो विधुराः शत्रवः कन्दराभिर्गुहाभिः कण्ठे दृढ़संस्थापिताः संस्थापितप्राणा जाताः शत्रवः कन्दराः समधिगम्य कण्ठे संस्थापितप्राणा जाता इति यावत्। अत्र स्त्रीलिङ्गेन जयश्रियः कन्दराणां च नायिकात्वं प्रतीयते। ततश्च जयश्रीरूपनायिकाकेशग्रहणं राजकृतमवेक्ष्य तेनोद्दीपितमदना इव कन्दराः शत्रूणां कण्ठालिङ्गनं कुर्वन्तीत्युत्प्रेक्षा कविप्रौढ़ोक्तिसिद्धेन जयश्रीकेशग्रहणदिरूपवस्तुना व्यज्यते। तथैकस्मिन् संग्रामे तस्य विजयदर्शनादन्ये तदरयः पलाय्य गुहासु तिष्ठान्तीति काव्यलिंङ्गं च व्यज्यते। गुहासु शत्रूणामवस्थानं प्रति तस्यैकत्र विजयदर्शनं हेतुरिति काव्यलिंङ्गता। तथा तद्वैरिणः स्वयमेव पलाय्य न गुहासु तिष्ठन्ति। किंतु ततः परिभवं संभाव्य कन्दराभिरेव संस्थापिता इत्यपह्नुतिश्च व्यज्यते।

अथालंकारेण वस्तुध्वनिमुदाहरति—

> सख्युः सृजति पुष्पेषोः प्रीत्यै बाणान्बहून् मधुः ।
> इत्यलंकारतो वाक्ये ध्वनिः कल्पितवस्तुनः ॥

अत्र कविप्रौढ़ोक्तिसिद्धमदनप्रीतिरूपफलविषयोत्प्रेक्षया जगदखिलं मदनो जेष्यतीति कल्पितस्य वस्तुनो ध्वनिः।

यथा वा—

> गाढ़ालिङ्गणरहसुज्ज अम्मि दइअम्मि लहु समोसरइ ।
> माणंसिणीड् माणो पीलणभीओवव हि अ आदो ॥
> गाढ़ालिङ्गनरभसोद्यते दयिते लघु समुपसरति ।
> मनस्विन्या मानः पीडनभीत इव हृदयात् ॥

अत्र कान्ते परिरम्भणोन्मुखे हृदयस्थितस्य स्वस्य पीडनशङ्कयेव मनस्विनी हृदयान्मानो झटिति निःशेषमपसरतीति कविप्रौढ़ोक्तिसिद्धमानगतभीत्युत्प्रेक्षया नायिकायाः पत्यालिङ्गनस्वच्छन्दसंभोगानुमत्यादिरूपं वस्तु व्यज्यते।

अथालंकारेणालंकारध्वनिमुदाहरति—

> हसन्त्या किल गङ्गां त्वत्कीर्त्या धवलितं जगत्।
> इत्यलंकारतो वाक्ये विज्ञेयोऽलंकृतिध्वनिः ॥

अत्र कविप्रौढ़ोक्तिसिद्धकीर्तिगतगङ्गाहासोत्प्रेक्षया गङ्गापेक्षया कीर्त्या जगन्मात्र-धवलकत्वरूपो व्यतिरेको व्यज्यते।

यथा वा—

> जा धेरंव हसन्ती कइव अणंबुरुहबद्धविणिवेसा ।
> दंसेइ भुवणमण्डलमण्णंविअ जअइ सा वाणी ॥

**या स्थविरमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा ।**
**दर्शयति भुवनमण्डलमन्यदिव जयति सा वाणी ॥**

अत्र स्थविरं ब्रह्माणं हसन्तीवेति कविप्रौढ़ौक्तिसिद्धवाणीगतहासोत्प्रेक्षया ब्रह्मापेक्षया वाण्या अपङ्कजासनस्थत्वरूपो नवनवचमत्कारैककारणशब्दार्थप्रपञ्चस्रष्टृत्वरूपोऽपि व्यतिरेको व्यज्यते। यद्यप्यत्र उत्प्रेक्षां विनापि व्यतिरेकस्फूर्तिः संभवति तथापि उत्प्रेक्षायाः अपि तव्द्यञ्जकता न विहन्यत इति ध्येयम्।

एषूदाहरणेषु कविप्रौढ़ोक्तिसिद्धा एवार्था व्यञ्जकाः ।

अथ कविनिबद्धवक्तृप्रौढ़ोक्तिसिद्धानामर्थानां मध्ये वस्तुना वस्तुध्वनिमुदाहरति–

**प्रेमातिमानतो नश्येत्प्रसीद प्रणते प्रिये ।**
**इति वक्तृवचः सिद्ध वस्तुना वस्तुनो ध्वनिः ॥**

अत्र कविनिबद्धसखीरूपवक्त्रृप्रौढ़ोक्तिसिद्धेनातिमानः प्रेमक्षयहेतुरिति वस्तुना त्वयैवमवधीरितश्चेदयं सपत्नीष्वेवाभिरतो भविष्यतीति वस्तु व्यज्यते।
यथा वा–

**जे लंकागिरिमेहलासु खलिआ संभोगखिण्णोरई**
**फारुप्फुल्लफणावलीकवलणे पत्ता दरिद्दत्तणम् ।**
**ते[1] एह्निं मलआनिला विरहिणीणीसाससंपक्किणो**
**जादा झत्ति सिसुत्तणे वि बहला तारुण्णपुण्णा विआ ॥**
**ये लंकागिरि मेखलासु चलिताः संभोगखिन्नोरगी**
**स्फारोत्फुल्लफणावलीकवलने प्राप्ता दरिद्रत्वम् ।**
**ते[2] इदानीं मलयानिला विरहिणीनिःश्वाससंपर्किणो**
**जाता झटिति शिशुत्वेऽपि बहुलास्तारुण्यपूर्णा इव ॥**

इदं सट्टके विचक्षणावाक्यम्। लंकागिरि लंकाधार भूतशैलस्य त्रिकूटस्थ नितम्बादुत्पन्नाः सुरतशान्तभुजङ्गीपृथुलविकस्वरस्फटावलीपानेनाल्पीभूतास्ते मलयानिला विरहिणीनिःश्वाससंर्केण शैशवेऽपि संपूर्णयौवना इव बहुला जाता इत्यत्र कविनिबद्धवक्तृप्रौढ़ोक्तिसिद्धेन बहुला जाता इत्यनेन वस्तुना पूर्वमेव स्वबाहुल्यसंपादन-पर्याप्तविरहिणी निःश्वासकारिण एते इदानीं बहुलाः सन्तो विरहिणीनां किं किं न करिष्यन्तीति वस्तु व्यज्यते। न च तारुण्यपूर्णा इवेत्युत्प्रेक्षात्र व्यञ्जिका। तस्याः प्रकृतव्यङ्ग्यप्रतीतावनुपयोगात् निःश्वाससंपर्कस्य हेतुत्वप्रतिपादकविभक्तिं विनैव बाहुल्यहेतुत्वप्रतीतेः काव्यलिङ्गमिह व्यक्तमिति तदेव व्यञ्जकमित्यपि न युक्तम्। तदप्रतीतावपि व्यङ्ग्यप्रतीतेः अविकल्पात् इत्याहुः।

---

१. Pr. एण्हिं ने for ने एण्हिं
२. Pr. इदानीं ते for ते इदानीं

अथ कविनिबद्धवक्तृप्रौढ़ोक्तिसिद्धवस्तुना अलंकारध्वनिमुदाहरति—

**मिलिते स्मरतापेन शठ तस्या दृगम्बुजे ।**
**इति वक्तृवचः सिद्धवस्तुनालंकृतिध्वनिः।।**

कविकल्पितदूतीरूपवक्तृप्रौढ़ोक्तिसिद्धेन दृगम्बुजमीलनरूपवस्तुना स्मरतापस्य सूर्यतापात् व्यतिरेको व्यज्यते।

यथा वा—

**सहि विरइऊण माणस मुज्झ धीरत्तणेण ओ असं ।**
**पि अदंसणमहवीहलखणम्मि सहसत्ति तेण ओ सरिअं।।**
**सखि विरचय्य मानस्य मम धैर्येणावकाशम्।**
**प्रियदर्शनमहविह्वलक्षणे सहसेति तेनापसृतम्।।**

हे। सखि। मानस्यावकाशं कथंचिद्धैर्येण विरचय्य स्थिताया इति शेषः। मम प्रियदर्शनोत्पन्नविवशक्षणे तेन मानेन सहसेति अनुभूतप्रकारेणापसृतं गतमित्यत्र सखीं प्रति नायिकावाक्ये कविनिबद्धवक्तृकल्पितेन मानपलायितरूपवस्तुना प्रियानुनयरूपकारणं विनापि मानपलायनरूपकार्योत्पत्तिप्रतीतेः विभावनालंकारो व्यज्यते। तथा प्रियदर्शनसौभाग्यबलज्ञानं धैर्येणापि सोढुं न शक्यत इति उत्प्रेक्षा च व्यज्यते। अथ कविनिबद्धवक्तृप्रौढ़ौक्तिसिद्धालंकारेण वस्तुध्वनिमुदाहरति—

**नाहं दूती क्षणं चास्या न विषह्य स्मरज्वरः ।**
**इति वक्तृवचः सिद्धालंकृत्या वस्तुनो ध्वनिः ।।**

अत्र कविनिबद्धदूतीरूपवक्त्रवचः सिद्धेन नाहं दूतीत्याक्षेपालंकारेण दूत्याः सत्यवाचित्वं तेन क्षणमपि विलम्बस्यायं नावसर इति वस्तु व्यज्यते।

यथा वा—

**ओल्लोल्लकर अरअणख्खणएहि तुह लो आणेसु मह दिण्णो।**
**रत्तंसुअस्ससाओ कोपेण पुणो इमे ण अक्कमिअ ।।**
**आर्द्रार्द्रकरजरदनक्षतेन तव लोचनयोर्मम दत्तः।**
**रक्तांशुकप्रसादः कोपेन पुनरिमे नाक्रान्ते ।।**

तव सपत्नीकृतानि यान्यार्द्रार्द्रण्यभिनवानि नखदन्तक्षतानि तैः मम लोचनयोः रक्तोऽरुणांशुः प्रभैव रक्तपटः तद्रूपः प्रसादो दत्तः तत्परिधानवशादेवानयोरारुण्यं न पुनः कोपवशादिति नायिकाया उत्तरेण किमिति कोपेनारुणलोचने वहसीति नायकप्रश्नस्योन्नयनादत्रोत्तरालंकारस्तेनालकारेण कोपेन नाक्रान्ते इत्यपह्नुतिसहितेन कविनिबद्धवक्तृवचः सिद्धेन न केवलं त्वं शाठ्यमाचरितवानपि चार्द्राणि नखक्षतानि च न गोपयसीति वस्तु व्यज्यते।

अथ कविनिबद्धवक्तृवचः सिद्धालंकारेणालंकारध्वनिमुदाहरति—

**प्रवातकदलीवास्ते तमालं वीक्ष्य सा हरे।**
**इति वक्त्रृवचः सिद्धालंकृत्यालंकृतिध्वनिः ॥**

अत्र कविनिबद्धदूतीरूपवक्तृवचः सिद्धेन प्रवातकदलीवेत्युपमानेन तस्याः कम्परूपसात्विकभाव प्रतीतिजननद्वारा तमाले भवद्भ्रान्तिर्जात इति भ्रान्तिमदलंकारो व्यज्यते।

यथा वा–

**महिलासहस्सभरिए तुह हि अए सुह अ सौ अमा अंती ।**
**दिअहं अणण्णकम्मा अङ्गं तणु अं वि तणुएइ ॥**
**महिलासहस्रभरिते तव हृदये सुभग सा अमान्ती ।**
**दिवसमनन्यकर्मा अङ्गं तन्वपि तनयति ॥**

महिलासहस्रभरितत्वात् तव हृदयस्य तत्रावकाशं सा न लभते। ततः स्वतः कृशमप्यङ्गमनन्यव्यापारा सती सर्वस्मिन्नपि दिवसे तनूकरोतीत्यत्र महिलासहस्रभरितत्वस्य अवकाशाभावे तस्य च तनूकरणे पञ्चम्यन्तादिपदं विनापि हेतुत्वप्रतीतेः काव्यलिङ्गमलंकारस्तेन च कविनिबद्धदूतीरूपवक्त्रृवचः सिद्धेन शरीरं तनूकरणरूपे कारणे पूर्णेऽपि अवकाशलाभरूपकार्याभावाद्विशेषोक्तिः व्यज्यते। एवम् अर्थशक्त्युद्भवव्यञ्जनाया द्वादशापि भेदा उदाहृताः ।

अथ शब्दार्थोभयशक्तिजं विवृणोति–

**भवेदेकविधस्तत्र शब्दार्थोभयशक्तिजः ।**
**मनो हृद्द्विजराजोऽयं भाति सर्वज्ञशेखरः॥**

शब्दार्थोभयसामर्थ्यसमुत्थो यः तृतीयोऽभिधामूलध्वनिप्रभेद उक्तः स पुनरेकविध एव। यथा सर्वज्ञस्येश्वरस्य शेखरीभूतो मनोहारी द्विजराजश्चन्द्रो भातीत्यभिधया प्रतिपाद्यमाने सर्वविदग्रणीर्ब्राह्मणोत्तमो भातीति सर्वज्ञादिपदैः व्यञ्जनया प्रतीयते। वाक्येन ब्राह्मणोत्तमौपम्यं चन्द्रे व्यज्यते। तत्र द्विजराजसर्वज्ञपदयोः पर्यायासहत्वात् शब्दशक्तिमूलत्वं मनोहृच्छेखरपदयोः पर्यायसहत्वात् अर्थशक्तिमूलत्वं चेत्युभयशक्तिमूलता।

यथा वा–

**अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा ।**
**तारकातरला श्यामा सानन्दं न करोति किम् ॥**

तन्द्रा जाडयं तदभावेनौज्ज्वल्यं लक्ष्यते। उज्ज्वलचन्द्रभूषणा समुद्दीपितमदना रात्र्या उद्दीपनविभावत्वात् मन्मथोद्दीपकत्वं तारकाभिः नक्षत्रैः तरला सा श्यामा रात्रिरानन्दं न करोति किमित्यभिधया प्रतिपाद्यते। व्यञ्जनाया तु[1] उज्जवलचन्द्राख्यशिरोभूषणभूषिता

---

१. M. om तु

आलम्बनविभावतया समुद्दीपितमन्मथा तारकया कनीनिकया तरला श्यामा यौवन मध्यस्था सानन्दं न करोति, किमिति चन्द्रादिपदैः शिरोभूषणविशेषादयः प्रतिपाद्यन्ते। वाक्येन कामिन्यौपम्यं रात्रौ प्रतिपाद्यते। अत्र चन्द्रादिपदानां श्लिष्टतया शब्दशक्तिमूलता, समुद्दीपितादिपदानां पर्यायसहिष्णुत्वात् अर्थशक्तिमूलता चेत्युभयशक्तिमूलत्वम्। यद्यपि उभयशक्तिमूलेऽपि व्यङ्ग्यानां वस्त्वलंकारादिभेदेन व्यञ्जकानामर्थानां स्वतः सिद्धत्वादिभेदेन बहवो भेदाः समुद्भवन्ति, तथापि शब्दार्थोभयशक्तिमूलत्वोपाधीनेकीकृत्य एकविध इत्युक्त मित्याहुः।

निगमयति—

**अष्टादश प्रभेदाश्च ध्वनेरेवमुदाहृताः ॥१८०॥**

लक्षणामूलो ह्यविवक्षितवाच्योऽर्थान्तरसंक्रमितवाच्यात्यन्ततिरस्कृतवाच्यभेदेन द्विविधोऽभिधामूले तु विवक्षितान्यपरवाच्ये रसादिव्यञ्जकोऽसंलक्ष्यक्रमव्यङ्ग्य एकविध एव। संलक्ष्यक्रमव्यङ्ग्यस्तु शब्दशक्तिमूलो वस्तुध्वनिः अलंकारध्वनिश्चेति द्विविधोऽर्थशक्तिमूलस्तु अर्थस्य स्वतः सिद्धत्वेन कविप्रौढोक्तिकल्पितत्वेन कविनिबद्धवक्तृप्रौढौक्त्यर्पितत्वेन त्रैविध्ये त्रिविधानां चार्थानां वस्त्वलंकारभेदेन द्वैविध्ये पुनः षड्विधः। एवं व्यञ्जकीभूतानां षड्विधानामपि अर्थानां वस्त्वलंकारात्मकव्यङ्ग्य-द्वैविध्यात् द्वादशविधत्वमित्यर्थशक्तिमूलो द्वादशविध उभयशक्तिमूलस्त्वेकविध इत्यष्टादशध्वनिप्रभेदाः। एवमुक्तरीत्योदाहृताः ।

ननु असंलक्ष्यक्रमव्यङ्ग्यस्य रसादिव्यङ्ग्यभेदात् बहवो भेदाः संभवेयुः । अतः कथमष्टादशेत्युक्तमित्यत आह—

**व्यङ्ग्यानां हि रसादीनां यद्यप्यानन्त्यमिष्यते ।**
**तथाप्यलक्ष्यक्रमतोपाध्यैक्यादेकतोदिता ॥१८१॥**

रसो हि श्रृङ्गारादिभेदेन नवविधः। तत्रापि संभोगविप्रलम्भेदेन श्रृङ्गारद्वैविध्यम्। तत्र संभोगस्यैव परस्परदर्शनालिङ्गनचुम्बनकुसुमापचयजलकेलिसूर्यास्तमयचन्द्रोदयऋतुवर्ण-नादयो बहवो भेदाः। विप्रलम्भश्च पञ्चविध उक्तः। तत्रापि अभिलाषादयो भेदाः उक्ताः। तयोरपि विभावानुभावव्यभिचारिभेदाः। तत्रापि नायिकयोरुत्तममध्यमाधमाधमप्रभेदाः। तत्रापि देशकालावस्थाभेदा इत्येकस्यैव रसस्यानन्त्यं, का गणना त्वन्येषामपि संकलन इति यद्यपि व्यङ्ग्यभेदादनेकभेदाः संभवन्ति तथापि तेषां परिगणयितुमशक्यत्वादसंलक्ष्यक्रम-व्यङ्ग्यत्वोपाधिनैकीकृत्य एकविधो रसादिध्वनिरिति गण्यते। अथ उभयशक्तिसमुत्थो वाक्य एव भवति। पदशक्तेर्द्वयस्यापि तुलाधृतवदवस्थानासंभवादन्ये सप्तदशापि भेदा वाक्य इव पदेऽपि संभवतीत्याह—

**वाक्य एव भवेदेष शब्दार्थोभयशक्तिजः ।**
**भेदाः सप्तदशान्ये ये वाक्यवत्ते पदेऽपि च ॥१८२॥**

यद्यपि उभयशक्तिमूलः कालिदासादिप्रबन्धेष्वपि संभवतीति वाक्य एवेत्ययुक्तम्।

तथापि अतिशयितत्वाभावेन ध्वनित्वाभावादिति भावः। न च कथमेकदेशभूतपदविषयो ध्वनिः महावाक्योपयोगी स्यादिति वाच्यम्। कर्णाद्येकावयवस्थितताटङ्कादिमात्रेण कामिन्या भूषितत्ववत् पदविषयेण व्यङ्ग्येनापि वाक्यस्य चारुत्वोपपत्तेः।

अत्र प्रथमं लक्षणामूलध्वनौ पदे अर्थान्तर संक्रमितवाच्यमुदाहरति—

**यस्मिन् जीवति जीवन्ति बहवः स तु जीवति ।**
**अर्थान्तरे संक्रमितवाच्यतेहावगम्यताम् ।।**

अत्र जीवतीतिपदं स्वोदरपूरणैकपरजीवनवैलक्षण्ये संक्रमितवाच्यम्। धन्यत्वप्रतीतिश्च फलम् ।

यथा वा—

**यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा ।**
**अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति ।।**

अत्र रूपभेदं विना सामानाधिकरण्यायोगात्[1] नायिकरत्यायोगाद् द्वितीयमित्रादिपदान्यर्थान्तरसंक्रमितानि। तत्र द्वितीयमित्रपदं विश्रब्धत्वसंक्रमितवाच्यम्। द्वितीयशत्रुपदं च सर्वथा नाश्वस्तत्वपरम्। द्वितीयानुकम्प्यपदं सर्वथा निरपराधत्वपरम्। सहृदयत्वनिरामयत्वसंपत्तिमत्त्वप्रतीतयश्च यथाक्रमं प्रयोजनानि। मित्रादिशब्दाः प्रत्येकमुदाहरणम्। प्रतिस्वं वाक्यपरिसमाप्तेः अतोपपदप्रकाश्योदाहरणत्वविरोधो वाक्यत्रयेऽपि राज्ञो महापुरुषत्वं व्यङ्ग्यं चतुर्थपादवाक्यद्वयेन त्वन्यवैलक्षण्येन धन्य[2]ता व्यङ्ग्येत्याहुः

अथात्यन्ततिरस्कृतवाच्यं पदगतमुदाहरति—

**धवलिम्ना विलिम्पन्ति यशांसि तव दिक्तटान् ।**
**इत्यादिषु पदे वाच्यं स्यादत्यन्ततिरस्कृतम् ।।**

अत्र विलेपनस्य मूर्तद्रव्यसाधनकत्वेन धवलिमसाधनकत्वासंभवात् विलिम्पन्तीति पदमत्यन्त तिरस्कृतवाच्यं सत् संबन्धमात्रं लक्षयति-यशसामितरयशोवैलक्षण्येन व्यापनं प्रयोजनम् ।

यथा वा—

**खलववहारा दीसन्ति दारुणा जइवि तह वि धीराणां ।**
**हि अ अवअंस बहुमआ णं हुववसा आ विमुज्झंति ।।**
**खलव्यवहारा दृश्यन्ते दारुणा यद्यपि तथापि धीराणाम् ।**
**हृदयवयस्यबहुमता न खलु व्यवसाया विमुह्यन्ति ।।**

---

१. Pr. om सामानाधिकरण्य

धीरेषु कस्मिंश्चित्कार्ये प्रवर्तमानेषु तत्प्रवृत्तिदूषणपराः खलव्यवहारा यद्यपि भवन्ति तथापि हृदयमेव यस्य सुहृत्त्वेन बहुमताः सम्यगालोच्य निर्धारिताः तेषां प्रवृत्तयो न मुह्यन्ति न मध्ये प्रतिहता भवन्तीत्यत्र चेतनधर्मस्य मोहस्य व्यवसायेष्वसंभवादत्यन्ततिरस्कृत-वाच्यतया विमुह्यन्तीति पदं प्रतिहतिं लक्षयति। सर्वथा व्यवसितकार्यनिर्वहणं व्यङ्ग्यम्।

एवं लक्षणामूलौ पदप्रकाश्यतयोदाहृत्याभिधामूलेष्वसंलक्ष्यक्रमव्यङ्ग्यं पदगतमुदाहरति—

**संनिधते सदा चित्ते तद्वक्त्रं तरुणीमणेः ।**
**असंलक्ष्यक्रमव्यङ्ग्यध्वनिरत्र पदे भवेत् ।।**

अत्र तदिति सर्वनामपदेनानुभवैकगोचरा विशेषाः प्रकाश्यनते । तेन च लोकोत्तरचमत्कारकारिता व्यज्यते । तथा च विप्रलम्भः प्राधान्येन तत्पदेन व्यज्यते। यथा वा—

**लावण्यं तदसौ कान्तिस्तद्रूपं स वचः क्रमः ।**
**तदा सुखास्पदमभूदधुना तु ज्वरो महान् ।।**

तदा तत्सन्निधौ सुखहेतुरभूदधुना तद्विरहे ज्वरः साध्यवसानलक्षणया संतापहेतुः इत्यत्र तदादिसर्वनामपदैः पूर्वोक्तरीत्या प्राधान्येन विप्रलम्भः व्यज्यते। यदि च सर्वनामपदानां बुद्धिस्थवाचकतैवेति न व्यञ्जकत्वमिति मतम्। तदान्यदुदाहियते—

**मुग्धे मुग्धतयैव नेतुमखिलः कालः किमारभ्यते**
**मानं धत्स्व धृतिं बधान ऋजुतां दूरीकुरु प्रेयसि ।**
**सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना**
**नीचैः शंस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति ।।**

हे मुग्धे! स्वहितसाधनज्ञानशून्ये मुग्धतयैव स्वेष्टसाधनज्ञानशून्यतयैव सर्वमायुर्नेतुं किमुद्युक्तासि ? इदं न युक्तम्। मानं धत्स्व कथं मानधारणम् ? इत्याकाङ्क्षायाम् आह— प्रेयसि प्रिये ऋजुतामार्जवं दूरीकुरु । प्रेयसि परं प्रेमास्पदे कथमनार्जवं कर्तुं शक्यमिति अत उक्तं धृतिं बधानेति। एवं सख्योपदिष्टे भीतानना भीत्यभिव्यञ्जकहस्ता पिधानादिचेष्टाश्रयानना नित्यं हृदयसंनिहितः प्रियः श्रोष्यति। तन्नीचैर्मन्दं शंसेति सखीं प्रति अवददित्यत्र भीतानना इत्यनेन नीचैः शंसनस्य युक्तता व्यज्यते। न च युक्तताया वस्तु रूपत्वात् तव्द्यञ्जनेऽपि रसाभिव्यञ्जकत्वाभावे नासंलक्ष्यक्रमव्यङ्ग्योदाहरणत्वमयुक्तमिति वाच्यम्। तदानीमन्यहेतुकभयस्याभावात् विप्रलम्भश्रृङ्गारस्य प्रेयसि रागातिशयस्य चानुरणनन्यायेन व्यज्यमानत्वात् न दोष इति ध्येयम्।

**एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।**
**लीलाकमलपत्राणि गणयामास पार्वती ।।**

अत्राधोमुखीतिपदेन लज्जाख्यभावो व्यज्यते। एवम् अन्येषां भावादीनां[1] रसाभासादीनां च पदव्यङ्ग्यत्वमुदाहार्यम् । रसाभासादयो हि वाक्यप्रकाश्या अपि रसापेक्षया निकृष्टचमत्कारा इति पदप्रकाश्यादीनां तु तेषां निकृष्टतमचमत्कारकारितैवेति पृथक् नोदाहरणमाहतमस्माभि-रिति ध्येयम् ।

अथ संलक्षयक्रमव्यङ्गभेदेषु शब्दशक्त्या पदे अलंकारध्वनिमुदाहरति—

**चित्ते स्फुरतु तद्रूप हरेर्दैत्यद्विपद्विषः ।**
**इत्यादौ शब्दशक्त्युत्थः स्यात्पदेऽलंकृतिध्वनिः ।।**

अत्र हरिपदेन व्यञ्जनया सिंहप्रतिपादन द्वारा भगवतः तदौपम्यं व्यज्यते।
यथा वा—

**रुधिरविसरप्रसाधितकरालकरवालरुचिरभुजपरिघः ।**
**झटिति भ्रुकुटिविटङ्कितललाटपट्टो विभाति नृपभीमः ।।**

हे नृप! रक्तप्रसरालंकृतभीषणखड्गमनोज्ञबाहुपरिघातनः सद्योभ्रूक्षेपसंजातविटङ्क-फालफलको भवानिति शेषः। भीमो भयङ्करो विभातीत्यत्र भीमपदेन नृपस्य भीमसेनौपम्यं व्यज्यते। "विशेषणं विशेष्येण बहुलमिति" विशेषणस्यापि पश्चान्निर्देशो नानुपपन्न इति नृपभीम इत्येकमेव पदम्। तथा च भवानिति नाध्याहर्तव्यम्। ऐकपद्ये च न रूपकं तथा सत्यलंकारेणैवालं कारध्वनित्वप्रसक्त्या शब्दशक्त्यालंकारध्वनित्वविरोधात्। नाप्युपमितसमासः उपमाया व्यङ्ग्यत्वानापत्तेः इत्यप्याहुः। शब्दशक्त्या पदे वस्तुध्वनिमुदाहरति—

**समरे त्वद्भुजाशौर्यं पश्यन्त्यनिमिषा द्विषः ।**
**इत्यत्र शब्दशक्त्युत्थः पदे वस्तुध्वनिर्भवेत् ।।**

अत्र निमेषरहितवाचकेनानिमिषपदेन त्वद्विषो देवत्वं प्राप्ता इति वस्तु व्यज्यते।
यथा वा—

**भुक्तिमुक्तिकृदेकान्तसमादेशेन तत्परः ।**
**कस्य नानन्दनिष्यन्दं विदधाति सदागमः ।।**

युक्तिं सुरतोपभोगमनन्तरं मुक्तिं च करोतीति तथा एकान्ते उपह्वरे यत्समादेशनमाह्वानं तत्र प्रवणः सतः प्रियस्यागमः कस्य स्त्रीजनस्यानन्दातिशयं न तनोतीति संकेतदायिनं कामुकं काचिन्मुख्यया वृत्त्या स्तौति। तस्यैव प्रकृतत्वात् तत्र च भुक्तिमैहिकभोगं मुक्तिमपवर्गं च कुर्वन्नेकान्तसमादेशने निर्विचिकित्सोपदेशेन प्रवणः सन्नागमो वेद इति सदागमपदेन वेदो व्यज्यते। समीपस्थवञ्चनार्थं तत्रापि तात्पर्यादित्येके।

---

१. M. भावानां for भासादीनां

केचित्त्वप्रस्तुतप्रशंसया मुख्यया वृत्त्या वेद एवात्र स्त्यते। संकेतदायिनः स्तुतिस्तु व्यञ्जनयेत्याहुः।

अथार्थशक्तिमूलध्वनिषु स्वतः संभविपदार्थप्रयुक्तभेदेषु चतुर्षु पदे वस्तुना वस्तुध्वनिमुदाहरति—

**अद्य खड्गः समिच्छेदात् सफलस्त्वद्विषां वने ।**
**पदे स्यादर्थशक्त्यात्र वस्तुना वस्तुनो ध्वनिः ॥**

अत्र प्रकृतवाक्यार्थेन वस्तुना तव शत्रूणां पूर्वं समरे खड्गो निष्फलोऽभूदिति वस्तु अद्येति पदेन व्यज्यते।

यथा वा—

**सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं**
**यातोऽस्ताचलमौलिमम्बरमणिर्विस्रब्धमत्रागतम् ।**
**आश्चर्यं तव सौकुमार्यमभितः क्लान्तासि येनाधुना**
**नेत्रद्वन्द्वममीलनव्यतिकरं शक्नोति तेनासितुम् ॥**

सायं मज्जनमुपासितमादरेण शीलितं चन्दनेन च शरीरं सम्यगालिप्तम् । भानुमानप्यस्ताद्रिशिखरं गतवानत्रागमनं च विस्रब्धं मन्दमथाप्यभितः क्लान्तासि यतस्ते नयनयुगं मीलनव्यतिकररहितमासितुं स्थातुं न शक्नोति। अहो तव सौकुमार्यमित्यत्र सायमित्यादिभिः त्रिभिः विशेषणैः कलमस्य धर्मातिशयप्रयुक्तत्वशङ्का निवार्यते। विस्रब्धमित्यनेन सत्वरागमनप्रयुक्तशङ्का च निरस्यते। एवं क्लमहेत्वभावेऽपि क्लान्तासीत्यहेतुकक्लमरूपेण वस्तुना स्वतः संभविनाद्यैव परपुरुषमुपभुज्य[१] स्नातास्यनुलिप्तासि चेति वस्त्वधुनापदेन प्राधान्येन व्यज्यते। यद्यपीयं सखीं प्रति कस्याश्चिदुक्तिरिति कविनिबद्धवक्तृवचः सिद्धार्थमूलकध्वनिप्रस्ताव एवेदमुदाहर्तुमुचितम् तथापि वस्तुना वस्तुध्वनिमात्रं पुरस्कृत्येदमिहोदाहृतमिति ध्येयम्।

अथात्रैव वस्तुनालंकारध्वनिमुदाहरति—

**सदा त्वमर्थिनामाशां पूरयस्यवनीपते[२] ।**
**पदे स्यादर्थशक्त्यात्र वस्तुनालंकृतिध्वनिः ॥**

अत्र प्रस्तुतवाक्यार्थरूपेण वस्तुना राज्ञो दाने मेघाव्यतिरेकः सदेति पदेन प्राधान्येन ध्वन्यते ।

यथा वा—

**तदप्राप्तिमहादुःखविलीनाशेषपातका।**
**तच्चिन्ताविमलाह्लादक्षीणपुण्यचया सती ॥**

---

१. Pr. परमपुरुष° for परपुरुष°

२. Pr. पूरयन्यवनीपते for पूरयस्यवनीपते

**चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम् ।**
**निरुच्छ्वासतया मुक्तं गतान्या गोपकन्यका ॥**

तद्विरहदुःखानुभवक्षतसमस्तपातका तच्चिन्ताजनितानन्दानुभवक्षीणनिखिल-पुण्यनिचया कापि गोपकन्यका निरुच्छ्वासतया भगवन्तं चिन्तयन्ती मुक्तिं गता । शास्त्रेषु हि तत्तत्पापपुण्ययोः स्वस्वजन्यतत्तद्[१]दुःखसुखानुभवाभ्यामेव नाशो न तु पापान्तरपुण्यान्तर-जन्यदुःखसुखानुभवाभ्यां दुःखान्तरसुखान्तरजनकयोः पापपुण्ययोरपि इति स्थितिः । तथा चात्र तद्विरहदुःखानुभवेनाशेषपातकविलयप्रतिपादनादिदमवगम्यते। तद्विरहदुःखमेव समस्त-पातकजन्यदुःखत्वेनाध्यवसीयते । तथा तादृशदुःखजनकपातकविलय एव समस्तपातक-विलयत्वेनाध्यवसीयत इति, ततश्चेदमतिशयोक्तिद्वयमशेष पदेन प्राधान्येन द्योत्यते । तदभावे तद्विरहदुःखजनकपातकस्यैव तद्दुःखानुभवेन नाशप्रतीत्यापत्त्यातिशयोक्त्यनुन्मेषादेवं च तच्चिन्तासुखस्य सकलपुण्यजन्यसुखत्वेनाध्यवसानात्तथा तच्चिन्तासुखानुभवेन तज्जनकपुण्यनाशस्याशेषपुण्यनाशत्वेनाध्यवसानादतिशयोक्तिद्वयम्। तच्च द्वयपदेन प्राधान्येन द्योत्यते।

अथालंकारेण पदे वस्तुध्वनिमुदाहरति—

**शुचा दायि पयः स्वगोभिस्तेऽरौ तृणादरे ।**
**इत्यलंकृतितो वस्तुध्वनिरूह्यः पदे बुधैः ॥**

अत्र तृणचर्वणरूपं कारणं शत्रौ पयोदानरूपं कार्यमप्सरो नेत्रेष्वित्यसङ्गत्यलंकारेण तृणचर्वणकृतं रिपुं दयया त्वं विसृजसीति वस्तु शुचेति पदेन प्राधान्येन व्यज्यते।

यथा वा—

**क्षणदा सावक्षणदा वनमवनं व्यसनमव्यसनम् ।**
**बत वीर तव द्विषतां पराङ्मुखे त्वयि पराङ्मुखं सर्वम्॥**

क्षणदा रात्रिः अक्षणदा रात्रिर्न भवतीति विरोधः । उत्सवदायिनी न भवतीति तत्परिहारः। वनमवनम् अवनं वनं न भवतीति विरोधो रक्षणमिति परिहारः। व्यसनं व्यवस्थितिरव्यसनं व्यसनं न भवतीति विरोधी। अवीनामूर्णायूनामसनं कालनमिति परिहारः। पशुपालनमेव जीवनमिति यावत्। अत्र क्षणदादिशब्दशक्तिमूलो यो विरोधालंकारः तत्समर्थकेन त्वयि पराङ्मुखे सर्वं पराङ्मुखमित्यर्थान्तरन्यासेन विधिरपि त्वामनुवर्तते। यतः त्वयि पराङ्मुखे सर्वं पराङ्मुखं विपरीतस्वभावं जातमिति वस्तु व्यज्यते। तत्र सर्वमिति पदं प्राधान्येन व्यञ्जकम्।

अथालंकारेण पदेऽलंकारध्वनिमुदाहरति—

---

१. *M.om.* °तत्तत्°

**दैन्यं सहजमीक्ष्य त्वद्विष्ये कान्त दरिद्रता ।**
**तमेव श्रयतीत्यत्रालंकृत्यालंकृति ध्वनिः ।।**

अत्र दरिद्रता स्वसहजं दैन्यं तव रिपौ दृष्ट्वा नूनं तमेव स्वयमपि भजतीति उत्प्रेक्षया तव शत्रावेव दारिद्र्यं, नान्यत्रेति परिसंख्यालंकार एवकारेण व्यज्यते।

यथा वा–

**तुह वल्लहस्य गोसम्मि असि अहरो मिलाणकमलदलं।**
**इ अनववहुअसो ऊणकुणइव अणं महीसमूहम् ।।**
**तव वल्लभस्य विभाते आसीदधरो म्लानकमलदलम् ।**
**इति नववधूः श्रुत्वा करोति वदनं महीसंमुखम् ।।**

संमुखीकरणं लज्जया विनमनम्। अत्र अधरो म्लानकमलदलमिति रूपकेण नववधूकर्तृकचुम्बनस्याधरम्लानताहेतुत्वप्रतीतेः काव्यलिङ्गं व्यज्यते। तत्र च म्लानपदं प्राधान्येन व्यञ्जकम्। एवं स्वतः संभविनामर्थानां व्यञ्जकतां पदगम्यत्वेनोदाहृत्य कविप्रौढ़ोक्तिसिद्धार्थशक्तिमूलध्वनिषु वस्तुना वस्तुध्वनिमुदाहरति–

**नानावर्णं जगत्पूर्वं त्वत्कीर्तेरवदन् जनाः ।**
**इत्यादौ कल्पितार्थेन कल्पितार्थो ध्वनिः पदे ।।**

अत्र त्वत्कीर्तेः पूर्वं जगन्नीलपीतादिनानावर्णविशिष्टं जनाः अवदन्निति कविकल्पितेन वस्तुना सांप्रतं त्वत्कीर्त्या धवलधवलायमानमेकवर्णमेव जगदास्त इति कल्पितं वस्तुपूर्वमिति पदेन प्राधान्येन व्यज्यते।

यथा वा–

**स्त्रीसु चंदधवलासु ललि आमप्फालि ऊण जो चापम्।**
**एक्कच्छत्तंविअ कुणइ भुवनरङ्गं विइंभंतो ।।**
**रात्रिषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम् ।**
**एकच्छत्रमिव कुरुते भुवनराज्यं विजृम्भमाणः ।।**

यो मदनश्चन्द्रधवलनिशासु विजृंम्भमाणः सन् ललितं पुष्पमयमिति यावत्, आस्फालनक्रियाविशेषणं वा।चापमास्फाल्य भुवनमेव राज्यमेकच्छत्रमिव स्वैकवशंवदमिति यावत्। कुरुत इत्यत्र मदनवृत्तान्तेन कविप्रौढ़ौक्तिसिद्धेन वस्तुना ये कामिनो ये च विरक्ता ये च पक्षिमृगादयो येऽचेतनास्ते सर्वेऽपि रात्रिषु मदनाज्ञां नोल्लाङ्घयन्ति किं तु जागरूकाः सकलामपि रात्रिमुपभोगपरा एवातिवाहयवन्तीति वस्तु भुवनराज्यपदेन प्राधान्येन व्यज्यते। भुवनपदस्य चेतनाचेतनात्मकसकलप्रपञ्चवाचित्वात्।

अथ कविप्रौढ़ोक्तिसिद्धेन वस्तुनालंकारध्वनिमुदाहरति–

**मधुः प्रसूनमाध्वीभिः ससर्ज सरितो नवाः ।**
**इत्यादौ तु पदे क्लृप्तवस्तुनालंकृति ध्वनिः ।।**

अत्र कविकल्पितेन वसन्तवृत्तान्तरूपेण वस्तुनामाध्वीनामतिशयोक्तिः सरित इति पदेन प्राधान्येन व्यज्यते।

यथा वा–

**निशितशरधियार्पन् यत्यनङ्गो दृशि सुदृशः स्वबलं वयस्यराले ।**
**दिशि निपतति यत्र सा च तत्र व्यतिकरमेत्य समुन्मिषन्त्यवस्थाः ।।**

अनङ्गः सुदृशोऽराले वक्रे वयसि यौवन इति यावत्। दृशि निशितशरबुद्ध्या स्वबलं स्वकीयं विश्वविजयसामर्थ्यमर्पयति। सा च दृक्च यत्र दिशि निपतति तत्र दशावस्था व्यतिकरं संमर्दमेत्य समुन्मिशन्तीत्यत्र प्रकृतवाक्यार्थरूपेण कविकल्पितवस्तुना परस्परविरुद्धापि दशावस्था युगपत् भवन्तीति विरोधोऽतिशयोक्तिर्वा व्यतिकरपदेन प्राधान्येन व्यज्यते।

अथालंकारण कविप्रौढ़ोक्तिसिद्धवस्तुध्वनिमुदाहरति–

**स्मरःकुक्कुटकाहल्या निवर्तयति किं रणात् ।**
**द्वन्द्वमद्येत्यलंकृत्याक्लृप्तवस्तुध्वनिः पदे ।।**

अद्य प्रभाते स्मरस्ताम्रचूडधर्मकाहलीमुद्घोष्य मिथुनं रणात् निवर्तयति किमित्युत्प्रेक्षया स्मरो रात्रिमखिलां द्वन्द्वं संभोगजागरूकमेव करोति स्मेति कविकल्पितं स्मरवृत्तान्तरूपं वस्तु अद्येति पदेन प्राधान्येन व्यज्यते।

यथा वा–

**वारिज्जन्तो वि पुणो संताव कवट्ठिएण हि अएण ।**
**थणभरवअंसएणं विसुद्धजाईण चलइसे हारो ।।**
**वार्यमाणोऽपि पुनः सन्तापकदर्थितेन हृदयेन।**
**स्तनभरवयस्येन विशुद्धजातिर्न चलत्यस्या हारः ।।**

संतापकदर्थितेन हारेण सह गाढ़ालिङ्गने स्तनयोः पीडा भविष्यतीति अनुशयवतेवेत्युत्प्रेक्षा। स्तनयोः पीडयाकुतोऽस्य संताप इत्यत उक्तम्-स्तनभरवयस्येनेति। स्तनभरसाहित्यमेव तत्सख्यत्वेनाध्यवस्यते। तादृश्येन हृदयेन पुनः पुनः वार्यमाणोऽपि अस्या हारो विशुद्धजातितया निर्मलोत्पत्तिमत्तया स्वाश्रयपरित्यागदोषशून्यजातिमत्तया चेति ध्वन्यते। न चलति स्वाश्रयं परित्यज्यान्यत्र न गच्छति कम्पमान एवास्त इति यावत्। एवञ्च विपरीतरतावस्थेयमिति बोध्यम्। अत्र च विशुद्धजातित्वलक्षणेन काव्यलिङ्गालंकारेण हारोऽनवरतं कम्पामान एवास्त इति वस्तु न चलतीति पदेन प्राधान्येन व्यज्यते।

अथालंकारेणालंकारध्वनिः पदे यथा–

**जयत्यस्याः कटाक्षेऽद्धा स्वशरान् क्षिपति स्मरः ।**
**इत्यादिषु पदे ज्ञेयोऽलंकृत्यालंकृतिध्वनिः ।।**

अस्याः कटाक्षे जयति सति स्मरः स्वशरान्नूनं क्षिपतीति कविकल्पितस्मर-

शरत्यागोत्प्रेक्षया स्मरशरापेक्षयादसीयकटाक्षस्य व्यतिरेको जयतीति पदेन प्राधान्येन व्यज्यते। यथा वा—

**सोमुद्धनाम्णलंगो धम्मेल्लो कलिअललिअणि अदेहो।**
**ती एकं धहि बलं लहिअ सरो सुरअसंगरे ज अ इ ।।**
**स मुग्धश्यामलाङ्गो धम्मिल्लः कलितललितनिजदेहः**
**तस्याः स्कन्धाद्बलं लब्ध्वा स्मरः सुरतसङ्गरे जयति ।।**

मुग्धः सुन्दरश्यामलाङ्गः कलितमनोहरदेहो धम्मिल्लस्मरः तस्याः स्कन्धादंसप्रदेशात् सेवासन्निवेशमूलाच्च बलं लब्ध्वा सुरतसङ्गरे जयतीत्यत्र सुरतरभसेनांसप्रदेशो गलितं धम्मिल्लमवलोक्य रतिविरतिसमयेऽपि पुनरङ्कुरिताभिलाषः कामुकोऽभूदिति तात्पर्यम्। ततश्चात्र धम्मिल्लस्मर इति रूपकेण सुरतसङ्गर इति रूपकेण च चिरकालरतिपरिश्रान्तोऽपि कामुको रत्यारम्भ इवाङ्कुरिताभिलाषोऽभूदित्यभिलाषकारणाभावेऽपि अभिलाषप्रतीतेः विभावनालंकारः स्कन्धपदेन प्राधान्येन व्यज्यते।

एवं कविप्रौढोक्तिसिद्धानामर्थानां व्यञ्जकत्वमुदाहृत्य कविनिबद्धवक्तृप्रौढ़ोक्ति-सिद्धेष्वर्थेषु पदगतवस्तुना वस्तुध्वनिमुदाहरति—

**शठाधुना सा तनुते साहसं शशिवीक्षणे ।**
**इति वक्तृवचः सिद्धवस्तुना वस्तुधीः पदे ।।**

अत्र कविकल्पितदूतीरूपवक्तृवचः सिद्धेन शशिवीक्षणसाहसकरणरूपवस्तुना तस्या निजजीवितनैराश्यरूपं वस्तु साहसमिति पदेन प्राधान्येन व्यज्यते।
यथा वा—

**णवपुण्णिमा मिअंकस्य सुहअ कोसीत्ति भण सुमह सच्चम्। ।**
**का सोहग्गसमग्गा प ओसर अणिव्व तु ह अज्ज ।।**
**नवपूर्णिमा मृगाङ्कस्य सुभग कोऽसीति भग मम सत्यम् ।**
**का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य ।।**

अन्यानुरक्तं नायकं प्रति नायिकाया वचनमिदम्। हे सुभग त्वं नवपर्वचन्द्रस्य अत्र नवपदं रागाविलत्वद्योतनाय कोऽसि किं ज्येष्ठः, किं वा कनिष्ठोऽसीति सत्यं मम भण पूर्वं मयि तथानुरक्तोऽपि इदानीं नानुरक्तोऽसि ततस्त्वं हरिद्रारागोऽसीति यावत्। सौभाग्यशालिनी का वा तवाद्य प्रदोषरजनीवानुरागकारिणीति यावत्। अत्र कविनिबद्धनायिकारूपवक्तृ-प्रौढ़ोक्तिसिद्धेन प्रकृतवाक्यार्थरूपेण वस्तुना मयीवान्यस्यामपि क्षणादननुरक्तो भविष्यसीति वस्तु नवपदेन प्रदोषपदेन च प्राधान्येन द्योत्यते। अथात्रैव वस्तुना अलंकार ध्वनिमुदाहरति—

**न श्रोतास्य शुभं यावत्तावदेव व्रज प्रिय ।**
**इति वक्तृवचः सिद्धवस्तुनालंकृतिध्वनिः ।।**

हे प्रियाशुभं स्वमरणवार्तां यावन्न श्रोतासि तावदेव गन्तव्यं चेद्गच्छेति प्रकृतवाक्यार्थरूपेण कविनिबद्धनायिकारूपवक्तृवचः सिद्धेनाक्षेपालंकारो व्रजेति पदेन प्राधान्येन व्यज्यते।

यथा वा–

**सहि णवणि हुवणसमरम्मि अलंपाली सहीइ णिबिडाए।**
**हरो णिवरिओचि अ उच्चंरतोतदां कहं रमिंअं ।।**
**सखि नवनिवनसमरेऽङ्कपाली सख्या निबिडया ।**
**हारो निवारित एवोच्चरंस्ततः कथं रमितम् ।।**

इदं नवोढ़ां रात्रिवृत्तान्तं पृच्छन्त्याः सख्या वचनम्। हे सखि ! नवसुरतसमये उच्चरन्नुल्ललन्निर्भरसुरतप्रतिबन्धक इति यावत् तादृशो हारो निबिडया दृढयाङ्कपाल्येवा-लिङ्कनमेव सखी निर्भरसुरतसौलभ्योपयोगित्वात् अङ्कपालयाः सखीत्वेन निरूपणम् तया निवारितो विच्छिन्न एव भवति। ततो हारविच्छेदानन्तरं कथं रमितमित्यत्र कविनिबद्धसखी-रूपवक्तृवचः सिद्धेन प्रकृतवाक्यार्थरूपवस्तुना हारविच्छेदानन्तरं प्रौढ़ाङ्गनाया इव नवोढ़ाया अपि तवारम्भसमयसुरताद्विलक्षणमेवावश्यं रतम् अभूत् तत्कथं कीदृगिति कथयेति व्यतिरेकालंकारः कथं पदेन प्राधान्येन व्यज्यते।

अथात्रैवालंकारेण वस्तुध्वनिमुदाहरति–

**कुमुद्वतीव जाताद्य वीक्ष्येन्दुं त्वद्युता सखी ।**
**इति वक्तृवचः सिद्धालंकृत्या वस्तुनो ध्वनिः ।।**

अत्र त्वया युता सखी चन्द्रं वीक्ष्याद्य कुमुद्वतीव जातेति कविनिबद्धनायिकासखीरूपवक्तृवचः सिद्धेनोपमालंकारेण पूर्वं चन्द्रदर्शनेऽस्या मोहोऽभवदिति वस्त्वद्येति पदेन प्राधान्येन व्यज्यते।

यथा वा–

**पविसंती घरदारं विवलिअवअणा पुलोइ ऊणपहम् ।**
**खंधे धेत्तूण घडं हाहा ण्ट्ठोत्ति रुअसि सहिकिंति ।।**
**प्रविशन्ती गृहद्वारं विवलितवदना विलोक्य पन्थानम्।**
**स्कन्धे गृहीत्वा घटं हाहा नष्टइति रोदिषि सखि किमिति।**

अत्र मार्गावलोकनस्य द्वारप्रवेशसमये स्कन्धे ग्रहणस्य च घटनाशं प्रति हेतुत्वप्रतीतेः घटनाशस्य वा रोदनं प्रति हेतुत्वप्रतीतेः काव्यलिङ्गमलंकारः। तेन च सङ्केतनिकेते संगच्छन्तं दयितं दृष्ट्वा यदि तत्र गन्तुमिच्छसि तदा परं घटं गृहीत्वा गच्छेति वस्तु किमितीति पदेन प्राधान्येन व्यज्यते ।

यथा वा–

**विहलं खणं सहि तुमं दट्ठूण धडेण तरलतरदिट्ठिं ।**
**दारप्फं समिसेणं अस्सा गरुओत्ति पाडिअ विभिण्णो ।।**
**विह्वलां क्षणं सखि त्वां दृष्ट्वा घटेन तरलतरदृष्टिम् ।**
**द्वारस्पर्शमिषेणात्मा गुरुरिति पातयित्वा विभिन्नः।।**

हे सखि ! स्वभारेण विह्वलामत एव तरलतरदृष्टिं त्वां दृष्ट्वा घटेनैव स्वात्मा गुरुरिति मत्वा द्वारस्पर्शव्याजेन पातयित्वा विभिन्नो न तु त्वमेव द्वारस्पर्शव्याजेन घटस्य भङ्गं कृतवतीत्यत्र नदीकूललतागृहे कृतसंकेतं त्वद्गमनसमये तत्राप्राप्तं गृहप्रवेशसमये तत्र गच्छन्तं कामुकं दृष्ट्वा पुनः जलाहरणव्याजेन नदीगमनाय द्वारोपघातव्याजेन बुद्धिपूर्वमेव त्वया घटो भग्न इति मया विदितमेव, तत्किमिति नाश्वसिषि, तत्समीहितसिद्धये पुनर्नदीं प्रयाहि अहं ते श्वश्रूनिकटे सर्वं समर्थयिष्य इति वस्तु द्वारस्पर्शमिषेणेति कविनिबद्धवक्तृ-प्राढ़ोक्तिसिद्धया अपह्नुत्या व्यज्यते। तत्र मिषेणेति पदं प्राधान्येन व्यञ्जकम्।

अथात्रैवालंकारेणालंकारध्वनिमुदाहरति—

**मेरो ! कैलास किं भूभृत्प्रतापैस्त्वत्समोऽस्म्यहम् ।**
**इति वक्तृवचः सिद्धालंकृत्यालंकृतिध्वनिः ।।**

अत्र मेरो इति कैलासेन संबोधने कृते कैलास किमिति मेरोरुक्तिः। भूभृदित्यादिकैलासस्य प्रतिवचनम्। अत्र त्वत्सम इत्युपमया प्रतापेष्वतिशयोक्तिः व्यज्यते तत्र रजतात्मकत्वाभिप्रायमहमिति पदं प्राधान्येन व्यञ्जकम्।

यथा वा—

**जोण्णई महुरसेण अ विइण्णतारुण्णरनुअमणा सा ।**
**बुड्ढावि णवोढ़व्व परवहूअहहा हरेइ तुह हि अ अं ।।**
**ज्योत्स्नया मधुरसेन वितीर्णतारुण्योत्सुकमनाः सा ।**
**वृद्धापि नवोढ़ेव परवधूरहहा हरति तव हृदयम् ।।**

ज्योत्स्नया पलिततिरोधायिकया दत्ततारुण्या मधुरसेन केवलमुत्सुकमनाः सा वृद्धापि परवधूः इत्येव तव हृदयं नवोढ़ेव हरतीत्यत्र परवधूस्तव हृदयं हरतीति काव्यलिङ्गेन मामुज्झित्वा वृद्धामप्यभिलषसि, त्वदीयमाचरितं किं वक्ष्यामीति वक्तुमिष्टस्यापि अर्थस्य विशेषनिषेधरूपाक्षेपालंकारः परवधूपदेन प्राधान्येन व्यज्यते। एवं कविनिबद्धवक्तृप्रौढ़ोक्ति-मात्रनिष्पन्नशरीराश्चत्वारोऽपि भेदाः पदगताऽपि उदाहृताः। एवं च पूर्वोदाहृता वाक्यप्रकाश्या अष्टादशभेदा शब्दार्थोभयशक्त्युत्थवस्तुपदप्रकाश्यो न संभवतीति पदप्रकाश्याः सप्तदशभेदाः। एवमाहत्य पञ्चत्रिंशद्भेदाः उदाहृताः इति ध्येयम्।

अथार्थशक्त्युद्भवानां प्रकारान्तरेण कतिचिद्भेदानाह—

**प्रबन्धेऽपि द्वादश स्युरर्थशक्त्युद्भवा भिदाः ।।१८३**

वाक्वपदयोरिव प्रबन्धेऽप्यर्थशक्त्युद्भवा द्वादशापि भेदाः संभवन्ति। यथा

गृध्रगोमायुसंवादे—

> अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसङ्कुले ।
> कङ्कालबहुले घोरे सर्वप्राणिभयंकरे ।।
> न चेह जीवितः कश्चित्कालधर्ममुपागतः ।
> प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ।।

एतावाननेकः प्रबन्धः। श्मशाने शवं निक्षिप्य बहुकालं रुदतः तद्बन्धूनुद्दिश्य सूर्येऽस्तमिते स्वस्य तव स्थित्यसंभवेन शवभक्षणं न संघटेत। किं तु गोमायोरेव स्यादिति मत्वा सूर्यास्तमयात् प्रागेव शवं विसृज्य भवद्भिर्गन्तव्यमित्यभिप्रायवतो गृधस्य वाक्यमिदम्। अत्र गृध्रगोमायुसंकुलत्वादिश्मशानविशेषणं स्थितिनिवर्तने हेतुः कङ्कालो मांस विशेषः इह भूलोके जीवितः प्रत्युज्जीवित कालधर्मं मरणम्। अत्र बन्धुषु निवृत्तेषु ममोपभोगाय भवत्वयं शव इति दिवा बलवतो गृध्रस्य गोमायुवञ्चनाभिलाषरूपं वस्तु वस्तुनैव प्रबन्धेन प्रकाश्यते। अथ दिवैव शवं विसृज्य बन्धुभिर्गतं चेत् स्वस्य न भविष्यति। किं तु गृध्रस्यैव भविष्यतीति मत्वा बन्धुस्थितिपर उत्तरः पबन्धो गोमायोः—

> आदित्योऽयं स्थितो मूढ़ा स्नेहं कुरुत साम्प्रतम् ।
> बहुविघ्नो मुहूर्तोऽयं जीवनेदपि कदाचन ।।
> अमुं कनकवर्णाभं बालमप्राप्तयौवनम् ।
> गृध्रवाक्यात्कथं मूढ़ास्त्यजध्वमविशङ्किताः ।।

आदित्योऽद्यापि तिष्ठति ततो नात्रापि भीतिप्रसक्तिः तन्न गन्तव्यम्। बहुघ्न इष्टाप्राप्तौ यथा विघ्नबाहुल्यं तथानिष्टप्राप्तावपीति दैवाज्जीवेदपि कनकवर्णाभमित्याद्यत्यागे हेतुः गृध्रवाक्यादित्यनेन गृध्रस्तु स्वयं भक्षितुमेवं वदति। नैतद्वाक्ये विश्वासः कार्य इत्याशयः। अत्रापि रात्रौ ममैवोपभोगाय संपत्स्यत इति पुरुषव्यावर्तन परस्य गोमायोर्गृध्र-प्रतारणाभिलाषरूपं वस्तु स्वतः संभविना वस्तुना प्रबन्धेन द्योत्यते। युग[1]विशेषणात् दिव्यानुभावशालित्वात् गृध्रगोमायुसंवादः स्वतः संभवी न तु कविप्रौढ़ोक्तिमात्रनिष्फन्न इत्याहुः।

अलंकारेण वस्तुध्वनिः यथा—

> एकातपत्रं जगतः प्रभुत्वं नवं वयः कान्तमिदं वपुश्च।
> अल्पस्य हेतोर्बहु हातुमिच्छन् विचारमूढ़ः प्रतिभासि मे त्वम् ।।

इति रघुवंशे सिंहवाक्यानन्तरम्—

> क्षतात्किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढ़ः ।
> राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा ।।

---

१. M. युगविशेषाणां for युगविशेषणात्

इति राजवाक्यप्रबन्धे क्षतत्राणाभावस्य राज्यादिकैमर्थ्यहेतुत्वप्रतीतेः काव्यलिङ्गमलंकारः । तेन क्षतसंरक्षणमेव मम मुख्यं प्रयोजनं पुत्रादिकं प्रयोजनं त्वानुषङ्गिकमिति वस्तु व्यज्यते। एवमन्येऽपि ऊह्याः। वाक्यसमूहः प्रबन्धः। स चावान्तरप्रबन्धो महाप्रबन्धश्चेति द्विधा। तत्राद्ये इदमुदाहरणद्वयम्। अन्त्येऽप्यूह्यम्। अथासंलक्ष्यक्रमव्यङ्ग्यस्य प्रबन्धवाक्यपदगतत्ववत् पदैकदेशादिगतत्वेनापि केचन भेदाः संभवन्तीत्याह—

**पदैकदेशरचनावर्णेष्वपि रसादयः ।**
**जगत्सु स जयत्येकः कृशासि सखि यत्कृते ॥१८४॥**

तिङन्तं सुबन्तं च पदं तदेकदेशास्तदवयवाः प्रकृतिप्रत्ययादयः रचना संघटना, वर्णान्यक्षराणि तेष्वपि रसाः श्रृङ्गारादयः आदिशब्दात् भावादयश्च व्यज्यन्ते। यथा जगत्सु इत्यत्र जगदिति प्रातिपदिकेन क्वचिद्देशविशेषमात्र एवायं न जयति, किं तु सर्वस्मिन्नपि देश इति व्यज्यते। तद्गतेन बहुवचनेन भूलोकमात्रेऽयं न केवलं जयति। रसातलस्वर्गयोरपीति व्यज्यते। तथा जयतीति तिङ्प्रकृत्या तस्य सर्वातिशयित्वम्। एवं जगदादिपदैकदेशैः विप्रलम्भश्रृङ्गाररससाम्राज्यमभिव्यज्यते।

तिङन्तपदप्रकृतिव्यञ्जकता यथा वा—

**रइकेली हि अणिवसणकरजु अलणिरुद्धणअणजुअलस्य ।**
**रुद्दस्स तइअणअणं पव्वइ परिचुंबि अंजअइ ॥१८४॥**
**रतिकेलीहृतनिवसनकरयुगलनिरुद्धनयनयुगलस्य ।**
**रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति ॥**

रतिकेलीहृतं देवीनिवसनं येन स तथा देव्याः करयुगलेन पिहितं नयनयुगलं नयनयुगलं यस्य स तथा रतिकेलीहतनिवसनश्चासौ करयुगलनिरुद्धनयनयुगलश्च तस्येति विग्रहः। भगवति वसनं हरति सति तदवलोकनेन सलज्जा देवी करद्वयेन तदीयं नयनद्वयं पिधाय यत्तृतीयं नयनं चुम्बनेन मुकुलीचकार, तन्नयनं जयति। इतरनयना पेक्षया उत्कर्षेण वर्तत इत्यत्र करतलपिहितनयनद्वयापेक्षया चुम्बनपिहितस्य उत्कर्षपरतया जयतीति तिङ्प्रकृत्या चुम्बितस्य नयनस्य लोकातिशायित्वं व्यज्यते। तेन च संभोगश्रृङ्गाररसस्य साम्राज्यं व्यज्यते। अत्र चोत्तमदेवताविषयसंभोगवर्णनस्य अनौचित्यादाभासत्वमित्यप्याहुः-

सुबन्तपदप्रकृत्या यथा वा—

**प्रेयान् सायमपाकृतः सशपथं पादानतः कान्तया**
**द्वित्राण्येव पदानि वासभवनाद्यावन्नयात्यात्मना ।**
**तावत्प्रत्युत पाणिसंपुटलसन्नीवीनिबन्धं धृतो**
**धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः ॥**

क्षयलक्षणं व्यङ्ग्यं ब्राह्मणानुसरणं श्रेयस इति वाच्यं च तुल्यमिति तुल्यप्राधान्यमित्यप्याहुः- अत्र प्राधान्यस्य सन्देहसाम्ययोः सहृदया एव प्रमाणं व्युत्थितैरन्यथा वक्तुं शक्यत्वादित्याहुः।

अथ काक्वाक्षिप्तं लक्षयति—

**काक्वाक्षिप्तं यत्र साक्षात्काक्वा व्यञ्जकतेष्यते ।**
**मन्ये सा सुभगामत्तो यां त्वमेवानुधावसि ।।२०५।।**

यत्र काकुः साक्षादेव व्यञ्जिका तत्र काक्वाक्षिप्तं प्रतीयमानो विधिः निषेधो वा काक्वाक्षिप्यते प्रतिक्षिप्यत इत्यन्वर्थता यथा सा सुभगेत्यत्र काक्वा वाच्यसौभाग्यनिषेधेन नैव सा सुभगेति व्यज्यते। ननु—

**तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां**
**वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।**
**विराटस्यावासे स्थितमनुचितारम्भनिभृतं**
**गुरुः खेद खिन्ने मयि भजति नाद्यापि कुरुषु ।।**

इत्यत्रापि काकोर्व्यञ्जकत्वाविशेषात् तत्र कथं प्रधानध्वनिः इत्युक्तं तृतीयोल्लास इति चेन्न। तत्र प्रश्नमभिव्यज्य काक्वां विश्रान्तायां तद्वैशिष्ट्यज्ञानवतां सहृदयानां खिन्ने कोपस्यायोग्यत्वात्खिन्न इति पदेन मयि न कोपो युज्यते। किं तु अपकारिषु कुरुष्वेव स युक्त इति व्यज्यत इति तत्र न काकोः साक्षाव्द्यञ्जकत्वमिह तु तथेति ततो भेदः। न च सा सुभगेति शक्यान्वयस्यायोग्यतया विपरीतलक्षणया न सा सुभगेति प्रतीतिसंभवात् किम् इत्यत्र काक्वा व्यञ्जकताश्रीयत इति वाच्यम्। लक्षणया न सा सुभेगत्यंशलाभेऽपि न सुभगैवेत्यवधारणांशो व्यञ्जना विषय एवेत्याहुः।

ननु एवं—

**निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो**
**नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।**
**मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे**
**वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम्।।**

इत्यत्रापि वापीं नैव गतासि, किं तु तस्य अधमस्यान्तिकमेव गतासीति काक्वा व्यञ्जनसंभवादुत्तमकाव्यता न स्यादिति चेन्न। तत्र अधमपदेनैव विवक्षितार्थव्यञ्जनसंभवे काक्वा व्यञ्जकत्वानङ्गीकारात्। यदि च तत्रापि काकोर्व्यञ्जकता कवेः विवक्षिता स्यात् तदा मध्यम काव्यतैव इत्याहुः। यथा वा—

**मथ्नामि कौरवशतं समरे न रोषात्**
**दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।**

संचूर्णयामि गदया न सुयोधनोरू
सन्धिं करोतु भवतां नृपतिः पणेन ॥

संरब्धस्य भीमसेनस्य वाक्यमिदम्। कौरवशतं कोपेन युधि न मथ्नामि दुःशासनस्य वक्षसो रुधिरं न पिबामि, सुयोधनस्योरू गदया न संचूर्णयामि, भवतां न तु मम नृपतिः युधिष्ठिरः पणेन पञ्चषट्ग्राममात्रं प्रतिग्राह्यतया स्वीकृत्येति यावत् दुर्योधनेन सन्धिं करोत्वित्यत्र प्रतिनकारं काकुः, तया मथ्नाम्येवेत्यादिव्यङ्ग्यं वाच्यो यः प्रतिषेधः तन्निषेधशिरस्कतयैव प्रतीयते।

अथासुन्दरं लक्षयति—

**वाच्यान्निकृष्टं व्यङ्ग्यं चेदसुन्दरमितीरितम् ।**
**आतपः क्लेशसुलभं सुकृतं तव दर्शनम् ॥२०६॥**

यत्र व्यङ्ग्यं वाच्यापेक्षया निकर्षशलि, तत्रासुन्दरं यथा भवद्दर्शनं तपः क्लेशं विनैव सुलभं सुकृतमिति वाच्यापेक्षया निरतिशयानन्दकरत्वरूपं व्यङ्ग्यं चमत्कारातिशयजनकत्वाभावान्निकर्षशालीत्यसुन्दरम्।

यथा वा—

**वाणीरकुडुंगुड्डीणसउणी कोळाहळं सुणंतीए ।**
**घरकम्मवावुडा ए वहूइ सीअंति अंगाइ ॥**
**वानीरकुञ्जोड्डीनशकुनिकोलाहलं श्रृण्वन्त्याः ।**
**गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥**

वेतसनिकुञ्जे दत्तसंकेता काचित्तत्रत्यशकुन्तकोलाहलेन तत्र कामुकस्य गमनमनुमाय कार्याक्षमावयवा जातेति वाच्यम्। कामुको लतागृहं गत इति व्यङ्ग्यात् चमत्काराय कल्पते। अत्र वाच्यस्यैव चमत्कारकारित्वे सहृदया एव प्रमाणम्। अन्ये तु वाच्यस्याङ्गपादस्यानुभावतया साक्षाद्रसव्यञ्जकतया चमत्कारकारित्वं व्यङ्ग्यस्य तु वाच्यं द्वारीकृत्य विलम्बेन रसव्यञ्जकतेति वाच्यापेक्षया निकर्षशालितेत्याहुः।[१]

एवं गुणीभूतव्यङ्ग्यानुदाहृत्यामीषामपि ध्वनिवत् यथा संभवं भेदा ऊह्या इत्याह—

**एषां भेदा यथायोगं वेदितव्याश्च पूर्ववत् ॥२०७॥**

चकार एषामित्यनेनान्वेति। एषां गुणीभूतव्यङ्ग्यानां च भेदाः शुद्धाः सङ्करसंसृष्ट्यायत्ताश्च भेदाः पूर्ववत् ध्वनिवदेव यथा संभवं वेदितव्याः तत्रागूढ़प्रस्तावे 'जीवन्न भवामी'त्यर्थान्तरसंक्रमितवाच्य 'उदयाचलचुम्बी' त्यत्र अत्यन्ततिरस्कृतवाच्यः 'केनाप्यत्र मृगाक्षी-

---

१. M. निष्कर्ष° for निकर्ष°

त्यत्रार्थशक्तिमूलो ध्वनिश्च[१] उदाहृतः। अपराङ्गप्रस्तावे रसभावरसाभासभावाभासभावशान्ति-भावोदयभावसन्धिभावशबलता असंलक्ष्यक्रमव्यङ्ग्यप्रभेदा उदाहृताः। 'तथा जनस्थाने भ्रान्त' मित्यत्र शब्दशक्तिमूलानुरणनरूपोऽलङ्कारध्वनि श्चोदाहृतः। वाच्याङ्गप्रस्तावे 'विष'-मित्यत्र शब्दशक्तिमूलो वस्तुध्वनिश्चोदाहृतः। एवमन्येषां शुद्धभेदानां सङ्करसंसृष्ट्यायत्तभेदानां चोदाहरणान्यूह्यानि। यत्र वस्तुमात्रेणालंकारो व्यज्यते, तत्र न गुणीभूतव्यङ्ग्यतेत्यभिप्रेत्यात्र यथायोगमित्युक्तम्।

तदुक्तं ध्वनिकृता—

**व्यज्यन्ते वस्तुमात्रेण यदालंकृतयस्तदा ।**
**ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात् ॥**

इति। शब्दशक्तिमूलतया अर्थशक्तिमूलतया वा वस्तुमात्रेण यदालंकृतय उपमाद्या व्यज्यन्ते तदा तासामलंकृतीनां ध्वन्यङ्गता ध्वनिप्रभेदतैव न गुणीभूतव्यङ्ग्यता। यतो वाच्यकक्ष्यायामपि प्रायेण काव्यवृत्तेः काव्यतात्पर्यस्य तदाश्रयता तद्विषयतेति श्लोकार्थः। अयं भावः द्वयमिह चमत्कारप्रयोजकं चित्रत्वं व्यङ्ग्यत्वं चेति। ततश्चालंकारेण वस्तुध्वनौ व्यङ्ग्यत्वविवक्षया ध्वनित्वेऽपि चित्रत्वविवक्षया द्वयोस्तुल्यप्राधान्यात् गुणीभूतव्यङ्ग्यतापि संभवति। तथा वस्तुना वस्तुध्वनौ व्यङ्ग्यत्वविवक्षया ध्वनित्वेऽपि उभयोः चित्रत्वविवक्षया तुल्यप्राधान्यात् गुणी भूतव्यङ्ग्यतापि संभवति। तथा अलंकारेण अलंकारध्वनौ व्यङ्ग्यत्वविवक्षया ध्वनित्वेऽप्युभयोश्चित्रत्वविवक्षया तुल्यप्राधान्यात् गुणीभूतव्यङ्ग्यतापि संभवति। वस्तुना अलंकारध्वनौ तु व्यञ्जकस्य वस्तुनोऽचित्रत्वादव्यङ्ग्यत्वाच्च तुल्य-प्राधान्यविवक्षा न संभवतीति न गुणीभूतव्यङ्ग्यतासंभवः। किंतु ध्वनित्वमेवेत्याहुः। शब्दशक्तिमूलानुरणनरूपालंकारध्वनेरपि वस्तुमात्रव्यङ्ग्यालंकारध्वनेरपि वाच्याङ्गताद्यप्रा-धान्य प्रयोजकसद्भावे गुणीभूतव्यङ्ग्यता संभवत्येवेत्यप्यन्ये।

एवं गुणीभूतव्यङ्ग्यानामन्योन्यसंकरसंसृष्ट्यायत्तभेदानुक्त्वा तेषाम् उपमाद्य-लंकारैर्योगेऽपि बहवो भेदा भवन्तीत्याह—

**एषां योगेऽप्यलंकारैर्भेदाः स्युर्बहवस्तथा ॥२०८॥**

यथा स्वप्रभेदैः योगे बहवो भेदाः, तथा अलंकारैः योगेऽपि बहवो भेदा भवन्ति। अथालंकारैः अलंकारयुक्तैः गुणीभूतव्यङ्ग्यैश्च त्रिविधेन संकरेण संसृष्ट्या च पूर्वोक्तानां ध्वनिभेदानां योगे तु अनन्ता भेदा भवन्तीत्याह—

**अलंकारैर्गुणीभूतव्यङ्ग्यैश्चालंक्रियान्वितैः ।**
**संसृष्टिसंकरैर्योगे न गण्यन्ते ध्वनेर्भेदाः ॥२०९॥**

---

१. M. adds वस्तु before ध्वनिश्च

उपमाद्यलंकारैः प्रत्येकं ध्वनिभेदानां योगे तथा शुद्धैः स्वप्रभेदयुक्तैः अलंकारयुक्तैश्च गुणीभूतव्यङ्ग्यैः त्रिरूपेण संकरेण संसृष्ट्या च योगे ध्वनेर्भेदा न गणनापथमवतरन्ति।

तदुक्तं ध्वनिकृता—

**सगुणीभूतव्यङ्ग्यैः सालंकारैः सह प्रभेदैः ।**
**स्वैस्वैः संकरसंसृष्टिभ्यां पुनरप्युद्योतते बहुधा ॥**

इति स ध्वनिर्बहुधो द्योतत इत्यन्वयः। एवमनन्तभेदभिन्नस्यापि ध्वनेर्व्यङ्ग्यत्रैविध्येन त्रैविध्यं संग्रहेण दर्शयति—

**वस्तु ध्वनिरलंकारध्वनिर्वाच्येतरध्वनिः ।**
**इति त्रिधोदितोऽनन्तभेदभिन्नोऽप्ययं ध्वनिः ॥२१०॥**

वाच्यतरे रसभावादयो यद्यपि वस्त्वलंकारयोः वस्त्वलंकारशब्द वाच्यत्ववत् रसभावादीनामपि तत्तत्पदवाच्यत्वमस्ति तथापि वस्त्वलंकारौ व्यङ्ग्यावपि कदाचित् वाक्यार्थप्रतीतिकक्ष्यायामधिरोहतो रसभावादयः तु कदापि न वाक्यार्थप्रतीतिकक्ष्यामधिरोहन्तीति वाच्यभिन्ना इत्युच्यन्ते। ननु—

**गतस्ते मञ्चत्वं द्रुहिणहरिरुद्रेश्वरभृतः**
**शिवः स्वच्छछायाकपटघटितप्रच्छदपटः ।**
**त्वदीयानां भासां प्रतिफलनरागारुणतया**
**शरीरी श्रृङ्गारो रस इव दृशां दोग्धि कुतुकम् ॥**

हे शिवे! विधिविष्णुरुद्रेश्वररूपैः चतुर्भिः पादैः भृतः स्वच्छस्वकीयप्रभाव्याजप्रच्छदपटाच्छादितस्तव मञ्चतां गतः शिवस्त्वदीयप्रभाप्रतिबिम्बनजनितरागारुणतया मूर्तिमापन्नः श्रृङ्गाररसो नयनोत्सवं विधत्त इत्यादौ श्रृङ्गारपदप्रयोगे वाक्यार्थप्रतीतिविषयतापि रसादीनां दृश्यत इति कथं तेषां व्यञ्जनैकविषयतोच्यत इति चेन्न। तत्रापि देवीरूपविभावादिभिरेव रसाभिव्यक्तिः विभावाद्यभिव्यक्तस्यापि रसस्योत्प्रेक्षादिनिष्पादनाय परं श्रृङ्गारादिपदैरनुवादः। तदुक्तं ध्वनिकृता 'स्वशब्देन केवलमनूद्यत' इति। यदि श्रृङ्गारादि पदप्रयोगमात्राद्रसश्चर्व्येत, तदा श्रृङ्गारहास्यकरुणेत्यादि श्लोकपाठादेव सकलरसचर्वणाप्रसङ्ग स्यात्। अतः श्रृङ्गारादिपदप्रयोगेऽपि विभावाद्यप्रयोगे रसचर्वणानिष्पत्त्यभावात्तदप्रयोगेऽपि विभावादिप्रयोगे तदुत्पत्तेः अन्वयव्यतिरेकाभ्यां विभावादिव्यङ्ग्या एव रसादयः।

ननु एवमपि विभावादिवाचकपदैः लक्षणयैव रसप्रतीतिरस्तु, कृतमतिरिक्तव्यञ्जनाख्याव्यापारकल्पनयेति चेत्, न। मुख्यार्थबाधाभावात् प्रयोजनाभावाच्च लक्षणायाः तत्राप्रवृत्तेः गौरवस्य प्रामाणिकतया व्यञ्जनाकल्पनायामदोषात्। किं च न केवलं रसादिप्रतीत्यनुसारेणैव व्यञ्जनाकल्पनम्। किं तु वस्त्वलंकारप्रतीत्यर्थमपि सा कल्पनीया।

तथा हि लक्षणामूलयोः अर्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्ययोः 'त्वामस्मि

वच्मि विदुषाम्' उपकृतं बहु तत्र किमुच्यत' इत्यादिकयोः स्वायत्ते शब्दप्रयोगे प्रयोजनमन्तरेणावाचकपदप्रयोगानुपपत्त्या प्रयोजनमवश्यं वाच्यम्, तच्च प्रयोजनरूपं वस्तु व्यञ्जनां विना न प्रतीयत इति द्वितीयोल्लासे एव प्रतिपादितम्। तथा शब्दशक्तिमूलस्थले 'भद्रात्मनोदुरधिरोहतनोरि' त्यादावप्रकृतं यद्गजादिवसतु तेन यः प्रकृतस्योपमालंकारश्च तौ व्यञ्जनां विना न प्रतीयेते। तत्राभिधायाः प्रकरणेन प्राकरणिकार्थ एव नियन्त्रितत्वेनाप्राकरणिकार्थस्य तेनोपमादेश्चान्यतः प्रतीत्यसंभवात्। अर्थशक्तिमूलस्थलेऽपि व्यञ्जनां विना न गतिः। तथा हि-ये तावदभिहितानां पदानामन्वयमभिदधति भाट्टाः, तेकिल व्यक्तीनामानन्त्य व्यभिचाराभ्यां न संकेतग्रहविषयता। किं तु जात्यादीनां चतुर्णामेव तद्विषयता। सामान्ये गृहीतशक्तिकानामपि पदानां समभिव्याहारे सति आकाङ्क्षायोग्यतासत्तिवशादपदार्थोऽपि अपूर्व एव वाक्यार्थः प्रतीयत इति वदन्ति! तन्मते हि वाक्यार्थस्य घटानयनादिसंसर्गरूपस्यैव नाभिधेयता। का वार्ता व्यङ्ग्यस्याभिधेयतायाम्। प्राभाकरास्तु-'देवदत्त गामानय' इत्युत्तमवृद्धवाक्यप्रयोगसमनन्तरं सास्नादिमन्तं पदार्थं प्रयोज्य वृद्धे समानयति सति तटस्थो व्युत्पित्सुः सदानयनरूपया तच्चेष्टया अस्माद्वाक्यादयमर्थोऽनेनावगत इत्यनुमाया खण्डस्य तस्य वाक्यस्य अखण्डे तस्मिन् गवानयनसंसर्गरूपे वाक्यार्थे वाच्यवाचकभावलक्षणं संबन्धमवधारयति। पश्चात् 'चैत्र गां बधान' देवदत्ताश्वमानय इत्यादिप्रयोगेषु आवापोद्वापाभ्यं गवादिपदस्य आनयनाद्यन्विते तत्तदर्थे शक्तिमवधारयति। ततश्चान्वयव्यतिरेकाभ्यां प्रवृत्तिनिवृत्त्यन्यतरपरमेव वाक्यं प्रयोगार्हम्। न तु पदमात्रमर्थप्रतीत्यनुपयोगादिति वाक्यगतानामेव पदानामानयनादिपदार्थान्तरान्वितैः गवादिपदार्थैः सह वाच्यवाचकभावलक्षणसंबन्धेनान्वितानामेव संकेतो गृहत इति इतरान्वयविशिष्ट एव पदार्थो वाक्यार्थः। न तु पदार्थानां वैशिष्ट्यम्।

ननु 'गामानये' ति वाक्ये गोपदस्यानयनान्वितेसास्नादिमत्पिण्डे शक्तिग्रहः। 'गां बधानेति' वाक्ये बन्धनान्विते तदृशपिण्डे शक्तिग्रह इति नानार्थतापत्तेः सामान्यत इतरान्वितस्वार्थे शक्तिग्रहो वाच्यः। तथा च गोकर्मकानयनप्रतीतिः न स्यात्। हेत्वभावादिति चेन्न। सामान्यत इतरान्विते शक्तिग्रहेऽपि वाक्यार्थबोधदशायामानयनादिविशेषान्वित एव पदार्थोऽवबुध्यते अन्वितानां पदार्थानां विशेषरूपत्वात्।

उदाहरन्ति च–

**शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति**
**श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया ।**
**अन्यथानुपपत्त्या तु बुधेच्छक्तिं द्वयाश्रितम्**
**अर्थापत्त्येति बुद्ध्येत संबन्धं त्रिप्रमाणकम् ॥**

इति ।

शब्दं गामानयेत्याद्युत्तमवृद्धवाक्यं वृद्धं तद्वाक्यश्रवणानन्तरं प्रवर्तमानं प्रयोज्यवृद्धम्।

अभिधेयं, तदानीतं गवादिपदार्थं प्रत्यक्षप्रमाणेन श्रोत्रेण चक्षुषा च व्युत्पित्सुः पश्यति जानाति, ततश्च श्रोतुः प्रयोज्यवृद्धस्य चेष्टारूपेणानुमानेन लिङ्गेन तद्वाक्यजन्यगवानयन-संसर्गप्रतीतिमत्त्वं बुद्धयेत्। संबन्धं विना तस्य वाक्यस्य तादृगर्थप्रतीतिजनकत्वानुपपत्तेः अर्थापत्त्याश्रितयान्यथानुपपत्त्या द्वयाश्रितां वाच्यवाचकोभयनिष्ठां शक्तिं बुद्ध्येदित्युक्त-प्रकारेण त्रिप्रमाणकं प्रत्यक्षानुमानार्थापत्तिरूपप्रमाणत्रयसापेक्षं शब्दार्थयोः संबन्धं बुद्ध्येतेति कारिकार्थः।तस्मादितरान्विते पदार्थे शक्तिरित्याहुः।तेषामपि मते सामान्य रूपेतरपदार्थोन्वितो विशेषभूतस्वार्थ एव सङ्केतविषय इत्यानयनादिविशेषरूपेतरपदार्थान्वितो गवादिपदार्थादि विशेषभूतो यो वाक्यार्थः स पुनः अवाच्य[१] एव उत्तमवृद्धवाक्यानन्तर्गतत्वेन संकेताविषयत्वात्। व्यङ्ग्यार्थस्तु सुतरामवाच्य एव। यत्र तु "वापी। स्नातुमितो गतासि न पुनः तस्या-धमस्यान्तिकामि" त्यादौ तस्यान्तिकं न गतासीति निषेधरूपो वाक्यार्थः प्रतीतये। तत्र व्यङ्ग्यस्य विधेर्वाच्यत्ववार्ता दूरेतराम्। एवं चाभिहितान्वयवादेऽनन्वितः पदार्थो वाच्योऽन्विताभिधानवादे सामान्यत इतरान्वितस्वार्थविशेषो वाच्यः मतद्वयेऽपि वाक्यार्थस्तु अवाच्य एवेति व्यङ्ग्स्य वाच्यत्वकथा स्वप्नेऽपि न सङ्गता। प्राभाकरै[२]कदेशिनस्तु व्यङ्ग्यार्थो नैमित्तिकः शब्दस्तु तत्र निमित्तं च नैमित्तिकप्रतीतिमनुत्पाद्य न मध्ये विरमति। नैमित्तिकार्थोनुसारेण निमित्तस्य कल्प्यत्वात्। अतः किं वृत्त्यन्तरकल्पनयेत्याहुः तदयुक्तम्। शब्दस्य व्यङ्ग्यार्थं प्रति न तावत् कारकत्वेन निमित्तत्वम्। शब्दस्य घटाद्यर्थं प्रति अकारकत्वात् नापि ज्ञापकत्वेन यद्विध येन नियतसंबन्धवत्तया ज्ञातं तत्तस्य ज्ञापकं भवति। यथा धूमो वह्नेः। न चात्रशब्दस्य व्यङ्ग्येन नियतः संबन्धोऽस्ति। न च संकेत एव तादृशः संबन्ध इति वाच्यम्। तस्य त्वन्मतेऽपि इतरान्वितस्वार्थमात्रविषयत्वात्। अतः नियत-संबन्धाग्रहान्नैमित्तिकप्रतीतिरेव दुर्लभेति नैमित्तिकार्थानुसारेण निमित्तानि कल्प्यानीत्यविचारिताभिधानम्। भट्टलोल्लटप्रभृयस्तु यथा किल सकृदेव प्रयुक्तः सायको नोदनात्क्रियाविष्टः क्रियावशात् वेगाविष्टः वेगवशात् पुनश्च क्रियाविष्टः सन् परंपरया शत्रोरुरच्छेदमुरश्च भित्वा प्राणानपहरतीति तावत्पर्यन्तमिषोर्व्यापारः, तथा शब्दोऽपि सकृत्प्रयुक्तः पदार्थस्मृत्यादिद्वारा परंपरया स्वार्थप्रतिपत्तिमर्थान्तरप्रतीतिं च करोतीति तावत्पर्यन्तः शब्दस्य तात्पर्यरूपो व्यापारोऽस्तीति अविवादम्। अर्थान्तरे तात्पर्याभावे व्यञ्जनाया अपि अकल्प्यत्वात्। एवं च यत्परः शब्दः स शब्दार्थ इति न्यायात् न पुनः 'तस्याधमस्यान्तिक'मित्यादौ तदन्तिकमेव गतासीति विध्यादिरपि वाच्य एवेत्याहुः—तेऽपि 'यत्परः शब्द' अति न्यायस्य तात्पर्यानभिज्ञतया देवानां प्रियाः। तथाहि नायकस्य हि व्यापारः प्रत्यक्षसिद्धतया न पर्यनुयोज्यः शब्दस्य तु व्यापारः संकेताद्यौपाधिक इति

---

१. M. अवाच्यार्थ एव for अवाच्य एव

२. M. तदेकदेशिनस्तु for प्राभाकरैकदेशिनस्तु

यत्रैवापात्तस्य शब्दस्य व्यापारः तत्रैव तस्य शब्दस्य तात्पर्यवाच्यम्। अत एव 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इत्यत्र ऋत्विक्प्रचरणस्य चोष्णीषस्य चान्यतः प्राप्तत्वात् अदग्धदहनन्यायेनाप्राप्तं लौहित्यमात्रं विधेयमिति तत्रैव विधेः तात्पार्यमित्युपात्तशब्दगताभि-धारूपव्यापारविषय एव तात्पर्यमिति उपापत्तशब्दार्थ एव कारकत्वे तात्पर्यमुक्तम् दध्ना जुहोति 'इत्यत्र' होमस्याग्निहोत्रं जुहोति इत्यनेन प्राप्तत्वात् दध्नश्च लोकतः प्राप्तेः कारकत्वमात्रं विधेयमिति तत्रैव विधेः तात्पर्यमित्युपात्तशब्दार्थ एव कारकत्वे तात्पर्य मुक्तम्। अत एव च लोकेऽपि 'रक्तं पटं वये' त्यत्र त्रयाणामप्राप्तौ त्रिविधिर्वयनमात्रप्राप्तौ द्विविधिः पटवयनोभय प्राप्तावेकमात्रविधिः इत्युपात्तशब्दार्थ एव तत्र तात्पर्यमुक्तम्। न च लौहित्यादयः सिद्वरूपाः पुरुषप्रवृत्त्यविषयत्वात्कथं विधेया इत्युच्यन्त इति वाच्यम्। भूतानां सिद्धविषयाणां भव्यानां साध्यविषयाणां च शब्दानाम् उच्चारणे भूतं भव्यार्थतयैवोपदिश्यत इति दध्यादिकारकपदार्थाः [१]क्रियापदार्थैरन्वीयमाना अकिंचित्कुर्वतः कारकत्वासंभवात् प्रधानक्रिया नुकूलस्वस्वक्रियाभिसंबन्धास्ताभिरवान्तरक्रियाभिरभिसंबन्धात् साध्यमानतां प्राप्नुवन्तीति सिद्धानामपि न विधेयत्वविरोधः। तस्मादुपात्तशब्दव्यापारविषय एवार्थे तात्पर्यं वाच्यम्। अन्यथा प्रतीतमात्र एव तात्पर्यवर्णने 'पूर्वो भाती' त्यत्र अपरस्मिन्नपि तात्पर्यं स्यात्। पूर्वत्वापरत्वयोः ह्रस्वत्वदीर्घत्ववत् अन्योन्यसापेक्षत्वेन पूर्वत्वप्रतीतावपरत्व-प्रतीत्यवश्यंभावात्। न चैवं तत्र तात्पर्याभावे व्यञ्जनापि न स्यादित्युक्तमिति वाच्यम्। न हि तत्र तात्पर्यमेव नेत्युच्यते। किं तु तात्पर्यमस्त्येव। तच्च वृत्तिं विना न निर्वहतीति व्यञ्जनावश्यवाच्यत्वेवोच्यते। न च तर्हि तात्पर्यनिर्वाहाय तत्र अभिधैव कल्प्यतामिति वाच्यम्। व्यङ्ग्यार्थे संकेताग्रहेऽपि सहृदयस्य तदर्थप्रतीतेः अभिधाया असंभवात्।

ननु एवमूपात्तशब्दार्थ एव तात्पर्ये विषंभुङ्क्ष्व मा चास्य गृहे भुङ्क्था इत्यत्र विषं भुङ्क्ष्वेति वाक्यस्य सुहृद्वाक्यतया विषभक्षणविधिपरत्वासंभवात् रिपुगृहे न भेक्तव्यमित्यत्र तात्पर्यमिति प्रवादो न स्यात्। रिपुगृहभोजनस्य उपात्तशब्दार्थत्वाभावदिति चेन्न, तत्रहि मा चास्येति चकारो वाक्यद्वयस्यापि एकवाक्यतामापादयति। अनयथा चकारवैयर्थ्यात् एकवाक्यतायां चैकार्थत्वमावश्यकम्। स च आख्यातान्तपदवाच्ययोः भक्षणभोजनयोः द्वयोरपि प्रधानतया अङ्गाङ्गिभावेन अन्वयासंभवात् कथमर्थैकत्वमिति वाच्यम्। तयोः कृदन्तपदवाच्यताकल्पनेन द्विषद्गृहभोजनं विषभक्षणमिति द्विषद्गृहभोजने विषभक्षणत्वारोपेणैकार्थत्वसंभवात्। न च मास्यगृहे भुङ्क्था इत्येतावतैव निवृत्तिसिद्धौ विषभक्षणवाक्यं व्यर्थमिति वाच्यम्। द्विषद्गृहभोजनस्याधिकानिष्टसाधनत्वावगमस्यैव तत्फलत्वात् अतः तत्राप्येकवाक्यतापन्नपदार्थ एव तात्पर्यमिति न दोषः। यत्र तु 'विषं भुङ्क्ष्व' इत्येतावदेवोच्यते। तत्रापि सुहृद्वाक्यस्य विषभक्षणविधायकत्वानुपपत्त्या विषभक्षणादपि द्विषद्गृहभोजनं दुष्टमित्यभिप्रायस्थं वाक्यं कल्प्यत इति उपस्थितपदार्थ एव तात्पर्यम्। यद्वा विषपदस्य द्विषदन्ने भुङ्क्ष्वेत्यस्य च मा भुङ्क्था इत्यर्थे च लक्षणैव कल्प्यत

१. M. adds न before क्रियापदार्थैं

इति नानुपपत्तिः। प्रकृते च मुख्यार्थबाधाद्यभावान्न लक्षणा युक्तेति उक्तम्। यदि चैवमपि शब्दश्रवणानन्तरं यावानर्थोऽवगम्यते, तावति शब्दस्याभिधैव व्यापार इत्युच्यते। तदा 'ब्राह्मण पुत्रस्ते जातः, कन्या ते गर्भिणीति वाक्यश्रवणानन्तरं ब्राह्मणे हर्षशोकयोरपि तटस्थेनावगम्यमानत्वात् तयोरपि शब्दस्य अभिधाव्यापारः स्यात्।

ननु तत्र मुखप्रसादादिलिङ्गप्रतिसन्धाने सति सुखादिप्रतीतेः नाभिधा। प्रकृते तु न तथेति चेन्न। तर्हि लक्षणापि न स्यात्। लक्षणीयार्थस्यापि दीर्घदीर्घयाभिधयैव प्रतीतिसिद्धेः।

ननु तत्र मुख्यार्थबाधादिप्रतिसन्धानेनाभिधाया विच्छेदान्न दीर्घदीर्घतमया अभिधया लक्षणीयोपस्थितिसंभव इति लक्षणावश्यकीति चेन्न। तर्हि लक्षणामूलव्यङ्ग्यस्थले व्यञ्जनादुरपह्नवैव स्यादिति क्लृप्तत्वात् सैव सर्वत्र व्यङ्ग्यप्रतीतौ हेतुः अस्तु कृतं दीर्घदीर्घाभिधाकल्पनया। किञ्चैवं 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये परदौर्बल्यमर्थविप्रकर्षादिति सूत्रे कथं परस्य दौर्बल्येऽर्थविप्रकर्षस्य विलम्बेन विनियोजकत्वस्य हेतुत्वमाह—भगवान् जैमिनिः-अभिधायाः सर्वत्राविशेषात् श्रुत्यादीनां परदौर्बल्यप्रकारस्तु 'शास्त्रदीपिकाव्याख्यायामस्माभिः प्रपञ्चितः ग्रन्थविस्तरभयात् नेह प्रपञ्च्यते।

नु यावानर्थः शब्दश्रवणानन्तरं प्रतीयते तावानस्य युगपदभिधया प्रतीयत इति ब्रूमः। किं तु तत्तत् सहकारलाभे सति क्रमेणैवेति न जैमिनिसूत्रविरोध इति चेत् तथापि रुचिङ्कुर्वित्यत्र चिङ्कु शब्दस्य देशान्तरे स्त्रीत्वव्यञ्जकावयवविशेषवाचकतया प्रसिद्धत्वेनासभ्यार्थप्रतीतेः[1] दुष्टत्वमिति वक्ष्यते। तदयुक्तम्। अन्विताभिधानवादे तस्यार्थस्य पदार्थान्तरैः अनन्वितत्वेनानभिधेयतया व्यञ्जनानङ्गीकाराच्च प्रतीत्यविषयत्वप्रसङ्गेन अपरित्याज्यत्वात्। न च एवमपि अभिहितान्वयवादे तस्य दोषत्वमविरुद्धमिति वाच्यम्। तन्मतेऽपि प्रकरणादिनाभिधानियमनात् व्यञ्जनां बिना तदप्रतीतेः, किं च यदि व्यञ्जना न स्यात् तदानीमसाधुत्वादीनां क्वचिदपि अननुकूलत्वेन नित्यदोषता श्रुतिकटुत्वादेस्तु श्रृङ्गाराननुगुणस्यापि रौद्रानुगुणत्वादनित्यदोषतेति विभागकरणमनुपपन्नं स्यात्। रसादीनामभिधेयत्वे सर्वत्राभिधायास्तुल्यत्वात्। न च तथा विभागोऽनुपपन्न एवेति वाच्यम्[2]। [3]श्रृङ्गारे श्रुतिकटुशब्दप्रयोगे सर्वेषामुद्वेगस्यानुभवसिद्धत्वात् व्यञ्जनाङ्गीकारे तु श्रृङ्गारो माधुर्यरूपस्वगुणाभिव्यक्तिद्वारैवाभिव्यञ्जनीयः। माधुर्यं च सुकुमारवर्णाभिव्यङ्ग्यमिति [4]भवति। तत्र श्रुतिकटुत्वस्य दोषत्वं रौद्रे तु ओजो गुणः। स च दीप्त्यात्मक इति तद्व्यञ्जकानां शब्दानां श्रुतिकटुता न दोषः इति भवति तस्यानित्यदोषता। चमत्कारजननकादाचित्कताया एव अनित्यदोषताप्रयोजकत्वात्।

किञ्च—

**कला च सा कान्तिमती कलानिधेस्त्वमस्य लोकस्य च नेत्रकौमुदी।**
**द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया पिनाकिनः कपालिनः॥**

---

१. M. °असह्यार्थप्रतीतेः for असभ्यार्थप्रतीतेः

२. M. न्याय्यः for वाच्यम्।

३. M. सुकुमारे for श्रृङ्गारे।

४. M. om भवति।

तपश्चरन्तीं गिरिजां प्रति कुहनाब्रह्माचारिणो भगवतः तदभिप्रायपरिज्ञानार्थेयमुक्तिः। किं पिनाकिनः समागमाभ्यर्थनया सा सकलानन्दकरी कान्तिमती चन्द्रस्य कला च सकललोकलोचनचन्द्रिका त्वं चेत्युभयमपि संप्रति शोचनीयतां गतम्। पूर्वस्तु चन्द्रकलैकैव इदानीं त्वमपीत्यत्र गूढाकारस्य भगवतो देव्याशयपरिज्ञानाय स्वात्मगर्हणाप्रस्तावे 'कपालिन' इति पदमेव सर्वाकारेणामाङ्गल्यशीलत्वोन्मीलकतया शोच्यभावं[1], न तु पिनाकिन इति पदम्। तथा सति शौर्यप्रकाशनेन समधिगम्यति। अस्यैव उन्मीलनेन प्रस्तुता।

ननु गुणत्वादित्यश्लीलाख्यार्थदोषस्यापि क्वचिदननुगुणत्वे वा–नित्यदोषतेत्यालंकारिकरीतिर्व्यञ्जनानभ्युपगमे[2] विरुध्येत कपालिपिनाकिपदयोरभिधेय-भगवद्रूपस्थापने विशेषाभावात्। न च कपालसम्बन्धबोधकत्वमेव विशेष इति वाच्यम्। व्यञ्जनानभ्युपगमे तत्बोधस्याप्रयोजकत्वात् अन्यथा पिनाक संबन्धबोधनेनान्यत्रापि विशेषः किं न स्यात्? अत्र कपालिपदेन धर्मिणो भगवत एव उपस्थितेः कपालसंबन्धबोधो न स्यात्। अतः द्वयं गतं संप्रति तस्य शोच्यतामिति तस्येत्यन्यद्विशेष्यस्य पदं निधायैव पाठो युक्त इति यन्महिमभट्टेनोक्तं-तदयुक्तम्। अवयवसमुदायशक्तिभ्यां व्यञ्जनासमुदायशक्तिभ्यामिव धर्मधर्म्युभ्योपस्थितिसंभवात् इत्याहुः। किं च वाच्योऽर्थःसर्वान् प्रतिपत्तॄन् प्रत्येकरूप एव व्यङ्ग्यः। अर्थस्तु प्रकरणवक्तृप्रतिपत्तादिभेदेन भिन्नभिन्नरूप एवेति विरुद्धधर्माध्यासापातात्तयोः भेदेन तत्प्रतीत्युपयोगिनोः व्यापारयोरपि भेद आश्रयणीयः इति अभिधातो व्यञ्जनाभिन्नैव। तथाहि 'अस्तंगतः सवितेत्यत्र सूर्यास्तमयरूपो वाच्योऽर्थः सर्वान् प्रत्यविशिष्ट एव। व्यङ्ग्यार्थस्तु चौर्यप्रकरणे संप्रति अवस्कन्दनावसर इति, अभिसारिकाविषयेत्वभिसरण- मुपक्रम्यतामिति, सायंकृतसंकेतानायिकाविषये प्राप्तः ते प्रेयानिति, कर्मकरवक्तृकत्वे कर्मकरणात् निवर्तामह इति माणवकानां प्रतिपत्तृत्वे सन्ध्याविधिरुपक्रम्यतामिति दूरगमनोन्मुखविषये दूरं मा गा इति गोपालविषये सुरभयो गृहं प्रवेश्यन्तामिति तापार्तविषये सन्तापोऽधुना न भवतीति वणिग्विषये विक्रेयवस्तनि संह्रियन्तामिति विरहोत्कण्ठिता- वक्तृकत्वेऽनागतोऽद्यापि मे प्रेयानिति नानाविध एव प्रतीयते। अत एव वाच्यव्यङ्ग्ययोः संख्याभेदादपि भेदः।

किञ्च–

गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः।<br>
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्।

इत्यत्र विधिः वाच्यः। यदि गच्छसि तदा मरणं मे भावि तन्न गन्तव्यमिति निषेधा व्यंग्यः। तथा च पुनः तस्याधमस्यान्तिकमित्यत्र निषेधो वाच्यः। व्यङ्ग्यस्तु विधिरिति स्वरूप भेदादापि वाच्यव्यङ्ग्यौ भिन्नौ।

किञ्च–

**मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमिदं वदन्तु।**<br>
**सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम्॥**

इत्यत्र संशयरूपा वाच्यप्रतीतिः। व्यङ्ग्यप्रतीतिस्तु यदि विरक्तो वक्ता तदा

---

१. Pr. शोभावहं for शोच्यभावं

२. Pr. °आलंकारकरीति° for° आलंकारिकरीति°

भूधरसंबन्धिनां सानूनां सेव्यत्वं, यदि श्रृङ्गारी वक्ता तदा कामिनीसंबन्धिनां जघनानामिति निर्णयात्मिकेति प्रतीतिवैचित्र्यादपि तयोः भेदः।

किंच—

**कथमवनिप[1] दर्पोऽयं निशातासिधारा-**
**दलनगलितमूर्ध्नां यद्विषां स्वीकृता श्रीः।**
**ननु तव निहतारेरप्यसौ किं न नीता**
**त्रिदिवमपगताङ्गैर्वल्लभा कीर्तिरेभिः॥**

हे नृप ! निशितखड्गधाराखण्डितमूर्ध्नां द्विषां लक्ष्मीः स्वीकृतेत्ययं दर्पः कथं किमिति दृश्यसि ? यतः तव वल्लभा कीर्तिरपि अपगताङ्गैरपि तैर्दिवं नीते इत्यत्र निन्दा वाच्या स्तुतिर्व्यङ्ग्येति स्वरूपभेदादपि तौ भिन्नौ। किं च प्रथमं वाच्यप्रतीतिः पश्चाद्व्यङ्ग्य-प्रतीतिरिति प्रतीत्योः कालभेदादपि तयोः भेदः। तथा शब्दैकाश्रयाभिधा शब्दैकदेशतदर्थ-वर्णरचनाश्रया व्यञ्जनेत्याश्रयभेदादभिधातो भिन्ना व्यञ्जना। ताि शब्दार्थानुशासनज्ञानमात्रेण वाच्यप्रतीतिः प्रकरणादिसहायप्रतिभाविशेषसध्रीचीनेन तादृशज्ञानेने व्यङ्ग्यप्रतीतिरिति प्रतीतिकारणभेदादपि तयोः भेदः। किं च वाचकशब्दः प्रतिपत्तरि प्रतीतिमात्रमाधाय तस्मिन्[2] बोद्धृत्वव्यवहारमात्रे निमित्तं व्यञ्जकस्तु चमत्कृतिमाधाय विदग्धत्वव्यपदेशहेतुर्भवतीति कार्यभेदादपि भेदः। तथा—

**कस्य व ण होइ रोसो दट्ठूण पिआइ सव्वणं अहंर।**
**सभमरपडमग्धाइणि वारिअवामे सहसु एण्हिं॥**
**कस्य वा न भवति रोषो दृष्ट्वा प्रियाः सव्रणमधरम्॥**
**सभ्रमरपद्माघ्राणशीले वारितवामे सहसवेदानीम्॥**

उपपतिना खण्डिताधरां कांचित्प्रति भर्तरि समीपमागच्छति सति तमजानन्त्या इव कस्याश्चिद्विदग्धायाः तदवाद्यपरिहारार्थेऽयमुक्तिः। प्रियायाः सव्रणमधरं दृष्ट्वा कस्य रोषो न भवेत् ? जडस्यापि भवेदेव। वारिते निवारणायामपि वामे प्रतिकूलशालिनि संप्रति भर्तुरुपालम्भपरंपरां सहस्वेत्यत्र वाच्यं नायिकाविषयमेव। व्यङ्ग्यं तु नास्यापराधोऽस्तीति नायकविषयं प्रियाया एवाधरं दृष्ट्वा रोषो भवति नत्वप्रियायाः। तथा च न त्वयानन्दो विधेय इति सपत्नीविषयः। तथा यत इयं प्रिया ततः अनया विना नायं जीविष्यतीति ज्ञात्वा मया समाहितं तथा भ्रमरेण दष्टाधरेयं न ते प्रियेण, अतः न त्वया मन्युः कार्य इति सपत्नीविषय एव तन्न त्वयान्यथाकार्या मतिरिति प्रतिवेशिनीविषयः, तथाद्य मया यथाकथंचित् तवायमपराधः समाहितः। इतः परं सापराधया न भवितव्यमिति सखीविषय एव। तथास्फुटोऽपि अयमपराधः समाहितः। इतः परमपि यथेच्छमविनये कृतेऽपि परिहरामीति सखीविषय एवं। तथा मयायमपराधः समाहितः भवतीभिः तूष्णीं स्थितमिति सख्यन्तरविषयः।

---

१. Pr. कथमुपनिष for कथमवनिप

तथा कथंचित् अधुना समाहितमितः परमेवं प्रकटतरमविनयो न कार्य इत्युपपतिविषयः। तथायुक्त्यैवायमपराधः समाहित इति स्ववैदग्ध्यख्यापनं सख्यादिविषय इत्यादिविषयभेदादपि तयोः भेदः। यदि च एवं विषयभेदाादिविरुद्धकारणे सत्यपि वाच्यव्यङ्ग्ययोः अभेदः स्यात् तदा नीलपीतादावपि भेदः न स्यात्। उक्तं च अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्चेति। किं च अर्थवतामेव शब्दानां वाचकत्वं निरर्थकानां वर्णरचनादीनामपि व्यञ्जकतेति न वाचकत्वमेव व्यञ्जकत्वम्। किं च 'यत्परः शब्दः स शब्दार्थ' इति न्यायात् यत्र तात्पर्यविश्राान्तिः स शब्दवाच्य इति हि व्यङ्ग्यस्याप्यभिधेयता भवतोऽभिमता। तथा सति 'वाणीरकुडुङ्गुड्डीणे' त्यादि असुन्दरोदाहरणे वाच्योपस्कारार्थं व्यङ्ग्यमर्थमभिव्यज्य पुनः चमत्कारकारिणि वाच्यार्थ एव तात्पर्यं विश्राम्यतीति, तत्र व्यङ्ग्यार्थस्य तात्पर्यविश्रान्तिस्थानत्वाभावेन अभिधाविषयत्वासंभवात्। भवतापि व्यञ्जनाविषयत्वमङ्गीकार्यमिति सिद्धा व्यञ्जना।

ननु एवमपि लक्षणाविषय एव व्यङ्ग्यार्थोऽस्तु। तथा हि—

**प्रत्याख्यानरुचेः कृतं समुचितं भेमेन ते रक्षसा**
**सोढुं तच्च तथा त्वया कुलवधूर्धत्ते यथा चैचितीम्।**
**व्यर्थं संप्रति बिभ्रता धनुरिदं त्वद्व्यापदः साक्षिणा**
**रामेण प्रियजीवितेन तु कृतं पेम्णः प्रिये नोचितम्।।**

इदं मायासीताहननं श्रुतवतः भगवतः प्रलापवचनम्। हे प्रिये जानकि ! प्रत्याख्यानपरायास्ते भेमेन स्त्रीवधेऽप्यकरुणेन रावणेन समुचितं कृतं, तच्च निहननमपि तथा त्वया सोढ़ं यथा या कुलवधूरौचितीं धत्ते, अहो ! जानकीसमुचितमाचरितवतीति श्लाघत इति यावत्। त्वद्व्यापदः—साक्षिणा वृथैव धुनर्बिभ्रता प्रियजीवितेन प्राणरक्षणमात्रपरेण रामेण तु प्रेम्णः तव मयि यत्प्रेम तस्योचितं न कृतम् इत्यत्र रामपदेन कैतवस्नेहवत्त्वं पुरुष-कारपराङ्मुखत्वं च लक्षणया गम्यते। तथा 'कामं सन्तु दृढ़ं कठोरहृदयो रामोऽस्मि सर्व सह' इत्यत्र तु रामपदेन राज्यभ्रंशादिक्लेशसहतया पयोदाद्युद्दीपनकृतबाधासहिष्णुत्वम्। 'रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं पराम्' इत्यत्र लोकातिशायिपराक्रमनिधित्वं रामपदेन लक्षणया गमयते। तथा च रामपदलक्षणीयार्थोऽपि नानात्वं भजते तथा तादृशलक्षणीयार्भावबोद्धरि विदग्ध इति व्यपदेशश्च भवति। तादृशलक्ष्यावगमश्च वाच्यवन्न केवलं शब्दायत्तः, किं तु व्यङ्ग्यत्वाभिमतवदर्था यत्तश्च शक्यार्थप्रतीत्यनन्तरमेव तदुत्पत्तेः प्रकरणादि सापेक्षश्चेति लक्ष्यमाणातिरेकेण व्यङ्ग्यर्थाङ्गीकारो न युक्त इति चेत् न। रामपदेऽपि व्यञ्जनयैव तत्तदर्थप्रतीतिः इत्युक्तम्। अस्तु वा लक्षणया प्रतीतिः। तथापि यथा नानार्थशब्दस्थले अभिधेयस्य नानात्वेऽपि संकेतग्रहविषय एवार्थो नियमेन प्रतीयते नान्यः। तथा लक्षणीयार्थस्य नानात्वेऽपि मुख्यार्थनियतसंबन्ध्येव प्रतीयते। न तु अनियतसंबन्ध्यपि प्रतीयमानस्तु नियतसंबन्धे अनियतसंबनधश्च प्रकरणादिविशेषवशेन द्योत्यत इति व्यङ्ग्यस्य सर्वस्य न लक्ष्यता। यद्यपि चाविवक्षितवाच्यध्वनौ कथंचित्। लक्ष्यत्वशङ्कावतरति तथापि विवक्षितान्यपरवाच्यध्वनौ कथं लक्षणाशाङ्का ? मुख्यार्थबाधाभावाम्। यथा—

[१]अता एत्थ णुमज्जइ एत्थ अहं दिअहअं पुलो एसु।
मा पहिअ रत्तिअंधअ सेज्जाए महणु मज्जेसि॥
श्वश्रूरत्र[२] शेते अत्राहं दिवसकं विलोकय।
मा पथिक रात्र्यन्धक शय्यायामावयोः शयिष्यसे॥

अत्र मह[३] इत्यावयोरित्यर्थे ममेत्येकवचनत्वे शङ्कावहत्वात्। हे रात्र्यन्ध ! आवयोः शय्यायां रात्रौ शयिष्यसे तत् श्वश्रूरत्र शेते अहमत्र दिवसमित्यत्यन्तसंयोगे द्वितीया। सर्वं दिवसं पश्य अनेन दिवसेऽप्यन्यत्र न[४] गन्तव्यं, मिथो मुखावलोकनेन दिनमतिवाहयाव इति द्योत्यते "आवयोः शय्यायां शयिष्यस" इत्यनेन मम शय्याया मेवागन्तव्यमिति व्यज्यते। अत्र मुख्यार्थबाधाभावात् कथं लक्षणा ? न चात्रापि तात्पर्यानुपपत्त्या लक्षधा स्यादिति वाच्यम् । न हि अत्र निरूढ़लक्षणा येन फलं न कल्प्येत किं तु फललक्षणा, फलं च व्यञ्जनां विना न प्रतीयत इति प्राक् प्रतिपादितम्। किं च यथाभिधा संकेतग्रहसापेक्षार्थमवबोधयति, तथा लक्षणापि मुख्यार्थसंबन्धप्रयोजनसापेक्षैवार्थमवबोधयति। यत एव सापेक्षतयाभिधाप्राया। अत एव अभिधापुच्छ[५]भूता सेत्युच्यते। व्यञ्जना तु न तथेति न लक्षणया, तस्यान्यथासिद्धिः। अविवक्षितवाच्यध्वनावपि लक्षणात्मकमेव ध्वननम्। तत्रार्थान्तरसंक्रमितवाच्ये त्वामस्मि वच्मीत्यत्र वच्मिपदस्योपदेशे लक्षणा व्यङ्ग्यं तु अवश्यानुष्ठेयत्वमित्युक्तम्। 'उपकृतं बहु नामे' त्यत्यन्ततिरस्कृतवाच्येऽपि उपकृतमित्यादेः अनुपकृतत्वादौ लक्षणा। एवमुपकारिण्यपि मया परुषं नोच्यत इति स्वस्य महत्त्वं व्यङ्ग्यमित्युक्तम्[६]। किं च विवक्षितान्यपरवाच्येऽपि **अभिधामूलत्वेनापि व्यञ्जनाप्रवृत्तेः लक्षणानुगतत्वमेव तस्या न संभवतीति कुतो** लक्षणान्तर्भावः ? किं च आवाचकवर्णानुसारेणापि व्यञ्जनाया दर्शनात्। किं बहुनाप्यत्र त्रिभागावलोकनचेष्टादिगंतत्वेनापि प्रसिद्धेः वर्णानुसारितैव नास्ति। दूरेऽभिधानुसारितानियमो दूरेतरां लक्षणानुसारितानियमो दूरेतमां लक्षणान्तर्भावः तस्मादभिधालक्षणात्मक- **व्यापारद्वयातिरिक्तो ध्वननव्यञ्जनादिपर्यायो व्यापारो नापह्नवनीय एव।**

**ननु व्यङ्ग्यत्वाभिमते सर्वत्र त्वयापि तात्पर्यं वाच्यम्। नच वाणीरकुडुंगेत्याद्य- सुन्दरस्थले व्यङ्ग्येन तात्पर्यमित्युक्तमिति वाच्यम् तत्रापि तात्पर्यविश्रान्त्यभावेऽपि तात्पर्यस्य** अवश्याभ्युपेयत्वादन्यथा वृत्त्यन्तरकल्पनानुपपत्तेः। अतः तात्पर्यमेव व्यापारोऽस्तु। कृतं व्यञ्जनयेति चेत् ? न। तात्पर्यस्य वृत्तिसहकारितैव। न तु स्वतः वृत्तिकार्यकारिता। तथा

---

१. M. om श्लोक० 'अत्ता एत्थ°
२. णुमज्जशशीङ :– यद्वानीत्युपसर्गात्पदेर्मङ्क्षः नेरित उत्वं च।
३. महेत्यावयोरित्यर्थे निपात इति लोचनकारोक्तमनूदितमालोचनीयम्।
४. M. om न
५. M. पक्षभूता for पुच्छभूता
६. M. om °इत्युक्तम्।

सति लक्षणोच्छेदप्रसङ्गात्। तस्मात् तात्पर्यभिन्नापि व्यञ्जना नापह्नवनीया। किं च एवमभिधायं नान्तर्भवति। 'अत्ता एत्थे' त्यादौ वाच्यसंबन्धिप्रत्यायकत्वात्। नापि लक्षणायाम्। तथा हि—

**विवरीअरए लच्छीवम्हं दट्ठूण णाहिकमलत्थं।**
**हरिणोदाहिणणअणं रसाउलो झत्ति ठक्केइ॥**
**विपरीतरते लक्ष्मीर्ब्रह्मणं दृष्ट्वा नाभिकमलस्थम्।**
**हरेर्दक्षिणनयनं रसाकुला झडिति स्थगयति॥**

लक्ष्मीहरेर्नाभिकमलस्थं ब्रह्माणं दृष्ट्वा विपरीतरते रसाकुलाभिलाषाकुला लज्जाकुला वा हरेर्दक्षिणनयनं झडिति पिधत्त इत्यत्र हरिपदेन दक्षिणनयनस्य सूर्यता प्रतीयते। न हि लक्षणायां पदान्तरेण पदान्तरेऽर्थान्तरप्रतीतिः भवति। तथा दक्षिणनयनं पिधत्त इत्यनेन सूर्यस्यास्फुरणं, तेन च नाभिपद्मसङ्कोचः, तेन च ब्रह्मणः स्थगनं, तेन च संभोगस्वाच्छन्द्यमिति परंपरासंबन्धिनोऽपि प्रतीयन्ते, न हि लक्षणायां, तत्संभवतीत्यभिधा-लक्षणाभ्यां भिन्ना व्यञ्जनाङ्गीकार्या। येऽपि सत्यं ज्ञानमित्यादिवाक्यमेव वाचकम्। अखण्डाकारवृत्तिवेद्यमद्वितीयं ब्रह्मैव वाक्यार्थ इति वदन्ति। तैरपि अविद्यादशायां लौकिकवाक्येषु पदपदार्थव्युत्पत्तिः वाच्या। अन्यथा व्यवहारमात्रोच्छेदप्रसङ्गादिति तत्पक्षेऽपि 'निःशेषच्युतचन्दन' मित्यादौ विध्यादिर्व्यङ्ग्य एवेति अङ्गीकार्यम्। येऽप्यखण्डया बुध्या ग्राह्यो वाक्यस्फोट एव वाक्यार्थः। वाक्यमेव वाचकं न पदमिति वदन्ति। तेषामज्ञानविजृम्भितमेव **तथाकल्पनम्। पदपदार्थव्युत्पत्तेः अनुभवसिद्धत्वेन पदस्यावाचकत्वोक्त्यसंभवात्।** अतः तैरपि 'निःशेषेत्यादौ अधमादिपदानां व्यञ्जकत्वमकामैरपि अङ्गीकार्यम्। तदयमत्र निष्कर्षः। व्यङ्ग्योपस्थितिर्हि न लक्षणया संभवति। मुख्यार्थबाधाद्यभावेऽपि तदुपस्थितेः मुख्यार्थबाधस्थलेऽपि प्रयोजनं बिना लक्षणायाः असंभवेन प्रयोजनस्य व्यञ्जनाविषयत्वावश्यंभावात् **प्रयोजनस्यापि लक्ष्यत्वे प्रयोजनान्तर कल्पनापत्तिरित्यनवस्थेत्युक्तं प्राक् परंपरासंबन्धिनि** व्यङ्ग्ये लक्षणानुपपत्तेश्च। नाप्यधिया व्यङ्ग्योपस्थितिः स्वरूपकालाश्रयविषसंख्यादिविरुद्धधर्मवत्त्वेन वाच्यव्यङ्ग्ययोरैक्यायोगात्। 'भद्रात्मनो दुरधिरोहतनो' रित्यादिशब्दशक्तिमूलध्वनावभिधया नियमनादप्राकरणिकपदार्थेन उपमादौ संकेताग्रहाद्रसादेश्चापूर्वत्वेन प्रागनुपस्थितेः संकेतग्रहाविषयत्वात् प्रकरणादिसहायापेक्षानियमाच्च नाभिधया व्यङ्ग्योपस्थितिर्युक्ता न च प्रकरणादीनामक्लृप्तप्रवृत्त्यन्तरसहकारित्व कल्पनात् वरं, क्लृप्ताभिधासहकारित्व-कल्पनमिति वाच्यम्। अभिधाया अर्थोपस्थापकत्वकल्पनादशायां प्रकरणादीनां तत्सहकारित्वं न क्लृपतमित्यत्रापि तत्सहकारित्वकल्पनं न युक्तं स्वभावभेद प्रसङ्गात्। अन्यथा मुख्यार्थबाधादीनामपि तत्सहकारित्वकल्पनेन लक्ष्योपस्थितिसंभवे लक्षणापि न स्यादिति दिक्। अत्र व्यक्तिविवेककृतः— अनन्यलभ्य एवार्थे वृत्त्यन्तरकल्पनं युक्तम्। प्रकृते चानुमानादेव व्यङ्ग्योपस्थितिसंभवात् न वृत्त्यन्तरकल्पना युक्ता। तथा हि न

तावदिहासंबद्धोऽर्थो व्यज्यते, अतिप्रसङ्गात्। अत एव अनियतसंबन्धोऽपि न व्यज्यते। किं तु नियतसंबन्धवत एव व्यक्तिरिति त्वयापि वाच्यम्। ततश्च नियतसंबन्धरूपव्याप्तिमता पक्षसपक्षसत्त्वविपक्षव्यावृत्तत्वात्मकरूपत्रयवता लिङ्गेनैव व्यङ्ग्यार्थानुमितिरुत्पद्यते।

यथा

**भम धम्मिअ वीसद्धं सासुणओ अज्ज मारिओ तेण।**
**गोलाणइकच्छकुडुंगवासिणा दरिअसीहेण।।**
**भ्रम धार्मिक विश्रब्धः स शुनकोऽद्य मारितस्तेन।**
**गोदावरीकच्छकुडुंगवासिना दृप्तसिंहेन।।**

इयं संकेतनिकुञ्जे कुसुमाद्यर्थिनो धार्मिकस्य भ्रमणनिवारणपरायाः स्वैरिण्या उक्तिः। हे धार्मिक। यस्ते भीत्युत्कर्षमकार्षीत्स शुनकः, तेन यः कर्णाकर्णिकया श्रुतः, तेन गोदावरीनिकुञ्जे गूढं वर्तमानेन दृप्तसिंहेन मारितः। तद्विश्रब्धं शङ्कां विना भ्रम प्राप्तकाले लोट्। विश्रब्धभ्रमणस्य प्राप्तः काल इति यावत्। अत्र गोदावरीतीरे न भ्रमितव्यमिति यत्तव्द्यङ्ग्यत्वेनाभिमतं तद्गृहे शुनकनिवृत्त्या विधीयमानेन भ्रमणेनानुमानादेव सिध्यति। न च गृहे भ्रमणं गोदावरीतीरे भ्रमणाभावं कथमनुमापयेत् ? वैयधिकरण्यादिति वाच्यम्। गोदावरीतीरवासिसिंहकृतशुनकनिवृत्त्या गृहे भ्रमणप्रतिपादकेन अनेन वाक्येन गृहे शुनकनिवृत्तिवत् गोदावरीतीरे सिंहसद्भावोऽपि प्रतिपाद्यते। ततश्च गोदावरीनिकुञ्जो भीरुभ्रमणायोग्यः भयकारणवत्त्वात् श्वाभीरुभ्रमणायोग्यो वा सिंहाक्रान्तत्वादिति वानुमानम्। अत्र सारमयभयादपि भ्रमितुमप्रभवन् कथं पञ्चास्य संचारोचिते देशे परिभ्रमेदिति सिंहवत्त्वस्य **श्वाभीरुभ्रमणायोग्यत्वसाधकत्वं संभवतीति ध्येयम्। यद्यद्भीरुभ्रमणयोग्यं तत्तद्भयकारणरहितं** यथा गृहमिति व्यतिरेकव्याप्तिप्रदर्शनपरं पूर्वार्धम्। गोदावरीनिकुञ्जश्च भीरुभ्रमणयोग्यताव्यापकभयकारणराहित्यविरुद्धभयकारणवान्। अतो न भीरुभ्रमणयोग्य इत्यनुमानाद्गोदावरीतीरे न भ्रमितव्यमिति सिद्धेः किं व्यञ्जनया इत्याहुः। तदयुक्तम्। भीरुरपि गुरोः प्रभोर्वा निदेशेन कान्तानुरागेण निधिलाभनिश्चयेन वा सत्यपि भयकारणे भ्रमत्येव। ततश्च उत्कटभ्रमणकारणराहित्यमत्रोपाधिरित्यनैकान्तिको हेतुः शुनकस्पर्शादिः निषिद्धतया शुनकात् बिभ्यदपि कश्चिद्वीरत्वेन सिंहान्न बिभेति। अतश्च गोदावरीकुञ्जश्च भीरुभ्रमणायोग्यः सिंहवत्त्वादिति हेतुरपि व्यभिचारी। यदि च शुनकाद्बिभ्यतोऽपि धार्मिकस्य वीरत्वेन सिंहमृगयौत्सुक्येन निश्चिते गोदावरीकुञ्जो नैतद्भ्रमणयोग्यः सिंहवत्त्वादिति प्रयुज्यते तदा साध्याभावव्याप्ततया विरुद्धता।

ननु गोदावरीकच्छभ्रमणं भयसाधनं भयकारणवद्देशाधिकरणकभ्रमणत्वादित्येव साध्यते। तथा च नोक्तदोष इति चेत् तथापि गोदावरीतीरे सिंहसद्भावः प्रत्यक्षादनुमानाद्वा न निश्चितः किं तु वचनादेव वचनजन्यज्ञानस्य च वक्तुराप्तत्वसन्देहेनाप्रामाण्यशङ्कास्कन्दि-तत्वेन सन्दिग्धासिद्धो हेतुः। वस्तुतस्तु तत्र सिंहाभावे निश्चितेऽपि एतादृशविदग्धवाक्यात्तत्र न भ्रमितव्यमित्येतदाशय इति विदग्धैः अनुभूयमानत्वेन नानुमानशङ्कावकाशः। तथा

'निःशेषच्युतचन्दन' मित्यादौ यानि चन्दनच्यवनादीन्युपभोगचिह्नतया उक्तानि स्नानादिकारणान्तरसाधारणान्येवेति व्याप्त्यभावादनैकान्तिकतया न कथंचिदपि लिङ्गविधया दूतीसंभोगगमवबोधयन्ति। यद्यपि अत्र चन्दनच्यवनादेः संभोगासाधारण्यं प्राक् प्रतिपादितम् तथापि प्रकृतवाक्यात् तस्य संभोगव्याप्त्यभावावच्छेदकरूणेणोपस्थितेर्नानुमापकत्वसंभवः। न चैवं नियतसंबन्धापरिज्ञाने व्यञ्जकत्वमपि अनुपपन्नमतिप्रसङ्गात् इत्युक्तमिति वाच्यम्। अधमपदसहायतयैव तेषां व्यञ्जकत्वाङ्गीकारेण नियतसंबनधाभावेऽपि अतिप्रसङ्गाभावात्। अत एव वाक्यार्थानां सर्वत्र वक्त्रादिवैशिष्ट्यज्ञानोपहितानामेव व्यञ्जकत्वमुक्तम्।

ननु तर्हि यथाधमपदार्थसहकारेण चन्दनच्यवनादीनां व्यञ्जकत्वं, तथा नानुमापकत्वमपि स्यादिति चेन्न। अधमत्वस्यात्रानिश्चयात् प्रकृतवाक्यस्य कुपितकामिनीवक्तृकत्वेनार्थाव्यभिचारित्वानिश्चयात्। न च एवं सन्दिग्धव्याप्तिपक्षधर्मता, केनाधमपदार्थेन व्यञ्जनमपि कथमिति वाच्यम्। व्यक्त्विादिना संभाव्यमानादेव तादृशादर्था-दर्थान्तरप्रतीतेः अनुभवबलेन स्वीकारात् अनिश्चितत्वं व्यञ्जनायां साधकत्वमेवावलम्बत इतिं अनवद्यम्।

इति श्रीदन्तिद्योतिदिवाप्रदीपाङ्कविश्वामित्रवंशमुक्ताफललक्ष्मीभवस्वामितनूजसर्वत-न्त्रस्वतन्त्रसर्वक्रतुविश्वजिदतिरात्रयाजिसत्यमङ्गलरत्नखेटश्रीनिवासदीक्षिततनयस्यकामा-क्षीगर्भसंभवस्य श्रीमदर्धनारीश्वरदीक्षितगुरुचरणसहजतालब्धविद्यावैशद्यस्य श्रीराजचूडामणिदीक्षितस्य कृतिषु काव्यदर्पणे पञ्चम उल्लासः।

# षष्ठ उल्लासः

अथावसरसङ्गत्या चित्रभेदान् दर्शयन् पूर्वोक्त–
मनुभाषते–

**अव्यङ्ग्यमपि यच्चारु तत्काव्यमधमं मतम्।**
**शब्दार्थचित्रभेदेन तद्विधेति पुरोदितम्॥२११॥**

यदव्यङ्ग्यमपि चारु गुणालंकारयुक्तं तत्काव्यमधमकाव्यम् तच्च काव्यं शब्दचित्रमर्थचित्रं चेति द्विविधमिति प्रथमोल्लासे एव प्रतिपादितम्।

ननु एवं पुनरारम्भवैयर्थ्यमित्यत आह–

**शब्दस्य तत्र प्राधान्ये शब्दचित्रमुदाहृतम्।**
**अर्थस्य तत्र प्राधान्ये त्वर्थचित्रमिति स्थितिः॥२१२॥**

तत्र शब्दार्थयोर्मध्ये शब्दस्य शब्दालंकारस्य प्राधान्ये शब्दचित्रमर्थालंकारस्य प्राधान्ये त्वर्थचित्रमिति स्थितिः। एवञ्च प्रथमोल्लासे 'सवच्छन्दोच्छल' दित्यादौ यत्र वा अर्थालंकारः तत्र शब्दचित्रं, तथा यत्र विनिर्गतं मानदमित्यादौ न शब्दालंकारः, तत्र अर्थचित्रमुदाहृतम्। इह तु यत्रोभयोरपि चावस्थितिः, तत्र कथं व्यवस्था इत्याकाङ्क्षायां प्राधान्याप्रधान्याभ्यां व्यवस्थेति प्रतिपादनार्थं पुनरारम्भः। न च इयं व्यवस्थापि पूर्वमेव क्रियतामिति वाच्यम्। तत्र काव्यत्रैविध्यकथनमात्रस्यैव प्रस्तुतत्वेन तद्भेदप्रदर्शनस्य तत्र प्रासङ्गिकतया उक्तव्यवस्थाकरणस्यानवसरदुस्थत्वादिह तु प्राप्तावसरतया पूर्वोक्तमनूद्य व्यवस्था क्रियत इति न पुनरारम्भवैयर्थ्यमिति भावः। किं च रूपकादयोऽर्थालंकारा एव काव्यशोभावहा इति केचित् अनुप्रासादयः शब्दालंकारा एव तथा इत्यपरे तत्र एकैकपक्षो-पक्षेपानुगुणत्वादाद्योल्लासोदाहरणद्वयं यतः 'स्वच्छन्दोच्छलदि त्यत्र न कदाचिदर्थालंकारशङ्का विनिर्गतमित्यत्र च न शब्दालंकारः। एवं च मतद्वयेऽपि पूर्वोक्तो द्विधा विभागोऽनुप्पन्न इति शङ्कनिरासार्थः पुनरारम्भ इत्यभिप्रेत्याह–

**अलंकारानर्थगतानेके शब्दगतान्परे।**
**प्राहुर्नियामकाभावात् ते भवन्त्युभयाश्रिताः॥२१३॥**

अर्थवत एवं शब्दस्य काव्यत्वं, न तु शब्दमात्रस्य मर्दलशब्दादेरपि काव्यत्वप्रसङ्गात्। अतः अर्थमुखानवेक्षिणः शब्दस्य न काव्यत्वं किं तु अर्थस्यैव ततश्च काव्यशोभाकरा अलंकारा अर्थगता एव वाच्या इति रूपकादय एवालंकारा नानुप्रासादय इत्येके प्राहुः–

अपरे तु शब्दानुपस्थापितस्य अर्थस्य चमत्कारकारित्वाभावेन आवश्यकत्वात् शब्द एव काव्यमिति शब्दश्रिता अनुप्रासादय एवालंकारा, न त्वर्थगतारूपकादय इत्याहुः– वस्तुतस्तु शब्दावच्छिन्नोऽर्थोऽर्थावच्छिन्नः शब्दश्च काव्यं, न तु एकैकमात्रं विनिगमनाविरहात्। किञ्च व्यङ्ग्यप्रतीत्यनुकूलमेव काव्यं व्यङ्ग्यप्रतीत्यनुकूलता च शब्दार्थयोः तुल्येति शब्दार्थाविव काव्यमिति प्रतिपादितम् प्राक्। ततश्च शब्दश्रिता अनुप्रासादयोऽर्थाश्रिता रूपकादयश्च अलंकारा इति तत्त्वम्। तदुक्तम्–

**रूपकादिरलंकारस्तस्यान्यैर्बहुधोदितम्।**
**न कान्तमपि निर्भूषं विभाति वनिताननम्॥**
**रूपकादिमलंकारं बाह्यमाचक्षते परे।**
**सुपां तिङाश्च व्युत्पतिं वाचां वाञ्छन्त्यलंकृतिम्॥**
**तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी।**
**शब्दाभिधेयालंकारभेदादिष्टं द्वयं तु नः॥ इति।**

अयमर्थः। तस्य काव्यस्य रूपकादिरेवालंकारो नानुप्रासादिः इत्यन्यैः बहुधा कथितम्।

ननु व्यङ्ग्यभूतरसानुगुण्ययुक्तस्य शब्दस्य किमलंकारैः इत्यत उक्तं न कान्तमपीति। यथा स्वतः कान्तमपि ताटङ्कादिभूषणाभावे कान्तामुखं नातीव शोभते, तद्वन्निरलंकारं काव्यमपीति काव्यशोभातिषयार्थमलंकारादर इति भावः। अथ शब्दालंकारवादिनां मतमाह– रूपकादिमर्थालंकारं बाह्यं काव्यबहिर्भूतमेव परे वदन्ति। शब्दस्यैव काव्यत्वादिति **भावः। सुबन्तानां तिङन्तानां च विशेषेणोत्पत्तिं तत्तद्विच्छित्त्यनुगुणतया निवेशनमनुप्रासादितमिति** यावत् वाचां शब्दात्मकानां काव्यानाम् अलंकृतिमाचक्षते। स्वमतमाह तदेतदिति तदेतत्सुपां तिङां च निवेशनं सौशब्द्यं सुशब्दत्वं शब्दालंकारमेवेति यावत्। अर्थानां रूपकादीनां विनिवेशनं तु नेदृशं, न शब्दालंकारात्मकम्। अतः विनिगमनाविरहात् **शब्दालंकारो अर्थालंकारश्चेति द्वयमपि अस्माकं काव्यशोभाकरत्वेनेष्टमिति। तस्मात् द्वयोरपि काव्यशोभाकरत्वेनावश्यकत्वात् न विभागानुपपत्तिरिति भावः। शब्दचित्रं यथा–**

**प्रथममरुणच्छायस्तावत्ततः कनकप्रभ-**
**स्तदनु विरहोत्ताम्यतन्वीकपोलतलद्युतिः।**
**उदयति ततो ध्वांतध्वंसक्षमः क्षणदामुखे**
**सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः॥**

अत्रोत्तरार्धे तत इति पदं सरसबिसिनीत्यनेन संबध्यते। अत्र केवलं व्यञ्जनानामावृत्तेः वृत्त्यनुप्रासः प्रधानं, तस्याद्यन्तनिर्वाहादुपमालंकारस्तु अप्रधानं, तस्य क्वाचित्कत्वात्, अत्र अर्थचित्रं यथा–

ते दृष्टिमात्रपतिता अपि कस्य नान्तः-
क्षोभाय पक्ष्मलदृशामलकाः खलाश्च।
नीचाः सदैव सविलासमलीकलग्ना
ये कालतां कुटिलतामिव न त्यजन्ति॥

ये नीचा अर्वाक्स्वभावाः नैच्यशीलाश्च सविलासं संभ्रमं सविभ्रमं च अलीकलग्नाः ललाटलग्नाः सौजन्यनटनेनानृतलग्नाश्च ये कालतां नीलतां मलिनहृदयतां च कुटिलतां वक्रतां गूढविप्रियकारितां च न त्यजन्ति ते पक्ष्मलदृशामलकाः खलाश्च हष्टमात्राऽपि कस्यान्तःक्षोभाय न भवन्ति इत्यत्र द्वयोः नीचत्वात् एकगुणान्वयात् क्षोभकरणरूपैक-क्रियान्वयाच्च श्लेषपरिपोषितः समुच्चयालंकारः प्रधानमाद्यन्तनिर्वाहादनुप्रासस्तु क्वचित् सन्नपि अनिर्वाहादप्रधानम्।

ननु शब्दचित्रे चन्द्रोदयस्योद्दीपनस्यार्थचित्रे च काकिनीलक्षणस्यालम्बनस्य च वर्ण्यतया श्रृङ्गारो व्यङ्ग्य इति अव्यङ्ग्यत्वाभावात् कथमत्र अधमकाव्यत्वमिति चेत्-तथापि स्फुटं रसस्यानुपलम्भादस्फटव्यङ्ग्यत्वमेवाव्यङ्ग्यत्वमिति प्रागेव प्रतिपादितत्वात्। अस्फुटत्वं च विवक्षानारूढ़त्वम्। यदाह-

रसभावादिविषयविवक्षाविरहे सति।
अलंकारनिबन्धो यस्य चित्रविषयो मत इति ॥२१४॥

अत्र व्यङ्ग्यस्य विवक्षाविषयत्वे तु नाधमकाव्यत्वम्। यदाह-

रसादिषु विवक्षा तु स्यात्तत्पर्यवती यदा।
तदा नास्त्येव तत्काव्यं ध्वनेर्यत्तु न गोचर इति॥२१५॥

अन्ततः सर्वत्र वर्णनीयविषयकरतिभावस्यैव व्यङ्ग्यस्य सत्त्वात् अविवक्षयैव निर्वाह्यं विवक्षा च कवेः सहृदयस्य वा कविविवक्षापथागोचरस्यापि व्यङ्ग्यस्य सहृदयैरनुभूयमानत्वात् वस्तुतस्तु व्यङ्ग्ये सहृदयानुभूतिरेवोत्तमत्वादिप्रयोजिकेत्याहुः- अत्र शब्दचित्रार्थचित्रभेदेन द्वैविध्यकथनं न्यूनताव्यवच्छेदार्थमेव। न तु अधिकव्यवच्छेदार्थमपि। ततश्च शब्दार्थचित्रयोः द्वयोरपि प्राधान्ये विनिगमनाविरहादुभयचित्रं यथा-

भद्रं पक्ष्मलितं करोतु भवतां पाटल्यमाविभ्रती
पार्वत्याः पदयावक्रेन जगतां पत्युर्जटामण्डली।
या नाट्यारभटीषु संभ्रमिभुजादण्डप्रकाण्डार्भटी
सद्यः संघटिताविभ्रमतटिद्वाटीरुचं टीकते॥

---

१. Pr प्रधानानि for प्रधाने

अत्रानुप्रासः पार्वतीपदयावकेन पाटल्यमाबिभ्रतीति गूढ़हेतूत्प्रेक्षा तटिद्वाटीरुचं टीकत इति निदर्शना च प्रधाने[1] एव इति उभयचित्रता अत्र काव्यरूपधर्मिप्रस्तावात् दिङ्मात्रमुक्तं तदवान्तरभेदाश्च शब्दार्थालंकारात्मकधर्मनिरूपणात् स्वावसरे करिष्यमाणादेव निरूपिता भवेयुरिति नेह निरूप्यन्ते।

इति श्रीदन्तिद्योतिदिवाप्रदीपाङ्कविश्वामित्रवंशमुक्ताफललक्ष्मीभवस्वामिभट्टसुकृत-परिपाकाद्वैतविद्याचार्यसाठिनचित्य विश्वजिदतिरात्रयाजिसत्यमङ्गलरत्नखेट श्रीनिवासदीक्षित-तनयस्य कामाक्षीगभसंभवस्य श्रीमदर्धनारीश्वरदीक्षितगुरुचरणलब्धविद्यावैशद्यस्य श्रीराजचूडामणिदीक्षितस्य कृतिषु काव्यदर्पणे षष्ठ उल्लासः।

# राजचूडामणिकृतकाव्यदर्पणे कारिकाणां सूची

# राजचूडामणिकृतकाव्यदर्पणे कारिकाणां सूची

# VII परिशीलिताः ग्रन्थाः


| ग्रन्थः | संपादकः | प्रकाशकः |
|---|---|---|
| उत्तररामचरितम् | P.V. Kane | Motilal Banarasidass, Delhi, Varanasi, Bungalow Road, Jawahar nagar Delhi. |
| कर्पूरमञ्जरी | Dr. Sudarsamlal Jain | Bhartiya Vidya Prakashan Kachaudigali, Varanasi 1983 |
| काव्यप्रकाश | Raghumath Damodar Karmarkar | Bhandarkar Oriental Research Institute Poona–4, 1965 |
| काव्यादर्शः | V Krishnanacharya | Srinivasa Mudaranaaya 1936 |
| कुमारसंभवम् | Sri Pandit Pradyamma | Chokhamba Vidya Bhawan Varanasi, 1981 |
| कुवलयानन्दः | Narayana Rama Acharya | Nirnaya Sagar Press, Bombay–2, 1955 |
| गाथासप्तशती | Bhatta Sri Mathuranatha | Moti Lal banarsidass, Delhi, Patna 1983 |
| चन्द्रालोकः | Dr. Shri Krishnamani | Chowkhamba Prakashan Varanasi |
| (ध्व० लो) ध्वन्या लोकः | Durga Prasad Parab | Munshiram Manoharlal Publisher, Pvt. Ltd. P.B. 5715 No. 54, Rani Jhansi Road, New Delhi, 1983 |
| सरस्वतीकण्ठाभरणम् | Dr. Viswanath Bhattachrya | Kasi Hindu Viswa Vidyaalaya, Varanasi-5, 1979 |